भाष्यम्

कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम् । सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि । उच्यते । न तावदयमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात्, अपरोक्षत्वाच्च; प्रत्यगात्मप्रसिद्धेः । न चाय-

प्रकटार्थविवणरम्

शुक्तिसत्त्वेव भात्यत्र यथेदन्तावभासते ।
अथ वा त्रिविधं सत्त्वं वैतथ्यं तथ्यभेदतः ॥

देशान्तरादिसत्त्वे न प्रतिभासेत तत्तदा [था] ।
परिशेषादिना रूप्यमनिर्वाच्यमिति स्थितम् ॥

यद्यप्येवंलक्षणोऽध्यासो लोके, तथापि नात्मनि सम्भवतीत्याह—कथं पुनरिति ॥ परत्रपदोपात्तमधिष्ठानं लोके विषयभूतं पुरोऽवस्थितञ्च दृष्टम्, प्रत्यगात्मनस्त्वात्मत्वादेवाविषयत्वादपुरोऽवस्थितत्वाच्चाधिष्ठानत्वायोग्यत्वात् परत्रेति लक्षणांशो न सम्भवतीत्यर्थः । विषयत्वस्याधिष्ठानत्वे प्रयोजकत्वमङ्गीकृत्य तावदुत्तरमुच्यते—न तावदिति ॥ अस्मच्छब्दोल्लिखितः प्रत्ययो नाम जीवाकाराहंवृत्तिः । अहंवृत्त्याकारपरिणतं ह्यन्तःकरणं जीवाभिव्यञ्जकमिष्यते अन्यथा सर्वदाहमहमिति जीवावभासप्रसङ्गात् । तस्याः स्वरूपणाविषयोऽपि अध्यस्ताहङ्कर्तृत्वादिविशिष्टरूपेण विषयो भवतीत्यधिष्ठानत्वयोग्यो भवतीत्यर्थः । बीजाङ्कुरवदनादित्वाच्चाध्यासपरम्पराया नेतरेतराश्रयत्वम्; किञ्च प्रकाशमात्रेणाधिष्ठानत्वम्, न विषयत्वेन; केवलव्यतिरेकाभावात्, सामान्यादेरप्रियैकल्यवद्बहिरङ्गत्वात् स्वतश्चित्स्फुरणस्य सामान्यग्रहणस्य वेदार्थतो ज्ञानेन, स्वाभाविकाना[काज्ञाना]वच्छेदास्फुरणस्य विशेषाग्रहणस्य च सम्भवात् । अतः स्वप्रकाशत्वेनापरोक्षत्वात् घटते स्वोपाध्यज्ञानमौढ्येऽध्यास इत्याह—अपरोक्षत्वादिति ॥ यद्यपि स्वप्रकाशे तत्त्वतो मौढ्यं न घटते, तथापि मूढोऽस्मीत्याद्यनु-

१. TM. आत्मत्वाविषय.
२. A. प्रत्ययो युष्मज्जीवा-
३. TM करांहं.
४. T, T[1] and P किन्तु.
५. A. मानत्वेनाधि.
६. T[1], P and TM. वेदान्तोत्थ-
७. A. मौढ्याध्या-

### भाष्यम्

मस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति ।

### प्रकटार्थविवरणम्

भवस्य सार्वजनीनत्वाद्भानौ तमोऽध्यासवत्संविदि जाड्याध्यासवद्वाध्यासिकं सम्भवति । स्वप्रकाशत्वमेव कुतः सिद्धमित्याशङ्क्याह—प्रत्यगात्मप्रसिद्धेरिति ॥ अस्ति तावत् प्रत्यगात्मप्रसिद्धिः मयेदं विदितमिति, इतरथा स्वपरसंवेद्ययोरविशेषापत्तेः । स चात्मात्मनः न स्वगोचरः संविदो वैरूप्यापातात् । प्रयोगोऽपि नात्मा स्वाश्रयप्रकाशप्रकाश्यः प्रकाशकत्वात् प्रदीपवत् । नापि विषयसंविद्बलात् तदन्तरेणापि स्फुरणात्। प्रयोगोऽपि नात्मा स्वातिरेकिसंविदधीनसिद्धिः, संवित्कर्मतामन्तरेणापरोक्षत्वात्, संवेदनवत् ! नाप्यनुमानप्रमाभ्यासः, [नागमाभ्यां] अबाधितापरोक्षप्रतिभासत्वात् । परिशेषात् स्वतस्सिद्धिरित्यर्थः । तथा च प्रयोगः आत्मा स्वप्रकाशः ततोऽन्यथानुपपद्यमानत्वे सति प्रकाशमानत्वात् न य एवं न स एवं यथा कुम्भ इति । स्वप्रकाशत्वञ्च स्व [स्वान्य] संविन्निरपेक्ष्येणं स्फुरणम् । ननु तत्प्रमाणस्यात्मा विषयो नो वा ? आद्ये व्याघातोऽन्त्येऽसाधकत्वम् । न तावद्व्याघातोऽनुमानगोचरस्य तदगोचरत्वाप्रसाधनात् । न च प्रमाणविषयत्वमात्रेण दृश्यता । सा हि स्वातिरेकिसंविदपेक्षानियतिः ; न सात्मनोऽस्ति, सुषुप्तेऽपि सिद्धेः ॥

अपरे पुनरेवमूचिरे—अविषयेऽपि शशविषाणे विषयत्वनिषेधवदविषयेऽपि स्वातिरेकिसंविदपेक्षावारणात्साधकत्वमिति । सर्वथाप्यात्मनः प्रकाशमानत्वात्सम्भाव्यतेऽध्यास इति ॥

यैस्त्वावोचि पुरोऽवस्थितमधिष्ठानमिति तत्राह—न चायमिति ॥ सर्वगतत्वेन पुरोदेशानवच्छिन्नेऽप्याकाशे छत्राद्याकारारोपदर्शनादित्यर्थः । चाक्षुषत्वात्

१. TM. भानेन.
२. A omits आशङ्क्य.
३. T. ब्रह्मप्रसिद्धेः
४. A. चात्मनः स्वगो.
५. A. आत्माश्रय.
६. T and T[1] space is left for writing प्रका... वत्.
७. T. संविद्दर्शन.
८. A. भाति.
९. A. omits न स एवं.
१०. A adds एव.
११. A. यथा तथापि.

भाष्यम्

अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति । एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः । तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते । तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासः तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न संबध्यते ॥

तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमा-

प्रकटार्थविवरणम्

पुरोदेशावस्थानं कल्पितमस्तीति न वाच्यमित्याह— अप्रत्यक्षेऽपीति ॥ आकाशोऽचाक्षुषः, सर्वगतद्रव्यत्वात् नीरूपद्रव्यत्वाद्वा आत्मवत्, अपरथा स्पार्शनत्वमपि स्यात् । न चान्वयव्यतिरेकौ द्वारादिप्रदेशेष्वन्धादीनां आवरणाभावज्ञानदर्शनात् । नाप्यनुमेयता, अन्तरेणापि लिङ्गदर्शनं प्रदेशसंवित्तेः, तस्मान्नित्यानुभवानुभवनीयं नभ इति । तस्मात्परत्रेति लक्षणांशः सम्भवतीत्याह—एवमविरुद्ध इति ॥ एवं तावदधिष्ठानायोग्यत्वनिरासेनासम्भवाशङ्का निरासि । तर्ह्यधिष्ठानस्याध्यस्तसंबद्धतया तदसङ्गताव्याघातापातान्नाध्याससम्भव इत्याशङ्क्याह— तमेतमेवमिति ॥ अविद्याकार्यत्वादध्यासमविद्यां मन्यन्ते, अतोऽविद्याद्वारकमेवाधिष्ठानत्वमित्यर्थः । परमार्थस्वरूपावधारणे पुनः नाधिष्ठानत्वमपीत्याह—तद्विवेकेन चेति ॥ तस्या अविद्याया विवेकेन परित्यागेन शुद्धब्रह्मस्वरूपावधारणं जीवस्य विद्यामाहुः । एवंभूतविद्यायाञ्च सत्यां यत्र जीवे यस्य मौढ्यादेरध्यासः तत्कृतेन मौढ्यादिदोषेण पाण्डित्यादिगुणेन चाणुमात्रेणापि स जीवो न संस्पृश्यते । अतोऽसङ्गत्वव्याघातभीत्यापि नासम्भवाशङ्केत्यर्थः ॥

नन्वात्मनस्तात्त्विकमेव प्रमातृत्वादिकं पुरस्कृत्य प्रमाणादिप्रवृत्तिः, अविद्यामूलत्वे दुष्टकारणजन्यत्वेनाप्रामाण्यापातात् । अतो नाध्याससम्भव इत्याशङ्क्याह— तमेतमविद्याख्यमिति ॥ सति पुष्कलकारणे प्रतिबन्धकतया

२. T and TM. नावा.
२. A. असङ्गताया.
३. A omits आशङ्क्य.
४. T. P and TM. विद्यायाः.
५. A. यज्जीवे.
६. A. अनुस्पृ.
७. TM. विना. A omits अपि.

## भाष्यम्

णप्रमेयव्यवहाराः लौकिकाः प्रवृत्ताः, सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि । कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति । उच्यते । देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः । न हीन्द्रियाण्यनुपादाय प्रत्यक्षा-

## प्रकटार्थविवरणम्

जायमानो दोषो[1]ऽप्रामाण्यमावहति, न तु कारणत्वेन व्यवस्थितः । यथा भकारे ह-स्तद्याकारारोपः, यथा च कामलादि[2] स्वकारणानुमाने ; तथाविद्यापि ब्रह्मावभासं प्रत्येव दोषो न द्वैतावभासे तत्कारणत्वात् । अतो नाप्रामाण्यशङ्कयापि अध्यासा-सम्भवाशङ्का प्रसर्तुमर्हतीति भावः । तर्ह्यात्मनः प्रमातृत्वादि न पारमार्थिकम्, किन्त्वविद्यामूलैव प्रमाणादिप्रवृत्तिरित्यत्र प्रमाणं ब्रूहीत्याह—कथं पुनरिति ॥ अविद्याप्रतिबिम्बितं चैतन्यं तत्कृतमौढ्याद्यध्यासास्पदमविद्यावदुच्यते । तदाश्रयाणि प्रमाणानीति केन प्रमाणेनावगम्यत इत्यर्थः । अर्थापत्त्यनुमानाभ्या-मित्याह—उच्यत इत्यादिना ॥ देहेन्द्रियादिष्वहंममाध्यासशून्यस्य सुषु-प्तस्य[4] प्रमातृत्वाभावे प्रमाणप्रवृत्त्यदर्शनात्प्रमाणप्रवृत्तिः प्रमातृत्वं गमयन्ती तस्या-ध्यासपूर्वकत्वं गमयतीत्यर्थापत्तिः । अनुमानं च प्रमातृत्वाद्यध्यासमूलं तदन्वय-व्यतिरेकवत्त्वात्, न यत्रैवं न तदेवम्, यथा आत्मेति । ननु यथा योधेषु युध्यमानेषु सन्निधिमात्रेण राज्ञो योद्धृत्वं व्यवह्रियते तथा चक्षुरादिषु व्याप्रिय-माणेषु आत्मनः प्रमातृत्वम् ; सुषुप्ते चेन्द्रिय[5]व्यापाराभावादेवाप्रमातृत्वम् ; ततोऽ-न्यथाप्युपपत्तिरसिद्धिश्चेत्याशङ्क्याह—न हीति ॥ सत्यमिन्द्रियव्यापारे सति प्रमातृत्वम् ; तदेव तु न सन्निधिमात्रेण । न हीन्द्रियाण्यनुपादाय संबन्धविशेषे-णापरिगृह्य प्रत्यक्षादिफलमवकल्पते । गौणे प्रमातृत्वे तत्फलस्यापि गौणत्वमेव न्याय्यम्[7] । न हि गौणेऽग्नित्वे मु[  ]कार्यं दृष्टचरम् । राज्ञोऽपि द्रव्यादिद्वारक-संबन्धविशेषेणैव जयादिफलभागित्वमित्यर्थः । अस्त्विन्द्रियसंबन्धः प्रमा-

१. T. space is left for writing दोषो.

२. T and P यथा कामि TM. यथा च या कामि.

३. T, T[1], P and TM. मासं.

४. TM. and A. सुप्तस्य.

५. A omits इन्द्रिय.

६. A. यानुपपात्ति.

७. T, TM. and A. नाध्यासत्वम्. P. न्याय्यत्वम्.

भाष्यम्

दिव्यवहारः संभवति । न चाधिष्ठानमन्तरेण इन्द्रियाणां व्यापारः संभवति । न चानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते । न चैतस्मिन् सर्वस्मिन्नसति आत्मनोऽसङ्गस्य प्रमातृत्वमुपपद्यते । न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति । तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि

प्रकटार्थविवरणम्

तृत्वोपयोगी तथापि नैतद्देहाभिमानस्तत्रोपयुज्यते, अन्तरेणाप्येनं स्वप्ने प्रमातृत्वादिव्यापारादित्याशङ्क्याह—न चेति ॥ आश्रयमन्तरेण करणव्यापारायोगात् स्वप्नेऽपि पश्वादिदेहस्य विद्यत एव प्रमातृत्वोपयोग इत्यर्थः । उपयुज्यतां नाम देहद्वयसम्बन्धः, तथापि अध्यासेन कृतमित्याशङ्क्याह—न चानध्यस्तेति ॥ कश्चिदपि देवो मानवो वा मानध्यस्तात्मभावेन देहेन व्याप्रियते । सर्वो हि देवोऽहं मनुष्योऽहमिति जातिविशेषैकाधिकरणचैतन्य एव प्रवर्तत इति स्वसंवेद्यमेतत् । न संयोगस्वस्वामिभावादिः प्रमातृत्वोपयोगी सुषुप्तेऽपि भावात्, भृत्यदेहेनापि प्रमातृत्वादिप्रसङ्गाच्च । न च कर्मसंबन्धोऽपि देहसंबन्धमन्तरेणेति वक्ष्यते इत्यतः परिशेषादपि यथावभासं मिथ्यातादात्म्यसम्बन्धोऽभ्युपेय इत्यर्थः । नन्वात्मनो ज्ञानक्रियाशक्तिवशेन प्रमातृत्वाभ्युपपत्तौ नाध्यासकल्पनावकाश इत्याशङ्क्याह—न चैतस्मिन्निति ॥ नात्मा शक्तिमान् निरंशत्वाद् विभुत्वाद्वा गगनवत् । विकारित्वे चर्मवदनित्यत्वापाताच्च । प्रतीतेश्च सत्यासत्यसाधारणायाः सत्यत्वासाधकत्वादध्यासमूल एवायं प्रमातृत्वादिव्यवहार इत्यर्थः । भवत्वेवमविद्वद्व्यवहारोऽध्यासमूलः, न विद्वद्व्यवहार इत्याशङ्क्याह—पश्वादिभिरिति ॥ यौक्तिकाविवेकस्यापरोक्षभ्रमाविरोधात् विरोधित्वेऽपि तदनुसन्धानविधुरतया व्यवहारे पश्वादिभिरविशेषात्, पण्डितव्यवहारोऽप्यध्यासमूल एवे-

१. T and P omit अपि.
२. T. adds दानवो वा.
३. T. सर्वोऽपि.
४. A. भ्रान्ति.
५. A. स्वस्वाम्भावा-
६. T, T¹, TM and P युपपत्तौ.
७. A. अप्रवृत्तिश्च.
८. P. सम्यक्ता. T, T¹, and TM सत्या.
९. A. भवति.
१०. T. TM. and A omit अध्यासमूलः
११. T M यौक्तिकव्यवहारस्य.

भाष्यम्

शास्त्राणि चेति । पश्वादिभिश्चाविशेषात् । यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां संबन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते, अनुकूले च प्रवर्तन्ते यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य 'मां हन्तुमयमिच्छति' इति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति, एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते तद्विपरीतान्प्रति प्रवर्तन्ते । अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः । पश्वादीनां च प्रसिद्ध एव अविवेकपूर्वकः प्रत्यक्षादिव्यवहारः । तत्सामान्यदर्शनात् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारः तत्कालः समान इति निश्चीयते । शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसंबन्धमधिक्रियते तथापि न वेदान्तवेद्यमशनायाद्यतीतं अपेतब्रह्मक्षत्रादिभेदं असंसार्यात्मतत्त्वमधिकारे

प्रकटार्थविवरणम्

स्यर्थः । सङ्ग्रहवाक्यं विवृणोति—यथा हीत्यादिना ॥ पश्वादीनामविवेकपूर्वको व्यवहारः कुतः सिद्ध इत्याशङ्क्याह—पश्वादीनाञ्चेति ॥ व्युत्पन्ना अपि न स्वयमेव व्यतिरिक्तमात्मानं विदन्ति[१] तदुपदेशाद्यानर्थक्यापातात्, किमु पश्वादय इति भावः । अतः पण्डितानामपि प्रमातृत्वादिव्यवहारोऽध्यासमूलः प्रमातृत्वादि[२]व्यवहारत्वात्[४] पश्वादिप्रमातृत्वादिव्यवहारवत् इत्यनुमातुं शक्यत इत्याह—तत्सामान्येति ॥ तस्याध्यासस्य काल एव कालोऽस्येति विग्रहः । ननु यद्यपि प्रत्यक्षादिव्यवहारोऽध्यासमूलः,तथापि न शास्त्रीयः प्रमाणतो व्यतिरिक्तात्मानुसन्धानेनैव तत्राधिकारादित्याशङ्क्याह—शास्त्रीये त्विति ॥ न वेदान्तवेद्यमात्मतत्त्वमधिकारेऽपेक्ष्यते अनुपयोगात् । अनुपयोगद्योतकानि विशेषणान्यशनायाद्यतीतमित्यादीनि । अशनायाद्युपप्लुतो ह्यन्नाद्यकामो "बैल्वमन्नाद्यकामस्य" इत्यादावधिक्रियते; ब्राह्मण्यादिजातिमांश्च बृहस्पतिसवादौ; संसारी जीव-

१. T, T[1], P and TM वदन्ति.
२. T प्रमातृत्वात्.
३. TM. हारे.
४. A. व्यवहारमूलत्वात्.

### भाष्यम्

अपेक्ष्यते, अनुपयोगादधिकारविरोधाच्च । प्राक् च तथाभूतात्मविज्ञानात् प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तते। तथा हि—"ब्राह्मणो यजेत" इत्यादीनि शास्त्राणि आत्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते । अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचाम । तद्यथा पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वा इति बाह्य-

### प्रकटार्थविवरणम्

नादिविशिष्टो जीवनादिनिमित्तकर्मसु; नैवं ब्रह्म; अतोऽनुपयोग इत्यर्थः । किञ्च नाहं कर्ता भोक्ता च किं तु ब्रह्मैवेति विद्वन् कथंकारमनेकानर्थसङ्कीर्णे कर्मण्यधिक्रियेत इत्याह—अधिकारविरोधाच्चेति ।। भवतु शुद्धब्रह्मज्ञानस्याधिकारानुपयोगः, ततः किमित्यत आह—प्राक् चेति ।। अस्ति कश्चिद्देहादिव्यतिरिक्तः स्वर्गोपभोगसमर्थ आत्मेति । नैतावताध्यासो निवर्तते, व्यतिरेकाज्ञानानुपादानत्वादिति भावः । अविद्वदाश्रयत्वं शास्त्रीयव्यवहारस्योदाहरणैः स्पष्टयति—तथा हीत्यादिना ।। तदेवं प्रमाणतोऽध्याससद्भावं प्रसाध्य धर्ममात्रस्य काध्यासः, क्व वा धर्मिणः इत्युदाहरणतः स्फुटीकर्तुं पूर्वोक्तमेव लक्षणमनुवदति—अध्यासो नामेति ।। हर्षशोकादिमिथ्याभिमानकार्यदर्शनात् बाह्यपुत्रादिसाकल्यवैकल्यधर्मसदृशान्धर्मानात्मनि देहादिविशिष्टेऽध्यस्यति, अन्यथा अन्यथाख्यात्यापातात् । आत्माविद्या हि साकल्यादिदर्शनलक्षणनिमित्तसन्निधानान्मिथ्यार्थाकारेण विपरिणमत इति रहस्यम् । ननु तर्हि देहधर्मस्यात्मन्यध्यासे स्यादन्यथाख्यातिः । अथ तस्याज्ञानजत्वान्न स्यात् अन्यत्र सतोऽन्यत्र संसर्गावभासोऽन्यथाख्यातिः, तर्हि उत्क्रान्तेऽङ्गे देहस्य हिगुरुफलमं [हिरुगुपलम्भो] भूतेषु लयश्च न स्यात् उदुपादानादन्यत्र कार्यायोगात् । उच्यते—मायामयैर्महाभूतैरदृष्टानुसारिपरमेश्वराधिष्ठितैरारभ्यमाणो देहो जीवोपार्जितकर्मसहकृतादज्ञानाज्जीवसंसृष्टतयैव आरभ्यते; अतो जीवसंसृष्टरूपेण देह-

१. TM. उदाहरणे.
२. TM. हरणस्फु.
३. T, T[1], P and TM देह.
४. A. उत्क्रान्तौ.
५. A. कर्मफलं.
६. TM, P and A भूतेषु.

भाष्यम्

धर्मानात्मन्यध्यस्यति; तथा देहधर्मान् 'स्थूलोऽहम्' 'कृशोऽहम्' 'गौरोऽहम्' 'तिष्ठामि' 'गच्छामि' 'लङ्घयामि च' इति; तथा इन्द्रियधर्मान् 'मूकः काणः क्लीबः बधिरः अन्धोऽहम्' इति; तथा अन्तःकरणधर्मान् कामसंकल्पविचिकित्साध्यवसायादीन् । एवमहंप्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति । एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोक-

प्रकटार्थविवरणम्

स्वाज्ञानात्मकत्वात्तद्धर्मारोपे नान्यथाख्यातिः । सहकारिकर्मोपरमे च तन्तुसंयोगापाये पटापायवत् जीवसंसृष्टत्वापायात् स्वरूपस्य भूतेषु लय उपलम्भोऽप्येवकल्पते । लिङ्गदेहस्याप्यज्ञानकार्यभूतसूक्ष्मपरिणामस्य महाभूतावष्टब्धस्य कर्मनिमित्तव्यक्तिशालिनः सदाज्ञानप्रतिबिम्बितचित्संसृष्टतयैवाध्यासात्तद्धर्माध्यासोऽपि तत्रैव पदं प्राप्नोति । तदेतदाह—तथा देहधर्मानित्यादिना ॥ एवं तावदहङ्कारपर्यन्तस्य सकलाहङ्कारविकारकामादिसाक्षिणि प्रत्यगात्मन्यध्यासमुक्त्वा आत्मनोऽप्यहङ्कारादौ अध्यासमाह— एवमहंप्रत्ययिनमिति ॥ देहादेश्चित्तन्त्रतावत् चितोऽपि देहादितन्त्रतासिद्धयन्यथानुपपत्त्या अध्यासो गम्यते। तथा च बार्हस्पत्याः 'संविद्देहधर्मः' इत्याहुः; 'बुद्धिधर्मः' इति बौद्धाः; 'अहङ्कारधर्मः' इति भाट्टप्रभृतयः। स्वाज्ञानविवर्तेऽन्तःकरणादौ दर्पणस्थानीये चितः प्रतिबिम्बितत्वेन तत्संसर्गाध्यासात् नोभयोरपि मिथ्यात्वप्रसङ्गः, नाप्यधिष्ठानाभावप्रसङ्ग इति । तदेवं लक्षणादिभिराविष्कृतमध्यासं निगमयति—एवमयमिति ॥ एवं तावद्विषयप्रयोजनसम्भावनानिमित्तमध्यासं

१. A omits च.
२. TM. पटापायात्.
३. TM. व्यव.
४. T and TM. omit तथा देह.
   A omits तथा.
५. T, T¹, P and TM add अधुना.
६. A. निमित्ते.
७. A omits न.
८. TM. भावः प्रसङ्गं न इति.

भाष्यम्

प्रत्यक्षः । अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते । यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः ॥

वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्य इदमादिमं सूत्रम्—

# अथातो ब्रह्मजिज्ञासा ॥ १-१-१ ॥

प्रकटार्थविवरणम्

प्रसाध्य अधुना विषयप्रयोजनसम्भवाद्वेदान्तानामुपादेयतामाह-अस्यानर्थहेतोरिति ॥ सनिदानानर्थप्रहाण एव[1] वेदान्तानां प्रयोजनम्; ब्रह्मात्मैकत्वविद्या चोत्पाद्यतया विषयः; ते एव तद्विचारस्यापि विषयप्रयोजने इति भावः । ननु वेदान्ते कचिदुपासनादिविधिदर्शनान्नात्मैकत्वमेव सर्ववेदान्तार्थ इत्याशङ्क्याह— यथाचायमर्थ इति ॥

एवं तावद्व्याख्येयत्वमुपपाद्य प्रतिपदं व्याख्यातुकाम आद्यं सूत्रमुपादत्ते— वेदान्तेति ॥ आदित्वादस्य न पूर्वाधिकरणेन सम्बन्धः । किन्तु नित्याध्ययनविधिग्राहितापातप्रतिपन्नानुबन्धत्रयविशिष्टः श्रोतव्य इति विधिः स्वापेक्षिताधिकारि[2]विषयफलानुबन्धत्रयं न्यायेन निर्णेतुं प्रथमसूत्रं प्रयुङ्क्त इति तेनास्य संबन्धः । शास्त्रान्तर्भूतश्चेदम्; समन्वयाद्यशेषविचारहेतुत्वात् ब्रह्मज्ञानाय वेदान्तविचारकर्तव्यतानिर्णयद्वारेण वेदान्तानां ब्रह्मणि समन्वयसूचकत्वात्समन्वये चास्य सम्बन्धो बोद्धव्यः ॥

अथातो ब्रह्मजिज्ञासा ॥

"श्रोतव्यः" इति वेदान्तवाक्यविचारो विषयः। स किमनारम्भणीयः उतारम्भणीयः इति संशयः । बन्धसत्यत्वादिहेतुना विध्यपेक्षिता[3]नुबन्धत्रयासम्भवान्नारम्भणीय इति पूर्वः पक्षः। बन्धमिथ्यात्वेन श्रुत्युपपत्तिभ्यामनुबन्धत्रयसम्भवादा-

१. T¹, P and A omit एव.

२. T, P, A and TM. सनाविधि.

३. T, TM, P and A omit विध्यपेक्षिता.

### भाष्यम्

अत्राथशब्द आनन्तर्यार्थः परिगृह्यते नाधिकारार्थः, ब्रह्मजिज्ञासाया अनधिकार्यत्वात् । मङ्गलस्य च वाक्यार्थे समन्वयाभावात्, अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति ; पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात् । सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षते, एवं ब्रह्मजिज्ञासापि यत्पूर्ववृत्तं निय-

### प्रकटार्थविवरणम्

रम्भणीय इति सिद्धान्तः । तदेतद्भाष्यतात्पर्यपर्यालोचनातो निश्चेतव्यम् । इदानीं प्रतिपदं व्याख्याति—अत्राथशब्द इत्यादिना ॥ अधिकृतिरधिकारः प्रारम्भः । तदर्थोऽयमथशब्दो न भवति 'अथ योगानुशासनम्' इतिवद्ब्रह्मज्ञानेच्छाया अनारभ्यत्वात् ; न तावत्स्वोत्पाद्यतया प्रारब्धा, तद्धि जिज्ञासोरत्राधिकारात् ; नापि प्रतिपाद्यतया, प्रत्यधिकरणमप्रतिपाद्यत्वादिति भावः। ननु जिज्ञासापदोपलक्षितविचारविधिपरं सूत्रम्, ततो विचारप्रारम्भार्थोऽथशब्दः । सत्यम्, तथाप्यानन्तर्याभिधानमुखेन विधेः प्रथमापेक्षिताधिकारिसमर्पणमेव युक्तम्, नाधिकारार्थत्वम् । "ओङ्कारश्चाथशब्दश्च" इत्यादिपुराणान्मङ्गलार्थत्वं तर्हि भवत्वित्याशङ्क्याह—मङ्गलस्य चेति ॥ पदार्थो हि वाक्यार्थे समन्वेति ; मङ्गलं च नाथपदार्थः, किन्तु प्रयोजनमिति भावः । ननु पूर्वप्रकृतापेक्षोऽप्यथशब्दो दृश्यते यथार्थान्तरेऽभिहितेऽर्थान्तरविवक्षया ब्रवीति 'अथैवं मन्यसे' इति ; तद्वदिहापि भवत्वित्याशङ्क्याह—पूर्वप्रकृतापेक्षायाश्चेति ॥ हेतुफलभावेनानन्तर्ये प्रतिपादिते पूर्वप्रकृतत्वमपि तत्रान्तर्भवति । पूर्वप्रकृताभिधाने तु नानन्तर्यं तत्रान्तर्भवत्यहेतुफलयोरानन्तर्यव्यभिचारस्यापि सम्भवात् । अतोऽनन्यलभ्यत्वादानन्तर्यमेवाथशब्दार्थ इत्यर्थः । ननु कारणात्कार्यस्यानन्तर्यस्यापि सिद्धत्वात्तदपि नाथशब्देन वक्तव्यमित्याशङ्क्याह—सति चेति ॥ आनन्तर्याभिधानमुखेन जिज्ञासोः प्रवृत्त्युपयोग्याधिकारिविशेषणमेवाथशब्देन तात्पर्येण समर्प-

१. T. तात्पर्यालो-

२. TM. तव्यः.

३. A. प्रकृतमपि.

४. A omits इत्यर्थः.

५. A. इव समर्थनीय-

भाष्यम्

मेनापेक्षते तद्वक्तव्यम् । स्वाध्यायानन्तर्यं तु समानम् । नन्विह कर्मावबोधानन्तर्यं विशेषः । न । धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः । यथा च हृदयाद्यवदानानामानन्तर्यनियमः क्रमस्य

प्रकटार्थविवरणम्

णीयमित्यर्थः । ननु तर्हि यथाधीतवेदो धर्मविचारेऽधिक्रियते, तथा ब्रह्मविचारेऽपि स एवाधिक्रियत इति तदानन्तर्यार्थोऽथशब्दो भवत्वित्याशङ्क्याह—स्वाध्यायेति ॥ स्वाध्यायानन्तर्यं तु समानं साधारणं धर्मब्रह्मजिज्ञासयोः । अतोऽसाधारणं किमपि वक्तव्यम्, विलक्षणस्य कार्यस्य विलक्षणसामग्रीनियमादिति भावः । तर्हि श्रुतपूर्वमीमांसाशास्त्रस्यैवात्राधिकार इति विशेषं शङ्कते-नन्विहेति ॥ यस्मिन्नसत्येव न प्रवर्तते यस्मिन्सति च प्रवर्तत एव तदेवाधिकारिविशेषणं ब्रह्मजिज्ञासायाः पुष्कलकारणमानन्तर्याभिधानेनाथशब्देनात्रद्योत्यत इति वाच्यम्; न तथा धर्मविचार इत्याह नेति ॥ न तावद्धर्मविचारे पूर्ववृत्ते सत्येव ब्रह्मजिज्ञासायां प्रवर्तते । जन्मान्तरे परमेश्वराराधनबुद्ध्यानुष्ठितकर्मभिः शुद्धसत्त्वस्य विरक्तस्य वृद्धव्यवहारत एव विदितपदपदार्थसङ्गतेः वेदान्ताध्ययनेन चापातावगतश्रोतव्यविधिकस्य अन्तरेणैव धर्मविचारं ब्रह्मविचारे प्रवृत्त्युपपत्तेः । नापि धर्मविचारे सति प्रवर्तत एव, कृतधर्मविचारस्य वेदान्तानां कार्यशेषताग्रहगृहीतस्य ब्रह्मजिज्ञासायां पराङ्मुखत्वात् । अतो न धर्मविचारानन्तर्यार्थोऽथशब्द इत्यर्थः । ननु तर्हि यथा "हृदयस्याग्रेऽवद्यति । अथ जिह्वायाः । अथ वक्षसः" इति क्रमविशेषनियमार्थोऽथशब्दः तथायमपि भवतु; तथा च स्मृतिः—

"अधीत्य विधिवत् वेदान् पुत्रांश्चोत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैः मनो मोक्षे निवेशयेत् ॥" इति

तत्राह—यथा चेति ॥ अनुष्ठेयानां बहुत्वादनुष्ठातुश्चैकत्वाद्युगपदनुष्ठानायोगादवश्याश्रयणीये क्रमे भूयात्तन्नियममथशब्दः । धर्मब्रह्मविचारयो-

१. T, T¹, P and TM विचारयोः.
२. A adds धर्मब्रह्मविचारयोः.
३. T, T¹, P and TM सत्येव प्र-
४. T, T¹ and P क्रतु.
५. P, T and T¹ धर्मतो.

### भाष्यम्

विवक्षितत्वात् न तथेह क्रमो विवक्षितः, शेषशेषित्वे अधिकृताधिकारे वा प्रमाणाभावात् धर्मब्रह्मजिज्ञासयोः । फलजिज्ञास्यभेदाच्च । अभ्युदयफलं हि धर्मज्ञानम्, तच्चानुष्ठानापेक्षम्; निःश्रेयसफलं तु ब्रह्मज्ञानम्, न चानुष्ठानान्तरापेक्षम्; भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति पुरुषव्यापारतन्त्रत्वात् । इह तु भूतं ब्रह्म जिज्ञास्यं नित्यवृत्तत्वान्न पुरुषव्यापारतन्त्रम् । चोदनाप्रवृत्तिभेदाच्च । या हि चोदना धर्मस्य लक्षणम्, सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम्; अवबोधस्य चोदनाजन्यत्वान्न पुरुषोऽवबोधे नियु-

### प्रकटार्थविवरणम्

स्त्वनुष्ठात्रैक्याभावान्न क्रमाकाङ्क्षा । यत्र ह्यङ्गाङ्गिभावो यथा प्रयाजदर्शादिषु, यत्र वाधिकृताधिकारः तत्रैवानुष्ठात्रैक्यम् । न च तथात्वे धर्मब्रह्मविचारयोः प्रमाणमित्यर्थः । स्मृतिस्त्वविरक्तस्याश्रमक्रमाभिधानेन यज्ञाद्यनुष्ठानानन्तरं मुमुक्षामाह, न तु ब्रह्मविचारस्य धर्मविचारानन्तर्यप्रतिपादकः कश्चिच्छब्दः तत्रोपलभ्यते; अतो न कर्मानुष्ठानानन्तर्यं परस्याभिप्रेतम् । तथा च भास्करोऽरोदीत् "कर्मविचारो वृत्तः । अनन्तरं ब्रह्मजिज्ञासा प्रारभ्यते" इति । ननु यथाग्नेयादीनां षण्णामेकं फलं स्वर्गः, तथा धर्मब्रह्मविचारयोस्तत्त्वज्ञानजननेन कैवल्यमेवैकं फलम्, जिज्ञास्यं चैकमेव; अतः कर्त्रैक्ये क्रमाकाङ्क्षा । तत्राह—फलजिज्ञास्यभेदाच्चेति ॥ भेदमुपपादयति—अभ्युदयफलं हीत्यादिना ॥ इतश्च जिज्ञास्यभेद इत्याह—चोदनेति ॥ वेदवाची चोदनाशब्दः यो वैदिको लिङादिः धर्मे प्रमाणं स स्वविषये धात्वर्थकरणकपुरुषार्थभाव्यानिष्ठार्थभावनालक्षणे प्रेरयन्नेव पुरुषं बोधयति; ब्रह्मप्रमाणं तु बोधयत्येव; अतो वेदप्रवृत्तिवैलक्षण्यादपि प्रमेयवैलक्षण्यम् । विधिविचारो हि पूर्वतन्त्रे प्रवृत्तः; नासौ न्यायः सिद्धवस्तुनिर्णय उपयुज्यते; अतो न क्रमाकाङ्क्षेति भावः । यच्चात्र ब्रह्मप्रकाशिकाकारो रुरोद "अध्ययनविधिप्रयुक्तत्वे वेदान्तविचारस्याधीतवेदेन कृत्स्न एव वेदार्थो विचा-

१. TM. omits तु.

२. TM and A add अस्ति.

३. T and TM. करणपु.

४. A omits वेद.. प्रमेय.

## प्रकटार्थविवरणम्

रयितव्यः । तत्र सत्यपि हेतुहेतुमद्भावेनाविशेषे क्रममुल्लङ्घ्य त्वरया ब्रह्मविचारस्य प्रथमकरणे किंनिमित्तम्” इति । तत्रेदमश्रुमार्जनमुज्जृम्भते । विचारो नाध्ययनविधिप्रयोज्यः तदनुपयोगित्वात् अग्निहोत्रवत् । अक्षरस्वीकारपर्यन्तवाङ्मनःकायव्यापारस्याध्ययनशब्दवाच्यत्वात् आवृत्तिरपि विषयतयैवोपयुज्यत इति नानैकान्तिकता । ननु यथा अवघातविधिः फलपर्यन्ततया आवृत्तिं प्रयोजयति, तथाध्ययनविधेरप्यर्थावबोधफलत्वात् तस्य च विचारं विनानुपपत्तेः तत्प्रयोजकत्वम्; न, अध्ययनविधेरर्थावबोधफलत्वासिद्धेः । तथा हि—विधीयमानक्रियासाध्यं विधेः फलमुच्यते । तत्र न तावदर्थावबोधोऽध्ययनक्रियाया अन्वयव्यतिरेकसिद्धं फलं सद्दं [उक्तिसद्दं] वेदाध्येतॄणामर्थानिश्चयादर्शनात्; विचारस्यापि अङ्गत्वे सत्युपनिषद्विचारेण निस्सन्दिग्धाविक्रियात्मज्ञानोदये कर्मानारम्भप्रसङ्गः, इतरथा साङ्गाध्ययनाभावापातात्; विधिं विनापि शाखान्तरीयवाक्येभ्यः पौरुषेयवाक्येभ्यश्चार्थावगतिदर्शनात्; आपातदर्शनस्य च विचारनिरपेक्षत्वात्; नाप्युद्देश्यतया वैधं फलं स्वर्गकामादिपदवदर्थावबोधकामपदस्य विध्युद्देशेऽश्रवणात्; न च विश्वजिन्न्यायेनार्थावबोधकामः, उपनीतस्य प्रकरणादधिकारावगमात्;

“योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥”

इत्यादिनिन्दावचनेन नित्यत्वावगमाच्च । ननु “स्वाध्यायोऽध्येतव्यः” इति तव्यप्रत्ययव्यापारः शब्दभावना अर्थभावनां संपादयन्ती तस्यास्त्र्यंशायाः समानपदोपात्तमध्ययनमपुरुषार्थं भाव्यं विहाय फलवदर्थावबोधं भाव्यं कल्पयति । ततश्च सक्तुन्यायेन स्वाध्यायेनार्थावबोधं भावयेदिति संपद्यते । न, कर्माभिधायितव्यप्रत्ययात् स्वाध्यायस्य भाव्यताश्रुतेर्नार्थावबोधस्य भाव्यता

१. A. अविशेषेण च.
२. P. पाठक्रम.
३. TM omits अश्रु. A दं मानमुज्जृ-
४. TM. त्वार्यस्य.
५. T[1] adds च.
६. T, P and A क्रियया.
७. A omits अपि.
८. TM. विक्रियाविक्रियात्म.
९. TM. and A. विध्युद्देशोऽश्र-
१०. T. and T[1] क्रमः TM. कामम्.
११. T. and T[1] अन.
१२. TM. इत्यादिना वचने.
१३. TM. and A संवाद.
१४. TM. चार्थं.

प्रकटार्थविवरणम्

कल्पनीया, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्; न च साक्षात् पुरुषार्थताभावात् स्वाध्यायस्याभाव्यता, परंपरया पुरुषार्थसाधनानामपि पश्वन्नाद्यादीनां भाव्यतोपलम्भात्; अर्थावबोधेऽपि समानत्वात्। सक्तूनां तु होमेन भस्मीभावात् संस्कारकर्मतानुपपत्तेः होमस्यार्थकर्मताश्रयणं विभक्तिविपरिणामेन युक्तम्। उक्तं हि—

"भूतभाव्युपयोगे हि द्रव्यं संस्कार्यमिष्यते ।
सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित्" ॥ इति ॥

स्वाध्यायस्य तु संस्कृतस्य क्रतुषूपादानप्रमाणाद्विनियोगसम्भवान्न सक्तुन्यायावतारः। एतेनेदं निरस्तम्, न क्रियास्वरूपप्रयुक्तफले कर्मणि स्वाध्यायविधेरर्थवत्ता, अन्तरेणापि विधिं ज्ञायत एवाध्ययनेन स्वाध्यायो गृह्यत इति। अवघातादिविधेरपि निराकरणप्रसङ्गादर्थावबोधेऽपि समानत्वाच्च। तात्पर्यं तु न विध्यधीनम्, किन्तु तदर्थप्रमितिशेषता स्वाभाविकीति वक्ष्यति। न चैवं विचारानारम्भप्रसङ्गः अधीतवेदेनाधिगताधिकारा उत्तरविधय एव स्वविषयसन्देहव्युदासाय विचारमारप्स्यन्ते। येषावोचि बुद्धिमात्रपर्यवसायिनो हि ते; तस्य तु विनैव वेदार्थविचारायासेनोपदेशादपि सम्भवान्नोत्तरविधयस्सुकरमुपायमुपदेशं परित्यज्य विषमं विचारमाक्षिपेयुरिति, तदसत्; निस्संन्दिग्धज्ञानस्योत्तरविधिभिः स्वविषयानुष्ठानसिद्धयेऽपेक्षितत्वात्। न च न्यायपरिज्ञानमन्तरेण मुहुर्मुहुरभिनवानां संशयानां निराससम्भव इति सुकरमुपदेशं परित्यज्य विषममपि विचारमाक्षिपन्ति, स्वाध्यायविधेरप्यनाक्षेपकत्वसाम्यापाताच्च। न च लाघवात् स्वाध्यायविधेरेव विचाराक्षेपकत्वम्, क्रतुप्रवृत्तेरपि तत एव प्रसङ्गात्। तस्मान्न विचारः स्वाध्यायविधिप्रयुक्तः, किन्तु श्रोतव्याद्युत्तरविधिप्रयुक्त इति सिद्धम्। पाठक्रमेणैव च विचारे पूर्वतन्त्रेऽपि प्रथमं मन्त्राणामेव "इषे त्वा" इत्यादीनां विचारः प्रसज्येत। अथ विधेः प्राधान्यात् प्रथमं

१. T. पश्वान्नाद्या.
२. A. अधिगतेनाधिकारः.
३. A. यथावाचि.
४. TM. एते..
५. TM. यासनो.
६. T and T¹ सुतरां.
७. A. सविषय-
८. A. संयोगानां.
९. T, T¹, P and A सुतरां.
१०. A. आक्षिपति.
११. A. विषयोऽपि.
१२. A omits किन्तु.
१३. TM adds वारक्रमेणैव.

## प्रकटार्थविवरणम्

विधिविचारः प्रवृत्तः[1] अग्निहोत्रयवागूहोमपाकयोरिवार्थक्रमेण । श्रुत्यर्थाविरुद्धो हि[2] पाठक्रमोऽनुष्ठानक्रमे प्रमाणम्, यथा समिदादिषु । तर्हीहापि कर्म[3]स्वनित्यफलेषु विरक्तस्य मुमुक्षोः मोक्षसाधनब्रह्मात्मैकत्वज्ञानाय विचार एवाभ्यर्हिते प्रवृत्तिर्युक्ता । न च कर्मसमुच्चितं ज्ञानं मोक्षसाधनमिति स्वावसर एव वक्ष्यामः । यच्चाभाणि किं त्वरयेति, तत्र[4] सोपहासमाह सेतिहासः—

"मृत्युना ह्याहते लोके जरया परिवारिते ।
व्याधिभिर्ग्रस्यमाने च किं स्वस्थ इव भाषसे ॥

सर्वोपायैर्यदा नास्ति मर्तव्यस्य प्रतिक्रिया ।
सोऽहं कथं प्रतीक्षेय[5] जालेनेवावृतश्चिरम् ॥

रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा ।
स्वल्पोदके मत्स्य इव धृतिं विन्देत कस्तदा ॥" इति ।

भगवता व्यासेनाप्युपन्यासि—

"महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया[6] ।
तावदुत्तर दुःखाब्धिं यावदेषा न शीर्यते[7]" ॥ इति ।

यथातिरात्रे षोडश्यग्रहणाधिकारिणां न षोडशिग्रहणविध्यतिक्रमदूषणम्, यथा च सूतकिनां सन्ध्यामन्त्रोच्चारणेऽनधिकारिणां न मन्त्रवत्सन्ध्याकरणविध्यतिक्रमदूषणम्, तथा विरक्तानाम् "ब्रह्मचर्यादेव प्रव्रजेत्" इत्यादिविध्यधिकारिणां न क्रमविध्यतिक्रमदूषणम् । ऋणापाकरणविषया श्रुतिः स्मृतिर्वार्थवादरूपा साक्षाद्विधिविरोधे बाध्यत इत्याचार्या आचचक्षिरे । तस्माद्यावन्न निपतति शरीरं यावच्च कल्यं तावदतित्वरया विचारे प्रवर्तितव्यम् । ननु त्वरया प्रवृत्तेनापि पूर्वतन्त्रन्यायपरिज्ञानं विना तत्सिद्धवेदप्रामाण्यावधारणमन्तरेण च विचारणा कथङ्कारं क्रियेत । तथा च गुणोपसंहारे बहुशास्त्ते परि-

१. TM. प्रवृत्ते.
२. A omits हि पाठ.
३. A omits कर्म.
४. T, T¹ and P. तत्र तत्र.
५. T. and P. क्षिप्ये.
६. TM. मर्त्यः.
७. A. विशीर्यते.

### भाष्यम्

ष्यते यथा अक्षार्थसंनिकर्षेणार्थावबोधे तद्वत् । तस्मात् किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति । उच्यते—नित्यानित्यवस्तुविवेकः,

### प्रकटार्थविवरणम्

जरीगृह्यन्ते । न, तत्रापि रहस्यसामान्योपनिषद्व्रतोपासनाख्यमानसकर्मविचारे अपेक्षा, न तु सिद्धविचारे । तथापि नाग्रे तच्छ्रवणमवश्यम्भावि, स्वाधिकारनिष्पत्तये प्रवृत्तस्योपदेशतोऽपि तत्परिचयोपपत्तेः प्रयोग इव शाखान्तरीयोपसङ्ग्रहे; अन्यथा तन्त्रान्तराधिगतेरपि प्रसङ्गात् । तस्याप्येतत्तन्त्रसिद्धशरीरव्यतिरिक्तात्मोपजीवकत्वेनैतत्पूर्वकत्वप्रसङ्गाच्च । यथा चादावेव तदुपयोगिन्यायपरिज्ञानमन्तरेणापि तच्छ्रवणे प्रवृत्तिः, प्रवृत्तस्य च तदभिज्ञाचार्यानुग्रहादेवं सर्वोपसङ्ग्रहः तथात्रापीति पूर्वं पूर्वतन्त्रश्रवणस्यानावश्यकत्वान्न तदानन्तर्यार्थोऽथशब्दः । कर्मणां च नैयोगिककालनियमाभावेन कदाचिदज्ञातानामेव फलजनकत्वेन प्रवृत्तिकाले प्रवृत्त्य[प्रतीत्य]नपेक्षत्वात् न तदानन्तर्यप्रतिपत्त्यर्थोऽप्यथशब्दः । तस्मादन्यदेव वक्तव्यमित्युपसंहरति—तस्मादिति ॥ इदानीं श्रौतस्य विचारविधेः श्रौतान्येवाधिकारिविशेषणान्याह— उच्यत इत्यादिना ॥

तत्र नित्यानित्यवस्तुविवेको नाम आत्मव्यतिरिक्तं सर्वं कार्यत्वादनित्यम् नित्य आत्मैव कृतकत्वाभावादित्याद्यवधारणम् । इहामुत्रार्थभोगविरागो नाम वर्तमानशरीरस्थितिहेतुभूताप्रतिषिद्धान्नपानव्यतिरिक्तविषयप्रवृत्तिकारणेच्छाविरुद्धो निश्चलश्चेतोवृत्तिविशेषः । शमो नाम अन्तःकरणव्यापाराणां प्रतिषिद्धानामप्रतिषिद्धानामपि लौकिकानां स्वाधिकारानिष्पत्त्यनुपयोगिनां निष्फलत्वावधारणपूर्वकः परित्यागः । दमो नाम बहिष्करणव्यापाराणामुक्तलक्षणानां परित्यागः । उपरतिरिति कृतप्रयोजनकृष्णविषाणस्येव सत्त्वशुद्धिसिद्धौ नित्यानामपि विधित एव परित्यागः । तितिक्षुत्वं नाम शीतोष्णादिद्वन्द्वानां स्वाधिकारनिर्वृत्त्यपेक्षितजीवनविच्छेदहेतुव्यतिरिक्तानां सहिष्णुता । समाधानं नाम

१. T, T¹ and P सिद्धि.
२. TM. श्रवणभावश्च भावि.
३. A. चित्तं परि-
४. T. and TM. न ज्ञानान्तरा.
५. TM omits च.
६. TM. adds च.
७. T. and TM. नैयोगिके.
८. T, T¹, P. and TM omits वृत्ति.
९. TM. omits व्यापार.

### भाष्यम्

इहामुत्रार्थभोगविरागः, शमदमादिसाधनसंपत्, मुमुक्षुत्वं च । तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च ; न विपर्यये । तस्मादथशब्देन यथोक्तसाधनसंपत्त्यानन्तर्यं उपदिश्यते ॥

### प्रकटार्थविवरणम्

विधित्सितश्रवणादिप्रातिकूलनिद्रालस्यादिविरोधेन चेतसोऽवस्थानम् । एतैः सम्पन्नत्वं शमदमादिसाधनसम्पत् । चितोऽज्ञानतत्कार्यावच्छेदो बन्धः, तद्वियोगो मोक्षः, तद्विषयेच्छा मुमुक्षुत्वम् । एतेषां पूर्वस्य पूर्वस्योत्तरोत्तरहेतुतया मुमुक्षाहेतुत्वान्मुमुक्षाया एव ब्रह्मजिज्ञासाहेतुत्वाद्युक्तमानन्तर्याभिधानम् । एतेषां साक्षात्पारम्पर्याभ्यां जिज्ञासाहेतुत्वे प्रमाणमाह—तेषु हि सत्स्विति ॥ यस्मादन्वयव्यतिरेकाभ्यां "शान्तो दान्तः" इत्यादिशास्त्राच्च साधनकलापो ब्रह्मजिज्ञासायाः पुष्कलकारणं तस्मादित्युपसंहारः ॥

यदत्र ब्रह्मप्रकाशिकाकारोऽप्राक्षीत् "किं सन्निधानात्साधनकलापानन्तर्यम् ; किं वार्थाक्षेपात्" इति, तत्रोभयत्रापि ब्रूमः । तथा हि—"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति गुरुपादोपसर्पणपूर्वकं विचारयेदित्यस्य विधेः सन्निधाने "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्" इति नित्यानित्यवस्तुविवेकेहामुत्रार्थभोगविरागौ दृश्येते । "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्येत्" इति दर्शनस्याविधेयत्वात् दर्शनोपलक्षिततत्साधनविचारविधिसन्निधाने शमादयो दृश्यन्ते । "येनाहं नामृता स्याम्" इति मुमुक्षुत्वं दृश्यते । अतः श्रौतं विचारविधिं सूत्रयन् तत्सन्निहितमेव साधनसमूहं सूत्रयामास । रागाद्याक्षिप्तचित्तस्य च तत्त्वज्ञानफले विचारे प्रवृत्त्ययोगादर्थाक्षेपोऽपि वेविद्यते । धर्मविचारस्तु न सन्निहितो नार्थाक्षिप्त इति तदानन्तर्यं जल्पन्कथं सज्जनसमाजे न लालजीति ॥

१. A. विधिप्राप्त.

२. TM. ज्ञानं.

३. TM. मुमुक्षुः हेतुत्वं.
A adds मुमुक्षु.

४. A. तत्त्वे जिज्ञासार्थे.

५. A. अतत्सा.

६. T, T¹ and P तस्य त्वज्ञान.

७. T and P. क्षेपोऽपि विद्यते
T¹ क्षेपो वेविद्यते.
TM. क्षेप उपपद्यते.
A. क्षितोऽविद्यते.

भाष्यम्

अतःशब्दो हेत्वर्थः । यस्माद्वेद एव अग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलतां दर्शयति "तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते" इत्यादिः, तथा ब्रह्मज्ञानादपि परं

प्रकटार्थविवरणम्

इदानीमतःशब्दार्थमाह- अतःशब्दो हेत्वर्थ इति ॥ अस्यायमर्थः— अथेति मुमुक्षुत्वानन्तरं ब्रह्मजिज्ञासा कर्तव्येति प्रवृत्तिसिद्धयेऽनुवादपरिहाराय[१] च कर्तव्यपदाध्याहारेण तावदन्वयः । तत्र ब्रह्मजिज्ञासैव मुमुक्षुणा किमिति कर्तव्या, आवृत्त्या कर्म कस्मान्न क्रियत इति हेत्वाकाङ्क्षायामाह अतो लोकवेदप्रसिद्धाद्धेतोरिति । तमेव हेतुं स्फुटयति—यस्मादित्यादिना ॥

यदत्र भास्करेण रुद्धे—"अतःशब्दो वृत्तस्यापदेशको[२] हेत्वर्थतया" इति तदपरेणाविश्लक्षे । कथम्? "अतःशब्देन [इदंशब्देन] प्रकृतिभूतेनासन्निहिततयानभिहितस्य कर्मज्ञानफलयोः क्षयाभि[क्षयाक्षयाभि]धानस्य कथमिव पञ्चम्या हेतुत्वमभिधीयते" इति । तदुभयोरभिधानानभिज्ञत्वं विभावयति । यतः सर्वनाम स्वमहिम्ना प्रसिद्धमात्राभिधायकम्, कारणान्तरात्तु सन्निहिताद्यवलम्बते । कथमन्यथा सर्वज्ञः सूत्रकारोऽस्येत्यसूसुचत् प्रपञ्चति च यत् [प्रपञ्चित्रितयम् ।] किञ्च पूर्ववृत्तस्य हेतुत्वाभिधाने पौनरुक्त्यं स्यात् आनन्तर्याभिधानेन, हेतुत्वं तात्पर्यात्, अन्यथा वैयर्थ्यात् अथशब्दस्य, अतो लोकवेदप्रसिद्धः कर्मसाध्यस्य क्षयिष्णुत्वादिति हेतुः[३] सूत्रित इति समञ्जसम् ॥

यच्चावादि[४] "तद्यथेह कर्मजितः" इति केवलकर्मणः क्षयिष्णुत्वमुच्यते न ज्ञानसहकारिणः "स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते" इति श्रुतेरिति, तत्र कर्मण एवाक्षयत्वं श्रूयते, न तु ज्ञानसहितकर्मसाध्यस्य । तद्विषय[यत्व]कल्पना तु न्यायानुगृहीतश्रुतिविरुद्धा । किञ्चोपासनेन चित्तैकाग्र्ये सति साक्षात्कारोदयादक्षयाविद्यानिवृत्तिफलसम्भवादुपासनाख्यकर्मस्तुतिरुपपद्यते । यच्चानेवंविदः[५] कर्मक्षयश्रवणादेवंविदानुष्ठितं कर्माक्षयफलमिति कल्पनम्

१. A. अनुवादित्व.
२. TM. देशके हेत्वर्थप्रतीतपरेणापिश्लक्षे.
३. TM. हेतुस्.
४. T[1] and TM. यच्चावाचि. A. ययावादि.
५. TM. विदुः.

### भाष्यम्

पुरुषार्थं दर्शयति "ब्रह्मविदाप्नोति परम्" इत्यादिः; तस्माद्यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या ॥

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्म च वक्ष्यमाणलक्षणम् "जन्माद्यस्य यतः" इति। अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यम् । ब्रह्मण इति कर्मणि षष्ठी न शेषे, जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तरानिर्देशाच्च । ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुद्ध्यते संबन्धसामान्यस्य विशेषनिष्ठत्वात्; एवमपि

### प्रकटार्थविवरणम्

तल्लिङ्गं साक्षाच्छ्रु[illegible] बाध्यते । तस्मान्मुमुक्षुणा ब्रह्मात्मत्वज्ञानायैव प्रयतितव्यमित्याह—तस्मादिति ॥

अथातःशब्दौ व्याख्यायोत्तरस्य विग्रहमाह—ब्रह्मण इति ॥ तर्हि किं तद्ब्रह्म यस्य जिज्ञासेत्यत आह—ब्रह्मेति ॥ यतो ब्रह्मजिज्ञासां प्रतिज्ञाय स्वयमाचार्यो ब्रह्मलक्षणं वक्ष्यति, अत एव, ब्रह्महत्येति जातिवचनो ब्रह्मशब्दो दृष्टः, तथा ब्रह्मोज्झमिति वेदवचनः "यो ब्रह्माणं विदधाति पूर्वम्" इति हिरण्यगर्भवचनः, तथेहापि स्यादिति नाशङ्कनीयमित्यर्थः । प्रातिपदिकार्थाभिधानमुपेक्ष्य विभक्त्यर्थमाह—ब्रह्मण इतीति ॥ जिज्ञासा तावद्ज्ञानमपेक्षते। ज्ञानं च ज्ञेयापेक्षम् । ज्ञेयान्तरं च न निर्दिष्टम् । ततो ब्रह्मस्वरूपविषयेयं जिज्ञासेत्यर्थः । शेष इति संबन्धसामान्यमुच्यते । सामान्यं च विशेषापेक्षं भवति । जिज्ञासया च ब्रह्मणोऽन्यस्य स्वस्वाम्यादिसंबन्धविशेषस्यासम्भवाद्विषयत्वेनैव सम्बन्धो भविष्यतीत्याह—ननु शेषेति ॥ "कर्तृकर्मणोः कृति" इति कृदन्तप्रयोगेऽपि विशेषविधानात्साक्षात्प्रतीतं कर्मत्वं विहाय संबन्धसामान्यबलेन कर्मत्वकल्पनं व्यर्थमित्याह—एवमपीति ॥ कर्मणिषष्ठीपरिग्रहे ब्रह्मस्वरूपविचार एवैकः प्रतिज्ञातः स्यात् न प्रमाणयुक्तिसाधनफलानाम्; शेषषष्ठी-

१. T. and P. संबन्धसामान्यं च वि.
२. A omits संबन्ध.
३. TM. स कृदन्तवदप्रयोगेऽपि.
४. T[1] and A omit अपि.
५ A. विहाय.

## भाष्यम्

प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कल्पयतो व्यर्थः प्रयासः स्यात् । न व्यर्थः; ब्रह्माश्रिताशेषविचारप्रतिज्ञानार्थत्वादिति चेत्, न, प्रधानपरिग्रहे तदपेक्षितानामप्यर्थाक्षिप्तत्वात् । ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात् प्रधानम् । तस्मिन्प्रधाने जिज्ञासाकर्मणि परिगृहीते, यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति, तान्यर्थाक्षिप्तान्येवेति न पृथक् सूत्रयितव्यानि । यथा 'राजासौ गच्छति' इत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति, तद्वत् । श्रुत्यनुसाराच्च । "यतो वा इमानि भूतानि जायन्ते" इत्याद्याः श्रुतयः "तद्विजिज्ञासस्व । तद्ब्रह्म" इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति । तच्च कर्मणिषष्ठीपरिग्रहे सूत्रेणानुगतं भवति । तस्माद्ब्रह्मण इति कर्मणि षष्ठी ॥

ज्ञातुमिच्छा जिज्ञासा । अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः

## प्रकटार्थविवरणम्

परिग्रहे तु सर्वापि ब्रह्मसम्बन्धिनी जिज्ञासा सूत्रिता[1] भवतीति न मामकीनः प्रयासो व्यर्थ इत्याह—न व्यर्थ इति ॥ अप्रधानविचारं मुखतः प्रतिज्ञाय [2]प्रधानस्याक्षेपकल्पनात् वरं प्रधानविचारं मुखतः प्रतिज्ञाय तदपेक्षितानामर्थाक्षेपकल्पनम्, ततो नायं लाभ इत्याह—न प्रधानेति ॥ नन्विष्यमाणं ज्ञानम्[3], न ब्रह्म; ततः कथं प्रधानब्रह्मविचारपरिग्रहे प्रमाणादीनामर्थाक्षिप्तत्वमित्याशङ्क्याह—ब्रह्म हीति ॥ श्रुत्यनुसाराच्च कर्मणिषष्ठीपरिग्रहो युक्त इत्याह—श्रुत्यनुसाराच्चेति ॥

जिज्ञासाशब्दस्यावयवार्थमाह— ज्ञातुमिति ॥ ननु कि[4]मिदं ज्ञानं नाम ? संविज्जनकः प्रमातृव्यापारः फललिङ्गानुमेय इति भाट्टा बम्भणन्ति । [5]तत्र फलं [लत्वं] नाम साधनत्वम्[साध्यत्वम्]; तत्र कर्तृव्यापारानुमापकं[6] कर्तृव्यापार एव व्यभिचारात् । कर्तृव्यापारव्याप्यत्वम्, चे[7]त्फलत्वं साध्यसिद्ध-

१. A omits सूत्रिता.

२. A omits प्रधा.........प्रतिज्ञाय.

३. A adds प्रतीच्छता सूत्रता भवतीति न मामकीनप्रयासो व्यर्थः

४. A omits तिमिदं.

५. A omits तत्र.

६. T. and P. मानकं.

७. A omits चेत्...साध्यत्वं.

## प्रकटार्थविवरणम्

चत्कारः । क्रियान्यत्वे सति साध्यत्वं चेत् अङ्कुरादौ व्यभिचारः । यतश्च व्यापारजन्म तत एव संविज्जन्मसंभवात् विपक्षबाधकाभावात् अप्रयोजकता वाच्या । नैयायिकवैशेषिकप्राभाकराणां तु आत्मसमवायी विषयप्रकाशो ज्ञानसंवेदनं गुणभूतं प्रत्यक्षमेव; तदा घटोऽपरोक्ष इति घटसामानाधिकरण्यमापरोक्ष्यं[क्ष्यस्य] न स्यात् । ननु ज्ञानस्य तदाकारत्वात्तदुपपत्तिः; न तावद्विषय एवाकारो ज्ञानस्य, प्रकाशाप्रकाशयोरैक्यायोगात्; नापि विषयवत् मूर्तत्वाद्यनिष्टधर्मप्रसङ्गात्; नापि तद्व्यापकत्वं प्रदीपवत् असंसर्गात्; न ज्ञाने प्रतिबिम्बितत्वं मूर्तस्य मूर्ते [अमूर्ते] प्रतिबिम्बादर्शनात्, देहादिव्यवधानाच्च; तस्मादाकारानिरूपणात् न ज्ञानाकारतयापरोक्षव्यवहारो विषये भ्रान्त्या, ज्ञानेऽपि प्रसङ्गात् । न च तत्र जातिसमवायात् मैत्रस्यापरोक्षज्ञाने चैत्रस्यापरोक्ष्यासंभवप्रसङ्गात्; नेन्द्रियजन्यतया परेषामीश्वरज्ञानस्य सौषुप्तस्य चापरोक्ष्यासंभवप्रसङ्गात्; तस्मात् स्वतोऽपरोक्षचित्संभेदादेव ज्ञानार्थयोरापरोक्ष्यमास्थेयम्; ततः ज्ञानवद्विषयस्यापरोक्ष्यासंभवप्रसङ्गात् नात्मगतैव संवित्; गुणत्वे च न स्वाश्रयोपाधौ जन्म, सवित्रादौ प्रकाशगुणस्य स्वाश्रयोपाधौ जन्मादर्शनात्; न च ज्ञानान्तरेण प्रत्यक्षता । तथा हि—संवित् स्वावान्तरजातीयाप्रकाश्या प्रकाशकत्वात् प्रदीपवत् । अथवा संवित् स्वप्रकाशा संवित्त्वात्, विपक्षबाधके सत्यपरोक्षत्वाद्वा; न यदेवं न तदेवं यथा वस्त्रम्; विपक्षबाधकश्च घटावच्छिन्नवर्तमानसंविदोऽस्फुरणप्रसङ्गात् पूर्वसंयोगे[संवेदने]निवृत्तेः भावे वा,युगपदनन्तसंवित्प्रसङ्गः। संवित्समवाय्यात्ममनःसंयोगो हि संविदः सामग्री; सा चान्यत्राप्यविशिष्टा इति । "संवेदनं क्रियारूपमेव ज्ञानम्" इति भास्करो रोरवीति । तदप्यसङ्गतम् । निरवयवस्यात्मनः क्रियायोगात्, प्रथमपरिणाम एव कृत्स्नस्योपयोगाद्द्वितीयकार्याभावप्रसङ्गाच्च । परिशेषात् मनःपरिणामः संविद्व्यञ्जको ज्ञानम् । "धीर्भीरित्येतत्सर्वं मन एव" इति च श्रुतिः । धीशब्दवाच्यज्ञानपरिणामवन्मनोऽन्वाह्यसंवेदनं च विषयावच्छिन्नं चैतन्यमेव । तथा हि—प्रका-

१. T, T¹, TM and P. ज्ञानं.
२. TM. प्रकाशायोगात् । नापि.
A. प्रकाशयोरैक्या.
३. TM omits प्रतिबिम्बादर्शनात्.
४. A. आजाराद्य-
५. A. बाधे.
६. TM. संविदा स्फुरणप्रसङ्गात्
A. संविदौ.
७. TM. अवच्छि.
८. T and P. मनोबाह्य.

भाष्यम्

**कर्म,फलविषयत्वादिच्छायाः। ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म। ब्रह्मा-**

प्रकटार्थविवरणम्

ज्ञानशक्तिमत् सत्त्वप्रधानं मनः अदृष्टादिसहकृतं दीर्घप्रभाकारेण स्वकर्मदेशं सरीसर्ति। तत्संसृष्टे विषये चैतन्यं प्रतिबिम्बते[म्बते] तद्विषयसंवेदनम्; तच्च व्यञ्जकोदयव्ययाभ्यामुदयव्ययवाद्भिन्नं च चैकास्ति। स्वरूपेण च प्रतिबिम्बं बिम्बमेवेत्यात्मैक्याभिधानं नानुपपन्नम्। तस्मात् क्षणिकमिदं रूप्यादिज्ञानम्; नित्यमात्मचैतन्यम्; कथं नित्यानित्ययोरैक्यम्—इत्यादि पररहस्यानध्यवसाय-विलसितमेव। अनुमानादौ चोपलब्धसंबन्धार्थाकारेण परिणतं मनोऽनव-भासव्यावृत्तिमात्रफलम्, न तु संविद्यञ्जकम्, लिङ्गादिसंविद्व्यवधानप्रतिबन्धा-दित्यलम्॥

ननु भवत्वेवं ज्ञानसंविद्विभागः, तथापि प्रतिपन्ने ब्रह्मणि न ज्ञानेच्छा सिद्धत्वाद्ज्ञानस्य; नाप्यप्रतिपन्ने, अनवगतविषयेच्छायोगात् इत्याशङ्क्याह - अवगतिपर्यन्तमिति॥ आचार्येण 'त्वं ब्रह्मासि' इत्युपदिष्टे 'अहं ब्रह्मास्मीत्याचार्यो मामुपदिदेश, न ममावगतिरायाति' इति पारोक्ष्यमेव मन्यते। ततोऽसाववगति-पर्यन्तं ज्ञानमिच्छति, सुखसाक्षात्कारतयावगतेः फलत्वात्। तं च जिज्ञासुं पुरुष-मुद्दिश्य श्रवणादीनि साधनानि विधीयन्ते। तैश्च श्रवणादिभिः प्रमाणप्रमेय-चित्तगतसकलदोषाणां पारोक्ष्यभ्रमकारणानां निरासे कदाचिदनुस्मर्यमाणशब्दा-देवावगतिफलकं ज्ञानमुपजायते, चित्रायागवत् श्रवणादीनामनियतफलत्वा-दिति भावः। यद्यपि वस्तुनोऽपरोक्षत्वात् प्रथममपरोक्षमेव ज्ञानमुत्पद्यते तदाप्यापातज्ञानस्य संशयतिरस्कृतत्वात् अन्यत्प्रमाणज्ञानमेष्टव्यमित्याह—ज्ञानेन हीति॥ किमिति साक्षात्कर्तुमिष्टं ब्रह्मेत्यत आह—ब्रह्मावगतिर्हीति॥ जीव-गतसकलसंसारस्य बीजं या जीवोपाधिरविद्या तदादेस्तत्कार्यस्य प्रमातृत्व-

१. TM. विषयचै.
२. T, T[1], TM and P. च.
३. TM. त्यालम्बनम्.
४. TM omits ननु.
५. TM. माणे.
६. T[1], TM, P and A. काल.
७. T[1] and TM उत्पाद्यते.
८. TM. संस्कारस्य.
९. A. यावज्जी-

भाष्यम्

गतिर्हि पुरुषार्थः, निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणात् । तस्माद्ब्रह्म जिज्ञासितव्यम् ॥

तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात्; यदि प्रसिद्धं न जिज्ञासितव्यम्; अथाप्रसिद्धं नैव शक्यं जिज्ञासितुमिति । उच्यते—अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम् । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते, बृहते-

प्रकटार्थविवरणम्

प्रमुखस्यानर्थस्यावगत्या विनाशादवगतिः पुरुषार्थ इत्यर्थः । निश्शेषदुःखनिवृत्तिः निरतिशयानन्दावाप्तिश्च परमपुरुषार्थः । दुःखप्राप्तिरानन्दाप्राप्तिश्च जीवस्याविद्याधीनैवेति अविद्यास्तमयः पुरुषार्थः, तत्साधनत्वादवगतिरपि पुरुषार्थः कथ्यत इति भावः । एवं सूत्रस्य पदानि व्याख्याय इष्यमाणज्ञानाविनाभूतं विचारं जिज्ञासापदलक्ष्यमुपादाय वाक्यार्थमाह—तस्मादिति ॥ यस्माद्ब्रह्मज्ञानाधीनः परमः पुरुषार्थः तस्मात् मुमुक्षुणा ब्रह्मज्ञानाय विचारः कर्तव्य इत्यर्थः ॥

इदानीं प्रसिद्धाप्रसिद्धविकल्पेन ब्रह्मज्ञानविचारारम्भमाक्षिपति—तत्पुनरिति ॥ यद्यन्यतः प्रतिपन्नं ब्रह्म तदा विचारो व्यर्थः निष्पादितक्रिये कर्मण्यविशेषाधायिनः साधनस्य साधनन्यायातिपातात् । अथान्यतोऽप्रतिपन्नम्, तदोद्देशनासंभवादशक्यो विचार इत्यर्थः । सामान्यतः प्रतिपन्नं विशेषतो विप्रतिपन्नं जिज्ञास्यं दृष्टम्; अन्यथा परस्यांक्षेपरूपविचारानुपपत्तेः; ब्रह्मापि पदव्युत्पत्तिबलेनापातप्रतिपन्नं भवतीति तज्जिज्ञासोल्लसतीत्याह—उच्यत इत्यादिना ॥ "बृह बृहि वृद्धौ" इति धातुर्महत्त्वे वर्तते । तच्च सङ्कोचाभावे[त्वकाभावे] देशतः कालतो वस्तुतश्चापरिच्छिन्नत्वम् । तत्र कालतोऽनवच्छेदात् नित्यम्;

१. TM omits अनर्थस्य.
२. T and P. पिनाशात्.
३. T omits यस्मात्.
४. T and TM. परः.
५. TM. प्रसिद्धार्थप्रसिद्ध. T, T¹ and P. प्रसिद्धावि.
६. TM omits ब्रह्म.
७. A adds निष्पादितो व्यर्थः.
८. T, T¹, P and TM add विशेषतो वापातप्रतिपन्नं.
९. TM. पन्नाजिज्ञास्यदृष्टं.
१०. A adds प्रधान.
११. P and TM. धातू वृद्धौ महत्त्वे च वर्तते.

भाष्यम्

धातोरर्थानुगमात् । सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः । सर्वो ह्यात्मास्तित्वं प्रत्येति, न 'नाहमस्मि' इति । यदि हि नात्मास्तित्वप्रसिद्धिः स्यात्, सर्वो लोको 'नाहमस्मि' इति प्रतीयात् । आत्मा च ब्रह्म । यदि तर्हि लोके ब्रह्म आत्मत्वेन प्रसिद्धमस्ति, ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम् । न ; तद्विशेषं प्रति विप्रतिपत्तेः । देहमात्रं चैतन्यविशिष्टमात्मा इति प्राकृता जना लौकायतिकाश्च प्रतिपन्नाः । इन्द्रियाण्येव चेतनान्यात्मा इत्यपरे । मन इत्यन्ये । विज्ञानमात्रं क्षणिकमित्येके । शून्यमित्यपरे । अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे । भोक्तैव केवलं न कर्तेत्येके । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिः इति केचित् । आत्मा स भोक्तुरित्यपरे । एवं बहवो विप्रति-

प्रकटार्थविवरणम्

वस्तुतोऽनवच्छेदाच्छुद्धम्; महत्त्वादेव शुद्धं¹ मुक्तस्वभावं सर्वज्ञं सर्व²शक्तिसमन्वितं च, अन्यथा हि परिच्छिन्नतापातात् । एवं बृहत्त्वाद्ब्रह्मेति व्युत्पत्त्या बृहतेर्धातोरर्थानुसारादापातप्रतिपन्नं ब्रह्मेति विचारारम्भः संभाव्यत इति भावः । अत्र चान्यापोहेनोपदिश्यमाना नित्यत्वादयो निरुपाधिकधर्माः; सं[स्व]भावेनोपदिश्यमानाश्च सर्वज्ञत्वादयः सोपाधिकधर्माः; ते च शब्द³शक्तिगोचरतया वेदान्तवेद्याः; तदभिधानमुखेन तु स्वप्रकाशसुखव्यक्तावेकस्यां तात्पर्यमित्यखण्डनिष्ठा वेदान्ता वक्ष्यन्ते । प्रसिद्धत्वे हेत्वन्तरमाह—सर्वस्येति ॥ नन्वस्तु प्रसिद्धिरात्मनः; तावता⁴ ब्रह्मणि किमायातमित्यत आह—आत्मा च ब्रह्मेति ॥ "अयमात्मा ब्रह्म" इति शास्त्रादित्यर्थः । आत्मत्वेन लोके प्रसिद्धमस्ति यद्वस्तु तच्छ्रुतेः ब्रह्म चेत् तर्हि श्रुतेरेव तद्ज्ञानमिति व्यर्थो विचार इत्याह यदि तर्हीति ॥ विप्रतिपत्तिनिराकरणेन विचारोऽर्थवानित्याह—तद्विशेषं प्रतीति ॥ विप्रतिपत्ती⁵र्दर्शयति—देहमात्रमित्यादिना ॥ ननु निर्मूलविवादनिराकरणाय न विचारारम्भो युक्त इत्याशङ्क्याह एवं बहव इति ॥ युक्तिवाक्यसमाश्रयाः सन्तः अन्त्यं

१. T, T¹ and P. बुद्ध-

२. T¹ and TM. omit सर्व.

३. T¹ omits शब्द.

४. TM. तथावता.

५. A. पत्तिं.

भाष्यम्

पन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्तः। तत्राविचार्य यत्किंचित्प्रतिपद्यमानो निःश्रेयसात् प्रतिहन्येत, अनर्थं चेयात्। तस्माद्ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते ॥

ब्रह्म जिज्ञासितव्यमित्युक्तम्। किंलक्षणं पुनस्तद्ब्रह्म इत्यत आह भगवान् सूत्रकारः—

## जन्माद्यस्य यतः ॥ १-१-२ ॥

प्रकटार्थविवरणम्

पक्षं प्रतिपन्नाः तदाभाससमाश्रयास्सन्तः इतरेषु पक्षेषु व्यवस्थिताः। तदाभासत्वं च स्वावसर एव वक्ष्यामः। ननु सन्तु विप्रतिपत्तयः; पक्षान्तरपरिग्रहेणापि तन्निराकरणात् समीहितसिद्धेः किं वेदान्तविचारारम्भेणेत्याशङ्क्याह—तत्राविचार्येति ॥ औपनिषदपुरुषज्ञानाधीनत्वान्निःश्रेयसस्य पक्षान्तरपरिग्रहे च तदभावात् न निःश्रेयसं प्राप्नोति, किन्त्वनर्थमेवेयात्, "अन्धं तमः प्रविशन्ति" "ये के चात्महनो जनाः" इति श्रुतेरित्यर्थः। यस्माद्वेदान्तवाक्यान्यविचार्य निःश्रेयसं न लभते तस्मात् निःश्रेयसकामस्येयं मीमांसा आचार्येण प्रारभ्यत इत्युपसंहरति ॥

पूर्वाधिकरणेन सङ्गतिमाह—ब्रह्मेति ॥ यद्यपि ब्रह्मणो जिज्ञास्यत्वप्रतिज्ञावचनेनार्थात् प्रमाणादिविचाराः प्रतिज्ञाताः तथापि ब्रह्मप्रमाणं ब्रह्मयुक्तिरित्यादिविशिष्टविचाराणां विशेषणभूतब्रह्मप्रतिपत्तिसापेक्षत्वात् प्रथमं स्वरूपं वक्तव्यमित्याह[3]—किंलक्षणं पुनरिति ॥ श्रौतस्य ब्रह्मणः श्रौतलक्षणसमर्पकमेव सूत्रमवतारयति— अत आहेति ॥ अत्र च "यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्यं विषयः। तत्किं ब्रह्म न लक्षयति उत लक्षयतीति संशयः। आगमस्यानुमानानुगुणत्वात् एकस्योभयकारणत्वस्यै दृष्टान्ताभावेनानुमातुमशक्यत्वात् एककारणत्वस्य च लक्षणत्वे वस्तुतःपरिच्छेदात्

१. T, TM, P and A. सन्ति.
२. A. जिज्ञास्यत्वे.
३. TM adds पुनरिति.
४. TM and A add च.

### भाष्यम्

जन्म उत्पत्तिः आदिः अस्य—इति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिभङ्गं समासार्थः । जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च । श्रुतिनिर्देशस्तावत्—"यतो वा इमानि भूतानि जायन्ते" इत्यस्मिन् वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात् । वस्तुवृत्तमपि, जन्मना लब्धसत्ताकस्य धर्मिणः स्थितिप्रलयसंभवात् । अस्येति प्रत्यक्षादिसंनिधापितस्य धर्मिण इदमा निर्देशः। षष्ठी जन्मादिधर्मसंबन्धार्था ।

### प्रकटार्थविवरणम्

लक्ष्यस्य ब्रह्मत्वायोगात् न लक्षयतीति पूर्वः पक्षः । सिद्धान्तस्तु पौरुषेयतया शङ्कितदोषानुमानस्यापौरुषेयतया अनाशङ्कितदोषागमानुग्राहकतर्कविशेषत्वात् अतीन्द्रिये स्वातन्त्र्येण प्रमाणत्वायोगात्, आगमप्रतिपन्नोभयकारणत्वे सुखादिदृष्टान्तेन संभावनाबुद्धिमात्रहेतुत्वात्, वस्तुतःपरिच्छेदाभावेन लक्ष्यस्य ब्रह्मत्वसंभवात्, जगज्जन्मादिनिमित्तोपादानं ब्रह्म लक्षयतीति । तदेतदाह—

जन्माद्यस्य यतः ॥

इति ॥ प्रयोजनं च तत्र तत्र पुरुषप्रयत्नकरणं सर्वत्र द्रष्टव्यम्, यतो विषयसंशयपूर्वपक्षसिद्धान्तफलात्मको हि पञ्चावयवो विचारः अधिकरणम् । पदच्छेदः पदार्थोक्तिः विग्रहश्चेत्येतत्त्रयं व्याख्यानाङ्गं दर्शयति—जन्मोत्पत्तिरिति॥ अन्यपदार्थो बहुव्रीहिसमासः, तत्र प्रधानस्यैवैकदेशो यत्र विशेषणतया ज्ञायते स तद्गुणसंविज्ञानः, यथा लम्बकर्ण इति । इहापि जन्मादिरस्य जन्मादेरिति विशेष्यस्य जन्मादेरेवैकदेशभूतं जन्म विशेषणमित्यर्थः । तद्गुणसंविज्ञाने लाभमाह— जन्मेति ॥ जन्म आदिरस्य स्थित्यादेरित्यतद्गुणसंविज्ञाने स्थितिभङ्गमात्रं जन्मादिशब्दार्थः स्यादित्यर्थः । एकैकं ब्रह्मोपलक्षणं न भवतीति समाहाराभिप्रायः । ननु जन्मन आदित्वे प्रमाणाभावात् कथमादित्वेनोपादानमित्याशङ्क्याह— जन्मनश्चेति ॥ इदंप्रातिपदिकस्य षष्ठ्याश्च विभागेनार्थमाह— अस्येत्येव-

१. TM. कारणं.  
२. TM. देशभूतजन्म.  
A. एकदेशं  
३. TM. विज्ञानला.  
४. TM. भाग.

### भाष्यम्

यत इति कारणनिर्देशः । अस्य जगतो नामरूपाभ्यां व्याकृतस्य अनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणात् भवति तद्ब्रह्म इति वाक्यशेषः । अन्येषामपि भावविकाराणां त्रिष्वे-

### प्रकटार्थविवरणम्

मादिना ॥ पञ्चम्यर्थमाह—यत इतीति ॥ पदार्थानभिधाय वाक्यार्थमाकाङ्क्षितपदपूरणेनाह— अस्य जगत इत्यादिना ॥ जगत्कारणस्य श्रुतिप्रसिद्धसर्वज्ञत्वादिसंभावनाय जगतो विशेषणानि । यथा कुम्भं चिकीर्षुः कुम्भकारः कुम्भशब्दविकल्पितं पृथुबुध्नोदराकाररूपितं च बुद्धावालिख्य यथाविर्भूतमेव व्याकरोति तथा, आदिकारणमपि नाम्ना रूपेण च रूपितं व्याकरोदिति तदभिज्ञत्वं संभावयति । संसारिविलक्षणस्येश्वरस्य कारणत्वं श्रुत्योक्तं संभावयति—अनेककर्तृभोक्तृसंयुक्तस्येति ॥ प्रतिनियतानि देशकालनिमित्तानि येषां क्रियाफलानां तदाश्रयस्येत्यनेन श्रुत्युक्तं कारणं संभावयति । शरीरादिपरिच्छिन्नशक्तिभिर्मनसाप्यचिन्त्यं रचनारूपमस्येति सर्वशक्तित्वं संभावयति । यथा 'यत्र काकस्तिष्ठति असौ देवदत्तगृहम्' इति काकाधारेण देवदत्तगृहमुपलक्ष्यते, तथा यतः कारणाज्जगतो जन्मादि भवति तद्ब्रह्मेति जगत्कारणेन ब्रह्मोपलक्ष्यते । मायाप्रतिबिम्बितं हि चैतन्यं सर्वज्ञं सर्वशक्तिसमन्वितं जगत्कारणं महावाक्ये तत्पदवाच्यम्; तेन विशिष्टपदार्थेन तत्स्वरूपं बिम्बस्थानीयं ब्रह्मोपलक्ष्यते यदवगतिः जीवस्य पुरुषार्थ इति । अथशब्दोपात्तं मुमुक्षुं सामान्यतः प्रतिपन्नं विशेषतो विप्रतिपन्नमुद्दिश्य यत्स्वरूपावगतये विचारः प्रवृत्तः । स्वरूपेण च विशिष्टपदार्थस्य तादात्म्यात् जगत्कारणं ब्रह्मेति सामानाधिकरण्यं न विरुध्यते, काकाधिकरणं गृहमितिवत् । न हि काकाधिकरणत्वं गृहस्वरूपं तद्विगमे तद्भङ्गप्रसङ्गादिति द्रष्टव्यम् । ननु परिणामादयोऽपि भावविकाराः सन्ति; किमिति ते न गृह्यन्त इत्याशङ्क्याह—अन्येषामपीति ॥ न ह्यजातस्यास्थित-

१. T. Space is left for writing this word.
२. TM. नामरूपेण.
३. TM. श्रुत्युक्त
४. A. अचिन्त्यरच-
५. A omits यथा.
६. A. कारणात् जन्मादिः जगतो.
७. A. हि.

भाष्यम्

वान्तर्भाव इति जन्मस्थितिनाशानां इह ग्रहणम् । यास्कपरिपठितानां तु 'जायते, अस्ति' इत्यादीनां ग्रहणे तेषां जगतः स्थितिकाले संभाव्यमानत्वात् मूलकारणादुत्पत्तिस्थितिनाशा जगतो न गृहीतास्स्युरित्याशङ्क्येत; तन्मा शङ्कि इति या उत्पत्तिः ब्रह्मणः कारणात् तत्रैव स्थितिः प्रलयश्च ते गृह्यन्ते । न यथोक्तविशेषणस्य जगतः यथोक्तविशेषणमीश्वरं मुक्त्वा अन्यतः प्रधानादचेतनात् अणुभ्यो वा अभावाद्वा संसारिणो वा उत्पत्त्यादि संभावयितुं शक्यम् । न च स्वभावतः, विशि-

प्रकटार्थविवरणम्

स्याविनष्टस्य वा कश्चिद्विकारस्संभवतीति तदधीनत्वात्तद्ग्रहणेन[1] तेऽपि गृहीता एवेत्यर्थः । ननु निरुक्तकारस्य यास्कस्य "जायतेऽस्ति विपरिणमते विवर्धते परिक्षीयते विनश्यति" इति सूत्रं मूलीकृत्य जन्मादिशब्देन तेषां ग्रहणे अन्तर्भावोक्तिप्रयासः परिहृतो भविष्यतीत्याशङ्क्याह—यास्केति ॥ यास्कवचनस्य हि पौरुषेयस्य मूलं तदीयं प्रत्यक्षमेव वक्तव्यम् । तच्च महाभूतसृष्ट्युत्तरकालं भौतिकानां षड्भावविकारगोचरम्; ततस्तन्मूलत्वे सूत्रस्य भूतपञ्चकं ब्रह्मेति लक्षितं स्यादिति; तस्माच्छ्रुतिसिद्धाविशेषितजन्माद्युपादानेन लक्षणसूत्रं प्रवृत्तमित्यर्थः । युक्तिमन्तरेण[2] लक्षणस्यातिव्याप्तिपरिहारासंभवात् साप्यर्थादनेन सूत्रितेत्यभिप्रेत्य तामाह—न[3] यथोक्तेत्यादिना ॥ अस्य च प्रपञ्चो द्वितीये भविष्यति[4] । "स्वभावादेव विचित्रं जगत्" इति लोकायतः । तं प्रत्याह—न च स्वभावत इति ॥ अन्वयव्यतिरेकाभ्यां कार्यस्य लोके कारणापेक्षानियमदर्शनात् तदपलापोऽशक्यकरणः । तर्कतो[7] निरूपणासहत्वं[8] त्वस्माकं भूषणमेव 'यद्रजतमभात् सा शुक्तिः' इति मिथ्याभूतस्यापि लक्षणत्वदर्शनादिति । ननु वैशेषिकादयोऽनुमानत एव जगत्कारणं सर्वज्ञमीश्वरं व्यवस्थापयन्ति । किमा-

१. A. सूत्रेण.
२. TM. युक्तिमन्तरेण स्यादति.
३. T and P व्यर्थां.
४. TM and A. omit न.
५. A adds इति.
६. A. कारणं.
७. T, T¹, and P. ततो.
८. TM. तस्मात्.

### भाष्यम्

ष्टदेशकालनिमित्तानामिहोपादानात् । एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्यन्ते ईश्वरकारणवादिनः ॥

### प्रकटार्थविवरणम्

[१]गमानुगुणयुक्तिसूत्रणेनेत्याशङ्क्याह — एतदेवेति ॥ येयं युक्तिरुक्ता, सर्वज्ञमीश्वरं विहाय नामरूपाभ्यां व्याकृतस्येत्याद्यभिहित[२]विशेषणस्य जगतो जन्मादि प्रधानादेः संभावयितुं न शक्यते । अचेतनत्वेन वैचित्र्यसम्पादनाशक्तेः इति एतदेवानुमानं निश्चायकमिति भ्रमादेव मन्यन्त इत्यर्थः । यथा हि—धूमजातीयमग्निजातीयेनाविनाभूतं भूयोदर्शनसंस्कारसध्रीचीनाक्षसंप्रयोगेण [३]गृहीतमिति पर्वतेऽपि धूमजातीयो दृष्टः स्वव्यापकसम्बन्धं पर्वतस्य गमयति पक्षधर्मताबलात् न तथा कार्यमात्रस्य तद्विशेषस्य वा सर्वज्ञाशरीरकर्त्रा व्याप्तिः क्वाप्युपलब्धा ; अतः पक्षधर्मताबलादपि पृथिव्यादेः कार्यता कथङ्कारं सर्वज्ञाशरीरकर्तृकत्वं साधयेत् । विमतं सकर्तृकम्, कार्यत्वात् कुम्भवदिति सिद्धसाधनम् । यथाशब्दं ह्यनुमाने साधनदूषणे नाभिप्रायवशात्; अन्यथा प्रसिद्धिविध्वंसात् । कर्तृजन्यतापि तथा, अदृष्टद्वारेण जीवजन्यत्वात् । कार्यत्वं सप्रतियोगिकं तन्निश्चयं विना न निश्चीयते भेद इव प्रत्यक्षेण ; अतः सन्दिग्धासिद्धो हेतुः । कारणान्तरेण नैराकाङ्क्ष्ये चाप्रयोजकत्वम् ; सावयवत्वं द्रव्यान्तरसमवेतत्वं कारणे सन्दिग्धे सन्दिग्धमिति न कार्यत्वसाधकम्; मध्यमपरिमाणवत्वं च । विचारासहमेव चेत् साधनम्[४], अपसिद्धान्तः ; तत्सहं चेत्तर्हि सिद्धं सम्बध्येत असिद्धं वा, नोभयथापि । धूमवत्त्वमपि नो विचारासहमेवेति न साम्यम् । कार्यत्वं च प्रागसतः सत्तासमवायादिलक्षणं तदितरेतराश्रयात् न निश्चेतुं शक्यम् । न चौपनिषदं प्रति विद्युदादिप्रतिबन्दिग्रहः ; तस्मादयुक्तं कार्यानुमानम् । यच्चावाचि कर्तृमात्रमनुमानात् सिद्ध्यति, सर्वज्ञत्वादिसिद्धिरनुपपत्त्या इति, तन्न, कतिपयपरिचयमात्रेणापि कर्तृत्वोपलम्भात् । न हि कुम्भकारोऽदृष्टं [५]तन्निमित्तं ज्ञातुमीष्टे ; नापि मधु-

१. A. गमने.

२. TM. गत.

३. T and TM. भूतमिति.

४. TM. साधनमपि.

५. TM. इष्टेनापि.

प्रकटार्थविवरणम्

धारणादिप्रयोजनविशेषम्; नापि कर्तृपुरुषविशेषम्। नाप्येकत्वम्, बहुकर्तृकस्यैव प्रासादादेरुपलम्भात् महतः कल्पनालाघवानवतारात्; एकस्य शरीरादिरहितस्य नित्या ज्ञानेच्छाप्रयत्ना इति परस्यैव गरीयसी कल्पना। किञ्च यथा पाचियोगात्पक्ता तथा कृतियोगात्कर्ता; अतः पक्षधर्मताबलेन कृतिमत्सम्बन्धे सिद्धेऽपि प्रमातृसम्बन्धः कथं सिद्ध्यति, भ्राम्त्युत्प्रेक्षापूर्वकृतिमत्त्वस्य कुलालादावेव बहुलमुपलम्भात्। अथ उपादानसाक्षात्काराधीनकृतिमत्त्वं कर्तृत्वम्, तर्हि शब्दोपादानसाक्षात्कारानभ्युपगमादस्माकमनैकान्त्यम्। न च तस्यापि पक्षता अनादिप्रसिद्धकर्तृकादन्यत् सकर्तृकमिति उदयनोद्गारात्। तत्राप्युक्तविधकर्तृकत्वसाधने प्रत्यक्षविरोधोऽनुपलब्धिविरोधो वा? यथा विमतं शिरः शृङ्गि शिरस्त्वात् संप्रतिपन्नवत् इति। अत्र अयोग्यत्वादनुपलम्भः स्यादिति सदनुमानतापातः। शृङ्गत्वाद्योग्यत्वे कर्तृत्वादित्येवोत्तरम्। न च कर्ता प्रत्यक्षागोचरः, व्याप्तिग्रहणाभावप्रसङ्गात्। ननु पर्वते वह्निसाधनमप्यनुपलब्धिबाधितं स्यात्; न, प्रत्यक्षोपलब्ध्यभावेऽपि कार्यस्य निष्कारणकत्वप्रसङ्गतर्कप्रसूनोपलब्धिसंभवात्। नेह तर्कस्याप्यवसरः, परिदृष्टेनैव कर्त्रा नैराकाङ्क्ष्यात। किञ्च भवदुक्तकर्तृलक्षणे प्रलयस्य कुम्भादिध्वंसस्य चाकर्तृकत्वप्रसङ्गः। अथ भावकार्यस्योक्तविधकर्तृकत्वोपलम्भात् क्षित्यादेरपि तदनुमानम्, तर्हि शरीरि[12]पूर्वकत्वस्याप्युपलम्भात्[13] तदपि किं नानुमीयते। न चैतत् सावयवत्वमपि स्यादितिवत् जातिमात्रम्, सर्वत्राव्यभिचारात्। सावयवत्वं तु क्रियादौ व्यभिचरतीत्यसदुत्तरं तस्मादतीन्द्रियेऽपि त्वदृष्टं किञ्चिदेवानुमातव्यम्, न[14] मदृष्टमिति नियामकाभावात्; नानुमानात्सर्वज्ञकर्तृकत्वनिश्चयः। अयं घट एतज्जनकानित्येतरज्ञानजन्यः कार्यत्वात् पट[15]वत् इत्यत्र

१. T. विशेषणावि.

२. T विशेषणाप्ये.

३. P and A. महत्व-

४. T, T[1], P and A. कल्पनाला.

५. T space is left for writing यथा पचि.

६. T. कर्तृत्वपक्ष.

७. TM. अनेकान्त:.

८. TM. लम्भः स्यादपि.

९. TM. पातम्.

१०. T नैक.

११. T दृष्टो नैव.

१२. TM. शरीर.

१३. TM. उपाल.

१४. P ममद.

१५. T, P and TM. घट.

भाष्यम्

नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे । न; वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम् । वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते । वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिः, नानुमानादिप्रमाणान्तरनिर्वृत्ता । सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु, तदर्थग्रहणदार्ढ्याय अनुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवत् न निवार्यते, श्रुत्यैव च सहायत्वेन तर्कस्याप्यभ्युपेतत्वात । तथा हि

प्रकटार्थविवरणम्

विपक्षबाधकाभावात्, अयं घट एतज्जनकागर्दभेतरजन्यः कार्यत्वात् पटवदित्यतिप्रसङ्गलक्षणप्रतिकूलतर्कपराहतत्वाच्चाप्रयोजकता । यश्चायं व्यतिरेकी क्षित्यादि सर्वज्ञकर्तृकं[1] कार्यत्वात् न यदेवं न तदेवं यथा नभ इति, तत्र सर्वज्ञकर्तृकत्वाभावप्रमितेः सर्वज्ञमितिसापेक्षत्वादितरेतराश्रयपाशावारितत्वेन[2] व्यतिरेकानवधारणमिति सन्दिग्धानैकान्तिकम् । न ह्यस्माकमिव तार्किकाणां प्रसिद्धिमात्राद्व्याप्त्यध्यवसायः । किञ्चाप्रसिद्धविशेषणः पक्षः, अन्यथा शशविषाणकर्तृकत्वप्रसाधनेऽपि व्यतिरेकिणो निवारकानुपलम्भात् नायमपि निश्चायकमित्यलम् ॥

ननु भवदीयसूत्रकारेणाप्यनुमानमेवोपन्यस्तम्; तत्कथमनिश्चायकमुच्यत इत्याह—नन्विति ॥ ब्रह्मावगतये हि शारीरकप्रणयनम्; सा च[3] वाक्यार्थान्वयिपदार्थविचारणासमुत्थलक्ष्यवस्त्वध्यवसाननिर्वृत्तेति न प्रमाणान्तरं सूत्रयाम्बभूवेत्याह—न; वेदान्तेति ॥ किमत्यन्तानपेक्षितमेव[4] मानान्तरमिति नेत्याह—सत्स्विति ॥ यथा विमतम् अभिन्ननिमित्तोपादानम्, कार्यत्वात् सुखादिवदिति[5] मीमांसकं प्रति तार्किकाणां चेश्वरस्य निमित्तत्वे सिद्धे[6] विमतं चेतनप्रकृतिकम्, कार्यत्वात् सुखादिवदिति प्रयोक्तव्यम्; "तदात्मानं स्वयमकुरुत" इति श्रुतिसिद्धाभिन्ननिमित्तोपादानत्वसम्भावनाय । किञ्च मननशब्दाभिधेययुक्त्यनुसन्धानं वि-

१. TM and A कर्तृकः.
२. T and TM. वारितत्वे.
३. T leaves space for च...र्था
४. TM. समर्थ.
५. TM. क्षितत्वं.
६. T and T[1] omit इति.
७. T. सिद्धेऽपि मतं.

## भाष्यम्

"श्रोतव्यो मन्तव्यः" इति श्रुतिः "पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाचार्यवान्पुरुषो वेद" इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति । न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम् । किं तु श्रुत्यादयः अनुभवादयश्च यथासंभवमिह प्रमाणम्,

## प्रकटार्थविवरणम्

दधती श्रुतिरेव तर्कापेक्षां दर्शयतीत्याह—श्रोतव्य इति ॥ अन्यापि श्रुतिः स्वस्य पुरुषबुद्ध्यपेक्षां दर्शयतीत्याह—पण्डित इति ॥ यथा कश्चिद्बुद्धिमान् तर्ककुशलः चोरैश्चक्षुषी बध्वा गान्धारदेशाद्दूरतरारण्ये निहितोऽपि वनेचरादिप्रश्नपरम्परया स्वदेशमेव प्राप्नोति, तथा अविद्याकामादिचोरैः स्वदृष्टिमपहृत्य संसारारण्ये निहितः पुरुषः कारुणिकेनाचार्येण "तत्त्वमसि" इति श्रावितः बुद्धिमांश्चेत्पुनःपुनः परिप्रश्नेन तां तामाशङ्कां निरस्य स्वरूपमध्यवस्यति, मन्दबुद्धिश्चेत् असंभाव्यमानतया श्रुतिं हित्वा अन्यदेव जिज्ञासते, ततः पुरुषकौशलमपि श्रुत्यावगतिसिद्ध्येऽपेक्ष्यत इति भावः । ननु यथा धर्मजिज्ञासायां यत् श्रुत्यादिभिर्विनियुक्तं तदेवानुष्ठीयते, न पुरुषकौशलमप्यपेक्ष्यते, तथा वेदार्थत्वाविशेषात् न ब्रह्मजिज्ञासायामप्यन्यापेक्षा युक्तेत्याशङ्क्याह—न धर्मजिज्ञासायामिवेति ॥ श्रुतिः पदान्तरनिरपेक्षः शब्दः ; तद्विनियोगे मानम्, यथा प्रकरणाम्नानादपूर्वार्थत्वे मन्त्राणां सिद्धे "कदा चन स्तरीरसि" इत्यस्या ऋचो गार्हपत्योपस्थाने विशेषविनियोगः "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति श्रुत्या । अश्रुतसामर्थ्यं लिङ्गं तदपि विनियोजकम्, यथा "बर्हिर्देवसदनं दामि" इत्यस्य बर्हिर्लवनप्रकाशनसामर्थ्यात्तत्र विनियोगः । अनेकपदसामर्थ्यं वाक्यम्, यथा "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति । वाक्यद्वयसामर्थ्यम् आरभ्याधीतविषयं प्रकरणम्, यथा साधिकारस्य कर्तव्यस्येतिकर्तव्याकाङ्क्षया निरधिकारस्येतिकर्तव्यस्याधिकाराकाङ्क्षया परस्परसंबन्धः प्रयाजादेः दर्शादिभिः । क्रमपठितानां क्रमपठितैर्यथाक्रमं संबन्धः स्था-

१. T, P and TM omit यथा.

२. TM. इति चेति.

३. TM. बर्हिर्देवन.

४. A omits वाक्यम्.

५. TM and A add च.

भाष्यम्

अनुभवावसानत्वात् भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य । कर्तव्ये हि विषये नानुभवापेक्षास्तीति श्रुत्यादीनामेव प्रामाण्यं स्यात्, पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्य । कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकं च कर्म; यथा अश्वेन गच्छति, पद्भ्याम्, अन्यथा वा, न वा गच्छतीति । तथा "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाति" "उदिते जुहोति" "अनुदिते जुहोति" इति । विधिप्रतिषेधाश्च अत्र

प्रकटार्थविवरणम्

नम्, यथा क्रमेण दशेष्टयः पठिताः "ऐन्द्राग्नमेकादशकपालम्" इत्याद्याः दश । मन्त्राश्च "इन्द्राग्नी रोचना दिवः" इत्यादयः । तत्र, प्रथमस्थानपठितेन कर्मणा संबन्धो द्वितीयस्थानपठितेन नेत्येवं संज्ञासाम्यम् । समाख्या यथा आध्वर्यवसंज्ञकानां मन्त्राणामाध्वर्यवसंज्ञके कर्मणि संज्ञासाम्येन विनियोगः । एतेषां च विरोधे पूर्वं बलवत् । एते श्रुत्यादय एव यथा धर्मजिज्ञासायां प्रमाणं न तथा ब्रह्मजिज्ञासायाम्; किन्तु विद्वदनुभवानुमानादयोऽपि तत्र हेतुरनुभवावसानत्वादिति । येन विना साक्षात्कारो न सिद्ध्यति तत्सर्वमागमानुगुणमपेक्षत इत्यर्थः । अन्यस्य सम्भावनाप्यस्तीत्याह—भूतवस्त्विति ॥ तर्हि ब्रह्मणीव वेदार्थत्वाद्धर्मेऽप्यनुभवापेक्षायामस्या [मन्यस्या]नुप्रवेशो भवत्वित्याशङ्क्याह— कर्तव्ये हीति ॥ परोक्षनिश्चयमात्रेणानुष्ठानसंभवाच्च कर्तव्येऽनुभवापेक्षा; ब्रह्मसाक्षात्कारायसंत्वारवध्यासध्वंसस्यास्त्येवानुभवापेक्षा; वेदार्थत्वं त्वप्रयोजकमिति भावः । अन्यथा वेदार्थत्वाविशेषात् पुरुषेच्छावशनिष्पाद्यत्वमपि स्यादित्यभिप्रेत्याह—पुरुषेति ॥ यजेतन भक्षयेदितिवत् ब्रह्मण्यपि स्यादित्याह—विधीति ॥ "व्रीहिभिर्यजेत

१. TM. संबन्ध.
A. संबन्धः.
२. T, T¹, P and TM. पठितस्य.
३. A. समाख्यानां.
४. T. काम्येन.
५. T, P, A and TM add वा नियुक्तत्वादिति. and omit up to अनुभवावसानत्वादपि.
६. T¹ space is left out for writing जिज्ञा...ब्रह्म.
७. A. प्यत्र नास्ती.
८. A. व्ये मनुष्ठाना.
९. TM and A. वास्ताध्यास.
१०. T, T¹, P and TM. वेदार्थत्वम.

भाष्यम्

अर्थवन्तः स्युः, विकल्पोत्सर्गापवादाश्च । न तु वस्तु 'एवम्, नैवम्' 'अस्ति, नास्ति' इति वा विकल्प्यते । विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः । न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम् । किं तर्हि वस्तुतन्त्रमेव तत् । न हि स्थाणावेकस्मिन् 'स्थाणुर्वा, पुरुषोऽन्यो वा' इति तत्त्वज्ञानं भवति । तत्र 'पुरुषोऽन्यो वा' इति मिथ्याज्ञानम् । 'स्थाणुरेव' इति तत्त्वज्ञानम्, वस्तुतन्त्रत्वात् । एवं भूतवस्तुविषयाणां प्रामाण्यं वस्तुतन्त्रम् । तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव, भूतवस्तुविषयत्वात् । ननु भूतवस्तुविषयत्वे ब्रह्मणः प्रमाणान्तरविषयत्वमेव इति वेदान्तवाक्यविचारणा

प्रकटार्थविवरणम्

यवैर्वा" इति विकल्पः । "न हिंस्यात् सर्वा भूतानि" इत्युत्सर्गः । "अग्नीषोमीयं पशुमालभेत" इत्यपवादः । एतेऽपि धर्मसाम्ये सति प्रसज्यन्त इत्यर्थः । अस्तु तथेति न वाच्यमित्याह—न तु वस्त्वेवमिति ॥ न हि घटः कस्यचिदिच्छया पटोऽपीति दृष्टचरम् । ननु स्थाणुर्वा पुरुषो वान्यो वेति वस्तुन्यपि विकल्पा दृश्यन्त इत्याशङ्क्याह—विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः ॥ न वस्तुस्पर्शिन्यो[1] बाधादित्यर्थः । ननु किं विशेषणेन, सम्यग्ज्ञानमपि पुरुषबुद्ध्यपेक्षमेवेत्याशङ्क्याह—न वस्तुयाथात्म्यज्ञानमिति[2] ॥ प्रत्यक्षस्य कर्मजन्यत्वाद्यथावस्त्वेव मनोव्यापारः सम्यग्ज्ञानम्, न तु यथा यथा मनो व्यापिपर्ति तत्तत्सम्यग्ज्ञानमिति भावः । विकल्पनानां मनःस्पन्दितमात्रत्वमज्ञानमयत्वं[3] सम्यग्ज्ञानस्य च वस्त्वधीनत्वं विवृणोति—न हीत्यादिना ॥ प्रकृते योजयति—तत्रैवमिति ॥ अतो ज्ञानं ब्रह्म वा विधिजन्यपुरुषेच्छावशानिष्पाद्यं न भवतीति धर्माद्वैलक्षण्यं सिद्धम् । तर्हि धर्माद्विलक्षणत्वात्प्रत्यक्षादिगोचरत्वमपि[4] स्यात् । अत एव जन्मादिसूत्रमनुमानोपन्यासार्थं भविष्यतीत्याह—नन्विति ॥ रूपादिकं रूपादिमत्तद्विशेषणं चेन्द्रियाणि गृह्णन्ति, न तथा ब्रह्म; अतः प्रत्यक्षाविषयत्वादविनाभावाग्रह-

१. TM. वस्तुदर्शि.

२. TM and A. याथार्थ्य.

३. TM and A नानामनः

४. A. त्वादशा.

५. T, P and TM. गोचरमपि A. प्रत्यक्षादिसाम्यात्.

६. A omits ब्रह्मातः.

### भाष्यम्

अनर्थिकैव भाषा । न; इन्द्रियाविषयत्वेन संबन्धाग्रहणात् । स्वभावतो विषयविषयाणीन्द्रियाणि न ब्रह्मविषयाणि । सति हि इन्द्रियविषयत्वे ब्रह्मणः इदं ब्रह्मणा संबद्धं कार्यमिति गृह्येत । कार्यमात्रमेव तु गृह्यमाणम्—किं ब्रह्मणा संबद्धम्, किमन्येन केनचिद्वा संबद्धम्—इति न शक्यं निश्चेतुम् । तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थम् । किं तर्हि, वेदान्तवाक्यप्रदर्शनार्थम् । किं पुनस्तद्वेदान्तवाक्यं यत् सूत्रेणेह लिलक्षयिषितम् । "भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति" इत्युपक्रम्याह "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति" । तस्य च निर्णयवाक्यम्—"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्ति" इति । अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाणि उदाहर्तव्यानि ॥

### प्रकटार्थविवरणम्

णात् न स्वातन्त्र्येण मानान्तरगोचरो ब्रह्मेत्याह— न इन्द्रियाविषयत्वेनेति ॥ यस्मादागमप्रतिपन्नेऽर्थे सामान्यद्वारेण संभावनामात्र[1]निमित्तं मानान्तरं तस्मादित्युपसंहारः । उदाहरणवाक्यं पृच्छति—किं पुनरिति ॥ विशिष्टस्याधिकारिणो ब्रह्मज्ञानाय प्रवृत्तस्य ब्रह्मप्रतिपादनपरं जगत्कारणानुवादेन वाक्यम्; अर्थात्तदेव लक्षणमित्यभिप्रेत्य सोपक्रमं वाक्यमुदाहरति— "भृगुर्वै वारुणिः" इति। ननूपलक्षितस्य स्वलक्षणं वाच्यम् । न हि 'प्रकृष्टप्रकाशश्चन्द्रः' इति स्वलक्षणकथन[2]मन्तरेण 'यत्र शाखाग्रं स चन्द्रः' इत्युपलक्षणमात्रात् चन्द्रलक्षणावगतिर्दृष्टा इत्यत आह—तस्य चेति ॥ उपलक्षितस्य ब्रह्मणः स्वरूपनिर्णायकं वाक्यम् "आनन्दो ब्रह्मेति व्यजानात्" इत्यादि विद्यत एव । तत्पर्यालोचनया शाखान्तरीय "विज्ञानमानन्दं ब्रह्म" इति वाक्यपर्यालोचनया च स्वप्रकाशानन्दो ब्रह्मलक्षणमिति भावः ॥

१. TM and A. मात्रं निमित्तं.    २. T, P, TM and A omit कथन.

### भाष्यम्

जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्म इत्युपक्षिप्तम् । तदेव द्रढयन्नाह—

## शास्त्रयोनित्वात् ॥ १-१-३ ॥

महतः ऋग्वेदादेः शास्त्रस्य अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म । न हीदृशस्य

### प्रकटार्थविवरणम्

वृत्तसङ्कीर्तनपूर्वकं संबन्धमाह—जगत्कारणत्वेति ॥ जगज्जन्मादिकारणत्वं ब्रह्मलक्षणं सूत्रयता प्रधानादावतिव्याप्तिवारणाय कारणत्वानुपपत्तिसिद्धं सर्वज्ञत्वमर्थात्सूत्रयाञ्चक्रे ; तदेव हेत्वन्तरेण दृढीक्रियत इत्यर्थः । अत्र च "अस्य महतो भूतस्य" इत्यादिवाक्यं विषयः । तत्किं ब्रह्मणो वेदकारणत्वाभिधानेन सर्वज्ञत्वं न साधयति उत साधयतीति सन्देहः । पाणिन्यादिवदर्थमुपलभ्य कर्तृत्वे वेदस्य पौरुषेयत्वप्रसङ्गात् न साधयतीति पूर्वः पक्षः । सिद्धान्तस्तु रज्जुसर्पवच्छब्दराशेः ब्रह्मविवर्ततया ब्रह्मणो वेदकारणत्वात् तेन चाविषयीकृतस्य सद्भावे प्रमाणाभावात्, कारणसामर्थ्यस्यैव च कार्येऽप्याविर्भावदर्शनात्, प्रदीपस्यावभासत्वेऽपि स्वसंयुक्ताशेषवस्तुप्रकाशकत्वात् । एवं सर्वावभाससमर्थसर्वशब्दोपादानतया स्वसंयुक्ताशेषप्रकाशनशक्तिमत्त्वेन सर्वज्ञत्वं साधयति । तदेतदाह—

शास्त्रयोनित्वात् ॥

इति । सूत्रं योजयति—महत इत्यादिना ॥ ग्रन्थभूयस्त्वान्महद्भिर्मन्वादिभिः परिगृहीतत्वाद्वा महतः । श्रुतिनिर्देशादृग्वेदादेः । शासनाच्छास्त्रस्य । शास्त्रशब्दस्य सर्वशब्दोपलक्षणत्वाद्व्याकरणाद्यङ्गकस्य । अव्यपदेश्यस्य वस्तुनोऽभावात् प्रदीपवत् स्वसंबद्धसर्वावभासकस्यावबोद्धृत्वाभावात् सर्वज्ञकल्पस्योपादानकारणं ब्रह्म ; अतस्तदपि सर्वज्ञमित्यर्थः । तदेवाह—न हीति ॥ वेदः स्वविषयादधिकवि-

१. A कारणं.
२. TM and A परिहाराय.
३. TM. विविक्ततया
४. A प्रकाशना.
५. T omits वा.
६. TM. शब्दोपादानतया स्वसयुक्तलक्षणत्वात्.
७. TM. संबन्धः.
८. TM. करणं.
९. T, T[1], TM and P. विषयाधि.

### भाष्यम्

शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति । यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात् संभवति, यथा व्याकरणादि पाणिन्यादेः ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके । किमु वक्तव्यम्—अनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोः ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्य अप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवत् यस्मान्महतो भूताद्योनेः संभवः—"अस्य महतो भूतस्य निःश्वसितमेतत् यदृग्वेदः" इत्यादिश्रुतेः—तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति ॥

### प्रकटार्थविवरणम्

ज्ञानवत्प्रसूतः शास्त्रत्वात् व्याकरणवदिति वदितुं लोकसिद्धां व्याप्तिमाह—यद्यदिति ॥ किंपुनर्न्यायेन दार्ष्टान्तिकमाह—किमु वक्तव्यमिति ॥ ऋग्वेदाद्याख्यस्य शास्त्रस्य यस्मात् महतो भूताद्योनेः संभवः तस्य सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति किमु वक्तव्यमित्यन्वयः । संभवे प्रमाणमाह—अस्येति ॥ मुख्यलक्षणादिद्वारेण सर्वावभासनसमर्थस्य महत्त्वद्योतनायानेकशाखेत्यादिविशेषणानि तन्महत्त्वेन तत्कारणस्य निरतिशयसर्वज्ञत्वं दर्शयितुम् । स्वातन्त्र्येणार्थमुपलभ्योच्चार्यमाणत्वं पौरुषेयत्वं व्यावर्तयति—अप्रयत्नेनैवेति ॥ वेदः अपौरुषेयः, अनपेक्षप्रमाणत्वात्, प्रत्यक्षवदिति प्रयोगः । न चाप्तप्रणीतत्वेनैव प्रामाण्यमित्यसिद्धो हेतुरिति मन्तव्यम्, चक्रकापत्तेः । आप्तप्रणीतत्वेन प्रामाण्यावगमात् प्रवृत्तिः, प्रवृत्तस्य च फलदर्शनेनाप्तत्वावधारणम्, ततः प्रामाण्यावगतिरिति । वेदः आप्तप्रणीतत्वानपेक्षप्रामाण्यः प्रमाणत्वात् प्रत्यक्षवदिति प्रयोगः । आप्तवाक्यस्य तु पौरुषेयत्वे सति अनाप्तत्वाशङ्कापाकरणायाप्तप्रणीतत्वमपेक्ष्यते, न प्रामाण्ये । शब्दानामर्थपरिच्छेदसामग्र्यस्य प्रामाण्यस्य स्वारसि-

१. T omits शास्त्रस्य यस्मात्
TM and A omit शास्त्रस्य.
२. TM. शक्तित्वं.
३. TM. अज्ञत्व.
४. TM. मोहत्वेन.
५. T omits व्याव...... वेति.
६. T, T[1] and P omit च.
७. TM. स्वरसिद्धत्वात्.

### भाष्यम्

अथवा यथोक्तमृग्वेदादिशास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणः यथावत्स्वरूपाधिगमे । शास्त्रादेव प्रमाणात् जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः । शास्त्रमुदाहृतं पूर्वसूत्रे—"यतो वा इमानि भूतानि जायन्ते" इत्यादि । किमर्थं तर्हीदं सूत्रं यावता पूर्वसूत्र एवैवं-

### प्रकटार्थविवरणम्

कत्वात् । एतेनैतत्प्रत्युक्तम्, वैदिकं प्रामाण्यं वक्तृगुणाधीनं वाक्यप्रामाण्यत्वात्, आप्तवाक्यप्रामाण्यवदिति । हेतोश्च पक्षधर्मत्वाभावादसिद्धिः । यच्च वेदः पौरुषेयः, वाक्यत्वात्, कालिदासादिवाक्यवत् इत्युद्घुष्यते, तत्र विपक्षबाधकाभावादप्रयोजकता ; स्वाभाविकशक्तिवशात् संसर्गपरत्वेन वाक्यत्वं न पौरुषेयत्वाधीनम्, अन्यथा आत्मादिरनित्यः अर्थत्वात् घटवत् इत्यप्युद्घुष्यताम् । यदि तत्र कार्यत्वमुपाधिरित्यभिदधीत तर्हि सर्वज्ञवचनत्वमुपाधिरित्यभिदधीय । किञ्च पौरुषेयत्वं पुरुषनिर्वर्त्यतामात्रं चेत् सिद्धसाधनम् । क्रमविशिष्टानां वर्णानां वेदशब्दवाच्यत्वात् क्रमस्य चोच्चारणोपलब्ध्योरन्यतरधर्मस्य क्षणिकतया तद्विशिष्टानामपि जन्यत्वात् । क्रमसादृश्यपरम्परायाश्चेत्प्रथमताभावेनानादित्वाभिधानम् । यदि प्रमाणेनार्थमुपलभ्योच्चार्यमाणत्वं पौरुषेयत्वम्, तदा कालिदासादिवाक्यस्यापि कस्यचिदुत्प्रेक्षापूर्वकत्वात् तत्रानैकान्तिको हेतुः । अथ ज्ञानमात्रसमुत्थत्वम्, तदा प्रामाण्यप्रसिद्ध्यनुपपत्तिबाधः । पुरुषान्तरोच्चारणानिरपेक्षत्वं नाम पुरुषस्य स्वातन्त्र्यं यत्र तत्पौरुषेयमिति, अनुवादेऽनेकान्त इति कृतमतिविस्तरेण ॥

वर्णकान्तरमाह—अथवेत्यादिना ॥ अस्मिन्पक्षे पृथगारम्भमाक्षिपति—किमर्थमिति ॥ जन्मादिलिङ्गकस्वतन्त्रानुमानोपन्यासशङ्कानिरासायेत्याह—

१. TM omits वाक्य......दाप्त.
२. A omits आदि.
३. TM. उत्प्रेक्ष्यते.
४. TM and A भाविके.
५. TM and A add तु.
६. TM. लब्धा.
७. A: यां च.
८. TM. भिप्रधानं.
९. TM. णोऽर्थं.
१०. T space is left out for writing जन्मा......नुमा.

भाष्यम्

जातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितम् । उच्यते । तत्र सूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानात् जन्मादिसूत्रेण केवलमनुमानमुपन्यस्तमित्याशङ्क्येत ; तामाशङ्कां निवर्तयितुमिदं सूत्रं प्रववृते— "शास्त्रयोनित्वात्" इति ॥

कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते यावता "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम्। अतो वेदान्तानामानर्थक्यम्, अक्रियार्थत्वात् ; कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वम्, उपासनादिक्रियान्तरविधानार्थत्वं वा । न हि परिनिष्ठितवस्तुस्वरूपप्रतिपादनं संभवति प्रत्यक्षादिविषयत्वात्

प्रकटार्थविवरणम्

उच्यत इति ॥

एवं जगतो जन्मादिकारणं सर्वज्ञं ज्ञानानन्दात्मकं ब्रह्म शास्त्रप्रमाणकमित्युपचिक्षेप । तत्र संशयः । किं भूतार्थे शास्त्रं प्रमाणं न वेति । नेति तावदाहुर्जैमिनीयाः—कथं पुनरिति ॥ 'अक्रियार्थानामानर्थक्यम्' इति सूत्रकारवचनात् नास्ति वेदान्तानामर्थवत्त्वमित्यर्थः । कथमध्ययनविधिपरिगृहीतानां वैयर्थ्यमेवेत्याशङ्क्याह—कर्तृदेवतादीति ॥ कर्मप्रकरणादपि व्युत्थितानां कथं तच्छेषत्वमित्याशङ्क्याह—उपासनादीति ॥ "आत्मेत्येवोपासीत" "निदिध्यासितव्यः" इत्यादिना जीवे अपहतपाप्मादिधर्मसमारोपेण उपासना ध्यानं च विधीयते । तच्छेषत्वं वा भविष्यतीत्यर्थः । ननु जीवस्य ब्रह्मात्मत्वोपदेशेन भूत एव प्रामाण्यं किं न सूत्रकृतोऽभिमतमित्याशङ्क्याह न हीति ॥ जीवस्य संसारित्वग्राहकप्रत्यक्षादिविरोधात् न ब्रह्मात्मत्वप्रतिपादनं संभवतीत्यर्थः । सुखदुःख-

१. T space is left out for writing भूतार्थे... ...सूत्रकार.

२. TM. विधिरपि परि.

३. T space is left out for writing वता ...आत्मेत्येवोपासीत.

४. T and TM उपन्यस्तं.

## भाष्यम्

परिनिष्ठितवस्तुनः, तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात् । अत एव "सोऽरोदीत्" इत्येवमादीनां आनर्थक्यं मा भूदिति "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति स्तावकत्वेनार्थवत्त्वमुक्तम्। मन्त्राणां च "इषे त्वा" इत्यादीनां क्रियातत्साधनाभिधायकत्वेन कर्मसमवायित्वमुक्तम्। न क्वचिदपि वेदवाक्यानां विधिसंस्प-

## प्रकटार्थविवरणम्

प्राप्तिपरिहारयोः प्रवृत्तिनिवृत्तिसाध्यत्वात् न भूतप्रतिपादने प्रयोजनमप्यस्तीत्याह—तत्प्रतिपादने चेति ॥ यतो न भूतवस्तुज्ञाने प्रयोजनम्, विध्युपास्यस्य च प्रयोजनपर्यन्तता वक्तव्या अत एवार्थवादानां जैमिनिना द्रव्यदेवतास्तावकत्वेनार्थवत्त्वमुक्तमित्यन्वय । तथा हि—प्रथमे पादे वेदस्यापौरुषेयत्वेन प्रयोजनवत्कार्यार्थत्वेन च विधीनां प्रामाण्यं प्रतिपाद्य अर्थवादानां तदभावात् "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते" इत्यप्रामाण्यमाशङ्क्य सिद्धान्तमभिदधौ "विधिना तु" इति । विधीनां प्रवर्तकत्वनिवर्तकत्वाकाङ्क्षितद्रव्यदेवतास्तुतिनिन्दाद्वारेण संनिहितविधिनिषेधैकवाक्यत्वादर्थवादा अर्थवन्तः स्युरित्यर्थः। अनन्तरं च अथेदानीं किं विवक्षितवचनाः मन्त्राः उताविवक्षितवचना इति प्रक्रम्य "इषेत्वेति शाखां छिनत्ति" इत्यादिविनियोगबलादुच्चारणमात्रेणोपकुर्वन्ति मन्त्रा इति पूर्वपक्षयित्वा सिद्धान्तमुपचक्रमे "अविशिष्टस्तु वाक्यार्थः" इति । लौकिकानां पदानां वेदे प्रयुज्यमानानामविशिष्ट एवार्थ इति प्रयोगविध्याक्षिप्तानुष्ठेयपदार्थस्मारकतया विनियुक्तानां मन्त्राणां क्रियाङ्गत्वम्। तदेतदाह—मन्त्राणां चेति ॥ ननु क्रियाप्रकरणपठितानां भवतु क्रियाशेषत्वेनार्थवत्त्वं न सर्वत्रेत्याशङ्क्याह—न क्वचिदपीति ॥ विमतं वेदवाक्यं विधिसंस्पर्शेनैव [नैवार्थवत्] भूतार्थवेदत्वात् "सोऽरोदीत्" इत्यादिवदिति चेत् तर्हि वेदान्तानां स्वार्थे एव विधिं परिकल्प्यार्थवत्त्वमस्तु, किं कर्मविधिशेषत्वेनेत्या-

१. A तर्हि चार्थ.

२. A omits संनिहित.

३. TM. and A इत्यर्थस्तर्हि.

भाष्यम्

शमन्तरेणार्थवत्ता दृष्टा उपपन्ना वा । न च परिनिष्ठिते वस्तुस्वरूपे विधिः संभवति, क्रियाविषयत्वाद्विधेः । तस्मात्कर्मापेक्षितकर्तृदेवतादिस्वरूपप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम् । अथ प्रकरणान्तरभयात् नैतदभ्युपगम्यते तथापि स्ववाक्यगतोपासनादिकर्मपरत्वम् । तस्मान्न ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते उच्यते—

## तत्तु समन्वयात् ॥ १-१-४ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तद्ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते । कथम् ? समन्वयात् । सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि

प्रकटार्थविवरणम्

शङ्क्याह—न चेति ॥ " दध्ना जुहोति " इत्यादेरपि गुणावच्छिन्नभावार्थविषयत्वात् साधनविधायकत्वाच्च नित्यशुद्धसिद्धस्य न विधिविषयत्वमित्यर्थः । भट्टदृष्टिं निगमयति—तस्मादिति ॥ यदुक्तं गुरुमतानुसारेण उपासनादिक्रियान्तरविधानार्थत्वं वेति तद्विवृणोति—अथेत्यादिना ॥ सर्वथापि न शास्त्रप्रमाणकमद्वितीयं ब्रह्मेत्युपसंहरति—तस्मादिति ॥

तत्तु समन्वयात् ॥

सिद्धान्तं सूत्रमवतार्य व्याचष्टे–तुशब्द इति ॥ प्रतिज्ञातार्थे हेतुं पृच्छति—कथमिति ॥ हेतुमाह—समन्वयादिति ॥ सम्यक् तात्पर्येण ब्रह्मप्रतिपादने वेदान्तपदानामन्वयदर्शनामिति हेत्वर्थमाह—सर्वेषु हीति ॥ अयमाशयः—येषां पदानां यस्मिन्नर्थे शक्तितात्पर्ये तेषां तत्र प्रामाण्यं न त्वविधि [तद्विधि] संस्पर्शि-

१. TM omits आह.
२. TM. वर्णशुद्धस्य T and T[1] वर्णिनशुद्धसिद्धस्य.
३. T. Space is left for writing विषय......क्रिया.
४. T. and T[1] अवतार्याच.
५. TM. प्रज्ञातार्थे.
६. T[1], P and TM omit कथ.....माह.
७. T. and T[1] omit तत्र प्रामाण्यं नस्य.

भाष्यम्

"सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" "आत्मा वा इदमेक एवाग्र आसीत्" "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः" "ब्रह्मैवेदममृतं पुरस्तात्" इत्यादीनि । न च तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमाने अर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । न च तेषां कर्तृदेव-

प्रकटार्थविवरणम्

कृतम् "जर्तिलयवाग्वा वा जुहुयात्" इत्यादेरपि स्वार्थे प्रामाण्यापातात्। अतो वेदान्ताः स्वार्थे प्रमाणम्, तत्परत्वात् अग्निहोत्रादिवाक्यवत् नासिद्धो हेतुः, तात्पर्यलिङ्गानामवगमात्। तथाहि—छान्दोग्ये षष्ठे प्रपाठके "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यद्वितीयेनोपक्रम्य "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" इत्यद्वितीयेनैवोपसंहारात्, मध्ये च "तत्त्वमसि" इति नवकृत्वोऽभ्यासात्, मानान्तरानधिगतस्य चाद्वितीयात्मनः प्रतिपादनात्, "आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति फलसङ्कीर्तनात्, तथा सृष्टिस्थितिप्रलयाद्यर्थवादोपादानात्, तथा मृदादिदृष्टान्तैरद्वितीयस्यात्मनो युक्तिभिरुपपादनात् तस्य तावदद्वितीयात्मन्येव तात्पर्यमवधार्यते । तथा वेदान्तान्तरेष्वपि उपक्रमोपसंहारैकरूप्याभ्यासापूर्वताफलवत्तार्थवादयुक्त्युपपादनानि षड्विधतात्पर्यलिङ्गानि विकल्पेन समुच्चयेन वा द्रष्टव्यानि । तस्मात् सिद्धं शास्त्रप्रामाण्यमिति । ननु यद्यपि वेदान्तगतानां पदार्थानां विशेषणविशेष्यभावेन सम्बन्धो लिलक्षयिषिताद्वितीयब्रह्मस्वरूपपर एव तात्पर्यलिङ्गेभ्यो निश्चितः, तथापि जैमिनिवचनादेवार्थान्तरपरत्वं कल्प्यत इत्याशङ्क्याह—न च तद्गतानामिति ॥ किञ्च जैमिनीयसूत्राद्यदर्थान्तरपरत्वकल्पना बादरायणसूत्रात् स्वार्थपरतैव किं न स्यात्। वक्ष्यति च तस्यापि गतिम्। यदभाणि कर्मविधिशेषत्वं कर्तृसमर्पणेन तत्राह—न च तेषामिति ॥ यच्चावाचि प्रमाणान्तरविरोधात् न जीवस्य ब्रह्मताप्रतिपाद-

१. A इत्येवमादीनामपि.
२. A omits अतो.
३. T. and T[1] omit छान्दोग्ये .........अद्वितीय.
४. TM. repeats तत्त्वमसि a second time.
५. T. and T[1] आत्मानान्तरा.
६. TM. विवक्ष.

### भाष्यम्

तादिस्वरूपप्रतिपादनपरता अवसीयते, "तत्केन कं पश्येत्" इत्यादिक्रियाकारकफलनिराकरणश्रुतेः । न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः, "तत्त्वमसि" इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात् । यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति, नैष दोषः; हेयोपादेयशून्यब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात् पुरुषार्थसिद्धेः । देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चित् विरोधः । न तु तथा ब्रह्मण उपासनाविधिशेषत्वं संभवति ।

### प्रकटार्थविवरणम्

नमिति, तत्राह—न च परिनिष्ठितेति ।। परिनिष्ठितत्वमात्रेण प्रमाणान्तरविषयत्वे वस्तुत्वात् तुच्छव्यावृत्तत्वाद्वा धर्मस्यापि प्रमाणान्तरविषयत्वप्रसङ्गादिति भावः । तद्विषयत्वेऽप्येवं प्रयोक्तव्यम्—वैदिकं ज्ञानं स्वविपरीतसकलपूर्वप्रत्ययबाधकम् तद्विषये तद्विपरीताकारत्वे तन्निरपेक्षत्वे च सति उत्तरप्रमाणत्वात् 'नायं सर्पः' इत्याप्तवाक्योत्थज्ञानवदिति । यद्वा आत्मनि सर्वो भेदावभासः उत्तरप्रमाणबाध्यः तद्विषये तद्विपरीतावभासत्वात्[1], य एवं स एवं यथा रजतप्रत्यय इति । न च "आदित्यो यूपः" इत्यादौ व्यभिचारः, तस्यातत्परत्वेन तत्राप्रामाण्यात् । यदरुदत्र केशवः "नासंभावितदोषस्य[2] प्रत्यक्षादेर्दिङ्मोहवदागमबाध्यत्वम्" इति तद्व्यर्थमरोदीत् । यतः आगमावबाधितविषयतयैव बाह्यदोषादर्शनेऽप्यान्तरदोषसंभावनोल्लासो 'मनुष्योऽहम्' इत्यादाविव । आगमस्य चापौरुषेयतया निर्दिष्टस्यानपेक्षस्य तत्परस्य स्वत एव स्वविपरीतावबाधने सामर्थ्यात् न इतरेतराश्रयत्वम् । तस्माद्यत्किञ्चिदेतत् ।। यत्तु इत्यादिना परोक्तमनूद्य दूषयति । यत्त्वात्रादि स्ववाक्यगतोपासनादिविधानार्थत्वं भूतार्थानां वेदान्तानामिति तत्र भागेऽनुमतिरित्याह— देवतादीति ।। उपासनाप्रकरणस्थप्राणादि[3] देवासुरसङ्ग्रामादिप्रतिपादनस्य भवतु उपासनाशेषत्वमित्यर्थः । उपासनाप्रकरणादपि व्युत्थितानां न तच्छेषत्वं स्वरूपमात्रपर्यवसानादित्यभिप्रेत्याह—न तु तथेति ।। ननु "अयमात्मा ब्रह्म" 'इत्युपासीत' इति विध्यध्याहा-

१. TM. सत्वान् यः एवं यथा.
२. TM. तद्दोषस्य.
३ T, T¹, P and P add देवता.

### भाष्यम्

**एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः । न हि एकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः संभवोऽस्ति येनोपासनाविधिशेषत्वं ब्रह्मणः प्रतिपाद्येत । यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टम्, तथाप्यात्मविज्ञानस्य फलपर्यन्तत्वान्न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम् । न चानुमानगम्यं शास्त्रप्रामाण्यम्, येनान्यत्र दृष्टं निदर्शनमपेक्ष्येत । तस्मात् सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम् ॥**

### प्रकटार्थविवरणम्

रेण तच्छेषत्वं भवतु । तर्हि अवगते ब्रह्मात्मैकत्वे विधानं वक्तव्यम्; तन्न संभवतीत्याह— **एकत्व इति** ॥ आत्मनो ब्रह्मत्वं नाम देशतः कालतो वस्तुतश्चानवच्छिन्नत्वम्; तच्चेदवगतं तदोपास्योपासकादिभेदबुद्ध्यभावान्न विधानं संभवतीत्यर्थः । संस्कारबलात् पुनरुदये विधानमिति नेत्याह—**न हीति** ॥ विध्यधिकारनिमित्तस्य द्वैतविज्ञानस्य न पुनस्संभव इत्यर्थः । अथ परोक्षमेवात्मनो ब्रह्मत्वमवगतम्, न तेन भेदबुद्ध्युपमर्दः; तर्हि किमापरोक्ष्यायोपासनविधानमपवर्गाय वा? नाद्यः परोक्षस्य विधिशतेनाप्यापरोक्ष्यासंभवात्, परमानन्दापरोक्ष्ये स्वयं प्रवृत्तेश्च । द्वितीयं विस्तरेण पराकरिष्यति । यच्चोक्तम्, 'न कचिद्वेदवाक्यानां विधिमन्तरेणार्थवत्ता' इति तत्राह— **यद्यप्यन्यत्रेति** ॥ "सोऽरोदीत्" इत्यादीनां स्वार्थे फलाभावात् युक्ता विधिस्पर्शेनार्थवत्ता न भूतार्थत्वादिति भावः । ननु भूतार्थत्वेऽपि फलवत्त्वात् स्वार्थे प्रामाण्यं क्व दृष्टमित्याशङ्क्याह—**न चानुमानगम्यमिति** ॥ अन्यथा विधिनिष्ठं वेदवाक्यं सफलमित्यन्यत्रादर्शनात्, तस्यापि स्वार्थे प्रामाण्यं न स्यादित्यर्थः । यस्माद्विधिवाक्येन वेदान्तानां समानयोगक्षेमत्वं प्रामाण्ये तस्मादित्युपसंहारः ॥

१. TM. नापि.

२. TM. omits विधानं.

३. T omits सोऽरोदीत् .........ऊर्ध्वगतेषु धर्मं in line 18 on page 61.

भाष्यम्

अत्रापरे प्रत्यवतिष्ठन्ते । यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते ; यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते, तद्वत् । कुत एतत् प्रवृत्तिनिवृत्तिप्रयोजनत्वाच्छास्त्रस्य । तथा हि शास्त्रतात्पर्यविद आहुः—"दृष्टो हि तस्यार्थः कर्मावबोधनं नाम" इति, "चोदनेति क्रियायाः प्रवर्तकं वचनम्" "तस्य ज्ञानमुपदेशः" "तद्भूतानां क्रियार्थेन समाम्नायः" "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति च । अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत् कुतश्चिद्विषयविशेषात्

प्रकटार्थविवणरम्

इदानीं मोक्षकामस्य प्रतिपत्तिनियोगशेषत्वेन शास्त्रेण ब्रह्म प्रतिपाद्यते, न स्वातन्त्र्येणेति प्राचां वृत्तिकृतां मतमाह—अत्रापर इत्यादिना ॥ ननु नियोगस्तावदलौकिकः ; कथं तच्छेषतया शास्त्रेणालौकिकं ब्रह्म समर्प्यत इत्याशङ्क्याह—यथेति ॥ ननु ब्रह्मणि तात्पर्यलिङ्गानां दर्शितत्वात् किमिति नियोगशेषत्वमित्याशङ्क्याह—कुत एतदिति ॥ वृद्धव्यवहारानुसारेण हि शास्त्रतात्पर्यमवधारणीयम् ; वृद्धव्यवहारे च श्रोतुः प्रवृत्तिनिवृत्तिप्रयोजनोद्देशेनास्य प्रयोगो दृश्यते ; ते एव शास्त्रस्यापि प्रयोजने ; ते च नियोगाधीने ; अतो नियोगपरमेव शास्त्रमित्याह—प्रवृत्तीति ॥ नियोगनिष्ठत्वे शास्त्रस्य शबरस्वामिप्रभृतीनां सम्मतिमाह—तथा हीत्यादिना ॥ तस्य वेदस्य दृष्टोऽर्थः दृष्टं प्रयोजनं नियुक्तकर्मावबोधनं नियोगज्ञानमित्यर्थः । क्रियायाः नियोगस्य समर्पकं वचनं चोदनेत्याहुरिति द्वितीयभाष्यार्थः । औत्पत्तिकसूत्रावयवं पठति—तस्य धर्मस्येति ॥ नियोगाख्यस्य ज्ञानसाधनम् उपदेशो विधिवाक्यमित्यर्थः । तत्तत्र वेदे भूतानां सिद्धार्थवाचिनां पदानां क्रियार्थेन नियोगवाचिना पदेन समाम्नायः संबन्धो लोकानुसारादित्यर्थः । यत एवं शास्त्रतात्पर्यविदो वदन्ति तस्मात्कर्मकाण्डं तावत् नियोगनिष्ठमित्याह—अतः पुरुषमिति ॥ साक्षान्नियो-

१. TM omits अत्र.

२. T, $T^1$, P and A. न लभ्यते.

३. $T^1$. वशात्.

४. $T^1$ and P. क्रियायां.

भाष्यम्

निवर्तयच्चार्थवच्छास्त्रम् । तच्छेषतया चान्यदुपयुक्तम् । तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात् । सति च विधिपरत्वे यथा स्वर्गादिकामस्याग्निहोत्रादि साधनं विधीयते एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयत इति युक्तम् । नन्विह जिज्ञास्यवैलक्षण्यमुक्तम्—कर्मकाण्डे भव्यो धर्मो जिज्ञास्यः, इह तु भूतं नित्यनिर्वृत्तं ब्रह्म जिज्ञास्यमिति ; तत्र धर्मज्ञानफलादनुष्ठानसापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति । नार्हत्येवं भवितुम्, कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात् । "आत्मा वा अरे द्रष्टव्यः" "य आत्मापहतपाप्मा ···सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मेत्येवोपासीत" "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिषु विधानेषु सत्सु 'कोऽसावात्मा' 'किं तद्ब्रह्म' इत्याकाङ्क्षायां तत्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः—नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दं ब्रह्म इत्येवमादयः । तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यति । कर्तव्यविध्यननुप्रवेशे तुवस्तुमात्रकथने हानोपादानासंभवात् 'सप्तद्वीपा वसुमती' 'राजासौ

प्रकटार्थविवरणम्

गोपदेशेन पुरुषस्य यत्प्रवृत्तिफलं तदेव शास्त्रम् । मन्त्रार्थवादादिकं तु तच्छेषत्वेनोपक्षीणमित्यर्थः । तथा च वेदान्ताः नियोगपराः शास्त्रत्वात् संप्रतिपन्नवदित्याह—तत्सामान्यादिति ॥ नियोज्यवत्त्वमुपाधिरित्याशङ्क्य साधनव्यापकत्वमाह—सति चेति ॥ तर्हि ब्रह्मणो जिज्ञासाकर्मत्वाभिधायिसूत्रविरोध इत्याह—नन्विहेति ॥ नियोगशेषब्रह्मजिज्ञासैव सूत्रकृतोऽप्यभिप्रेता, अतो न तद्विरोध इत्यभिप्रेत्याह—नार्हत्येवमिति ॥ नन्वस्तु शास्त्रत्वम्, कर्तव्यरूपनियोगपरत्वं मा भूत्; तथा च विपक्षबाधकाभावादप्रयोजक इत्याशङ्क्याह—कर्तव्यविध्यननुप्रवेश इति ॥ निष्प्रयोजनत्वप्रसङ्गो न बाधकः सिद्ध-

१. TM. तेन.

भाष्यम्

गच्छति' इत्यादिवाक्यवत् वेदान्तवाक्यानामानार्थक्यमेव स्यात्। ननु वस्तुमात्रकथनेऽपि 'रज्जुरियम्, नायं सर्पः' इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टम्; तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात्। स्यादेतदेवम्, यदि रज्जुस्वरूपश्रवणमात्रेणेव सर्पभ्रान्तिः, संसारित्वभ्रान्तिः ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत; न तु निवर्तते। श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारिधर्मदर्शनात् "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति च श्रवणोत्तरकालयोः मनननिदिध्यासनयोः विधिदर्शनात्। तस्मात्प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यम् इति॥

अत्राभिधीयते। न; कर्मब्रह्मविद्याफलयोः वैलक्षण्यात्। शारीरं वाचिकं मानसं च कर्म श्रुतिस्मृतिसिद्धं धर्माख्यम्, यद्विषया जिज्ञासा "अथातो धर्मजिज्ञासा" इति सूत्रिता। अधर्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वाज्जिज्ञास्यः परिहाराय। तयोश्चो-

प्रकटार्थविवरणम्

वस्तुज्ञानादपि प्रयोजनदर्शनादित्याह—नन्विति॥ दृष्टान्तदार्ष्टान्तिकयोर्वैलक्षण्येन परिहरन् बाधकं समर्थयते—स्यादेतदेवमिति॥ इतश्च न शास्त्रसिद्धवस्तुज्ञानमात्रात्पुरुषार्थसिद्धिरित्याह—श्रोतव्य इति॥ यस्मान्नियोगानुप्रवेशेनैव सप्रयोजनत्वं तस्मादित्युपसंहारः॥

वेदान्ता न नियोगपराः, फलवत्त्वे सति नियोज्यविधुरत्वात् 'नायं सर्पः' इति वाक्यवदित्याह— अत्राभिधीयत इति॥ ननूक्तं मोक्षकामो नियोज्य इति तत्राह—नेति॥ मोक्षो नियोगसाध्यो न भवति, कर्मफलाद्वैलक्षण्याभावप्रसङ्गात्; विद्यते च वैलक्षण्यमित्यर्थः। कर्मफलाद्वैलक्षण्यं दर्शयितुं कर्म तावदाह—शरीरमिति॥ न केवलं धर्माख्यं कर्म किन्त्वधर्मोऽपीत्याह—अधर्मोऽपीति॥ कर्मोक्त्वा तत्फलमाह—तयोरित्यादिना॥ सुखदुःखयोर्विशेषणानि शरीरवाङ्मनोभिरेवोपभुज्यमाने इत्यादीनि विद्याफलवैलक्षण्यज्ञापनाय। तथा हि—मोक्षो न नैयोगिकः शारीराद्यनुपभोग्यत्वात्,

भाष्यम्

दनालक्षणयोः अर्थानर्थयोः धर्माधर्मयोः फले प्रत्यक्षे सुखदुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिषु स्थावरान्तेषु प्रसिद्धे । मनुष्यत्वादारभ्य ब्रह्मान्तेषु देहवत्सु सुखतारतम्यमनुश्रूयते । ततश्च तद्धेतोः धर्मस्यापि तारतम्यं गम्यते । धर्मतारतम्यादधिकारितारतम्यम् । प्रसिद्धं चार्थित्वसामर्थ्यविद्वत्त्वादिकृतमधिकारितारतम्यम् । तथा च यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषात् उत्तरेण पथा गमनम्, केवलैरिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा

प्रकटार्थविवरणम्

विषयेन्द्रियसंयोगाजन्यत्वात्, संसारमण्डलानन्तर्भूतत्वात्, यन्नैयोगिकं न तत्तथा यथा कर्मफलमिति । [1]किञ्च मोक्षो न नैयोगिकः निरतिशयत्वात्; यन्नैयोगिकं तत्सातिशयं यथा धर्मफलमित्यभिप्रेत्याह—मनुष्यत्वादारभ्येति । "स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः" इत्यादि श्रूयते । किञ्च मोक्षो न नैयोगिकः एकरूपसाधनाधिकारिमत्त्वात्; यन्नैयोगिकं न तत्तथा यथा कर्मफलमित्यभिप्रेत्याह—ततश्चेति ॥ किञ्च कैवल्यं नादर्श[छजं]गमनाद्यनायत्तत्वात्, न यद्देवं न तद्देवं यथा संप्रतिपन्नमित्याह—तथा चेति ॥ "तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः" इत्याद्युत्क्रान्तेनोत्तरेण पथा ।

"अग्निहोत्रं तपस्सत्यं वेदानां चानुपालनम् ।
आतिथ्यं वैश्वदेवश्चापीष्टमित्यभिधीयते ॥

वापीकूपतटाकादिदेवतायतनानि च ।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥

शरणागतसन्त्राणं भूतानां चाप्यहिंसनम् ।
बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते ॥"

१. T[1] adds व्याप्तिपक्षधर्मताविघातिनः प्रतिपक्षस्य सपक्षाप्रवेशस्य न दोषवत्त्वं व्यर्थश्चासाधारण......  २. TM. तदभि.

### भाष्यम्

गमनम्, तत्रापि सुखतारतम्यम्, तत्साधनतारतम्यं च शास्त्रात् "यावत्संपातमुषित्वा" इत्यस्मात् गम्यते । तथा मनुष्यादिषु स्थावरान्तेषु सुखलवश्चोदनालक्षणधर्मसाध्य एवेति गम्यते तारतम्येन वर्तमानः । तथोर्ध्वगतेष्वधोगतेषु च देहवत्सु दुःखतारतम्यदर्शनात् तद्धेतोरधर्मस्य प्रतिषेधचोदनालक्षणस्य, तदनुष्ठायिनां च तारतम्यं गम्यते । एवमविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःखतारतम्यमनित्यं संसाररूपं श्रुतिस्मृतिन्यायप्रसिद्धम् । तथा च श्रुतिः "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति यथावर्णितं संसाररूपमनुवदति । "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति प्रियाप्रियस्पर्शनप्रतिषेधात् चोदनालक्षणधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते । धर्मकार्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधो नोपपद्येत । अशरीरत्वमेव धर्मकार्यमिति चेत्

### प्रकटार्थविवरणम्

"[1]ते धूममभिसंभवन्ति । धूमाद्रात्रिम्" इत्यनुक्रान्तेन दक्षिणेन पथा चन्द्रलोकगतानामपि न निरतिशयं सुखमित्याह—तत्रापीति ॥ संपतत्यनेनास्माल्लोकादमुं लोकमिति सम्पातः कर्माशयः; तत्र यावल्लोकव्यं स्थित्वा "अथैतमेवाध्वानं पुनर्निवर्तन्ते" इति इयत्ताकरणात् सातिशयत्वं गम्यत इत्यर्थः । मनुष्यत्वादूर्ध्वगतेषु धर्मकार्यस्य सुखस्य सातिशयत्वमुक्तम् । [2]इदानीं ततोऽधोगतेषु तदाह मोक्षवैलक्षण्यसिद्धये—तथेत्यादिना ॥ इदानीमधर्मफलं प्रपञ्चयति—तथोर्ध्वगतेष्विति ॥ उभयविधकर्मफलं निगमयति मोक्षफलविलक्षणत्वाय—एवमिति ॥ किञ्च मोक्षो न नैयोगिकः प्रतिषिद्धप्रियाप्रियास्पर्शत्वात्, यन्नैवं न तदेवं, यथा धर्मकार्यमित्याह—अशरीरं वा वेति ॥ कर्मणां विचित्रफलदाने शक्तत्वात् प्रसिद्धकर्मफल[3]विलक्षणमपि मोक्षाख्यमशरीरत्वं धर्मकार्यं भविष्यतीति शङ्कार्थः । आत्मनः सर्व[र्वो]वास्तवशरीरसंबन्धवैधुर्यमशरीरत्वम्,

१. TM omits ते...वन्ति.

२. T and TM omit इदानीं.

३. T[1], TM, P and A. विलक्षणं.

भाष्यम्

न तस्य स्वाभाविकत्वात् । "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥" "अप्राणो ह्यमनाः शुभ्रः" "असङ्गो ह्ययं पुरुषः" इत्यादिश्रुतिभ्यः । अत एवानुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम् । तत्र किञ्चित्परिणामिनित्यं स्यात्, यस्मिन् विक्रियमाणेऽपि तदेवेदमिति बुद्धिः न विहन्यते, यथा पृथिव्यादिजगन्नित्यत्ववादिनाम्, यथा वा साङ्ख्यानां गुणाः । इदं तु पारमार्थिकं कूटस्थनित्यं व्योमवत् सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिःस्वभावम्, यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते । तदेतदशरीरत्वं मोक्षाख्यम् "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च" इत्यादिश्रुतिभ्यः । अतस्तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता । तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात् । तत्रैवं सति यथोक्तकर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत । नित्यश्च मोक्षः सर्वैः मोक्षवादिभिरभ्युपगम्यते । अतो न कर्तव्य-

प्रकटार्थविवरणम्

तस्य चानादित्वात् न धर्मकार्यत्वमित्याह—न तस्येति ॥ अनादिभावत्वान्मोक्षस्य नित्यत्वमपि सिद्धमित्याह—अत एवेति ॥ ननु नित्यत्वेऽपि नियोगतोऽन्यथा परिणंस्यत इत्याशङ्क्याह—तत्र किञ्चिदिति ॥ परिणामिनित्यं यत्किञ्चिद्वस्तु तत्र भवेत्र कर्मणान्यथाभावः । इदं तु कैवल्यं न तथेत्यर्थः । कैवल्यं न नैयोगिकं नित्यत्वात्, व्यापित्वात्, अविक्रियत्वात्, नित्यतृप्तत्वात्, निरवयवत्वात्, स्वयंज्योतिष्ट्वात्, धर्माद्यनवच्छेद्यत्वात्, कालत्रयापरिच्छेद्यत्वात्, न यदेवं न तदेवम्, यथा कर्मफलमिति भावः । धर्माद्यनवच्छेद्यत्वे प्रमाणमाह—अन्यत्र धर्मादिति ॥ ननूदाहृताः श्रुतयो न मोक्षविषयाः किन्तु ब्रह्मविषया इत्याशङ्क्याह—अतस्तद्ब्रह्मेति ॥ उक्तकर्मफलवैलक्षण्यात् तत्कैवल्यं ब्रह्मेत्यर्थः । ततः किमित्यत आह—तद्यदीति ॥ इतश्च मोक्षो न नैयोगिकः, साक्षात्कार-

भाष्यम्

शेषत्वेन ब्रह्मोपदेशो युक्तः । अपि च "ब्रह्म वेद ब्रह्मैव भवति" "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" "आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चन" "अभयं वै जनक प्राप्तोऽसि" "तदात्मानमेवावेदाहं ब्रह्मास्मीति, तस्मात्तत्सर्वमभवत्" "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इत्येवमाद्याः श्रुतयः ब्रह्मविद्यानन्तरमेव मोक्षं दर्शयन्त्यः मध्ये कार्यान्तरं वारयन्ति । तथा "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्तव्यान्तरवारणायोदाहार्यम्—यथा 'तिष्ठन् गायति' इति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते । "त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि" "श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति; सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु" "तस्मै मृदितकषायाय तमसः पारं

प्रकटार्थविवरणम्

निरन्तरत्वात् रज्ज्वविद्यास्तमयवदित्याह—अपि चेत्यादिना ॥ परं बिम्बरूपेण अपरं च प्रतिबिम्बितत्वेनेति परापरं ब्रह्म । तस्मिन्दृष्टे साक्षात्कृते अस्य विदुषः प्रारब्धव्यतिरिक्तानि कर्माणि क्षीयन्त इति नैरन्तर्यम् । तद्ब्रह्मात्मानमेवावेदजानात् "अहं ब्रह्मास्मि" इति ततो ज्ञानात्तद्ब्रह्म सर्वं परिपूर्णमभवत् । अज्ञानकृतः परिच्छेदभ्रमो व्यावर्तिष्टेत्यर्थः । इतश्च मोक्षो न नैयोगिकः, दर्शनफलत्वात्, रज्ज्वविद्यास्तमयवदित्यभिप्रेत्याह—तथा तद्धैतदिति ॥ तदेतद्बिम्बभूतं ब्रह्म पश्यन् वामदेवः "अहं मनुरभवं सूर्यश्च" इति मेने । दृष्टस्यैव तत्त्वस्य सर्वत्र प्रतिबिम्बितत्वादित्यर्थः । 'तिष्ठन्गायति' इत्युक्ते शब्दतस्तत्कर्तृकं क्रियान्तरं न भवतीत्येतावतोदाहरणम् । इतश्च मोक्षो न नैयोगिकः, अविद्यास्तमयत्वात् रज्ज्वविद्यास्तमयवदित्याह—त्वं हि नः पितेति ॥ अविद्यां निवर्तयसि ज्ञानोपदेशेनेत्यर्थः । तस्मै नारदाय ध्वस्तदोषाय तमसोऽज्ञानस्य पारं दर्शयती-

१. TM. सूक्ष्मार्थश्च.

### भाष्यम्

दर्शयति भगवान् सनत्कुमारः" इति चैवमाद्याः श्रुतयः मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति । तथा चाचार्यप्रणीतं न्यायोपबृंहितं सूत्रम्— "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति । मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति । न चेदं ब्रह्मात्मैकत्वविज्ञानं संपद्रूपम्—यथा "अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति" इति । न चाध्यासरूपम्—यथा "मनो ब्रह्मेत्युपासीत" "आदित्यो ब्रह्मेत्यादेशः" इति च मनआदित्यादिषु ब्रह्मदृष्ट्यध्यासः । नापि विशिष्टक्रियायोगनिमित्तम् "वायुर्वाव संवर्गः" "प्राणो वाव संवर्गः" इतिवत् ।

### प्रकटार्थविवरणम्

स्यज्ञानासंस्पृष्टवस्तुप्रदर्शनेनाज्ञानात् निवर्तितवानित्यर्थः । मिथ्याज्ञाननिवृत्तौ मोक्षे अक्षपादस्यापि संमतिरित्याह – तथा चेति ॥ पाठक्रमेणोत्तरोत्तरापाये तदनन्तराभावादपवर्गः । तथा हि—मिथ्याज्ञानापाये रागादिदोषानुदयः ; तदभावे धर्माधर्मप्रवृत्त्यभावः ; तदभावे च शरीरग्रहणाभावः ; तदभावे दुःखोपरम आत्यन्तिक इत्यर्थः । तर्हि मिथ्याज्ञाननिवृत्तिरपि नियोगादेवास्त्विति न वाच्यमित्याह—मिथ्याज्ञानेति ॥ सर्वत्राज्ञानव्यावृत्तेर्ज्ञानमात्रतन्त्रतादर्शनादित्यर्थः । ननु ब्रह्मात्मैकत्वज्ञानमपि संपद्रूपम् ; यथा मनोवृत्तिष्वानन्त्यसाम्येनानन्तविश्वेदेवसंपादनं विधितस्तत्फलप्राप्तिश्च ; तथा चेतनत्वसाम्येन जीवे ब्रह्मत्वं संपाद्य विधितः तत्फलं प्राप्यते । अथवालम्बनप्रधानाध्यासरूपं मनआदिषु ब्रह्मत्वदृष्टिवत् ; अथवा यथा अग्न्यादीनां संहारक्रियायोगात् वायोः संवर्गत्वेनोपासनम् , प्राणस्य च वागादिसंवरणात् , उत्क्रमणकाले संहरणाच्च संवर्गत्वेनोपासनं विधितः, तथा बृंहिक्रियायोगाज्जीवस्य ब्रह्मत्वेनोपासनं कर्म स्यात् , कर्तुः संस्काररूपं वाज्यावेक्षणवद्विधेयमेवेत्याशङ्क्याह—न चेदमित्या-

१. TM and A. संविद्रूपं.   ३. TM. नत्वे.

२. TM and A. संवादनं.

भाष्यम्

नाध्याज्यावेक्षणादिकर्मवत् कर्माङ्गसंस्काररूपम् । संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने "तत्त्वमसि" "अहं ब्रह्मास्मि" "अयमात्मा ब्रह्म" इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत । "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" इति चैवमादीन्यविद्यानिवृत्तिफलश्रवणान्युपरुध्येरन् । "ब्रह्म वेद ब्रह्मैव भवति" इति चैवमादीनि तद्भावापत्तिवचनानि संपदादिरूपत्वे न सामञ्जस्येनोपपद्येरन् । तस्मान्न संपदादिरूपं ब्रह्मात्मैकत्वविज्ञानम् । अतो न पुरुषव्यापारतन्त्रा ब्रह्मविद्या । किं तर्हि, प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवद्वस्तुतन्त्रैव । एवंभूतस्य च ब्रह्मणस्तज्ज्ञानस्य च न कयाचिद्युक्त्या शक्यः कार्यानुप्रवेशः कल्पयितुम् । न च विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः "अन्यदेव तद्विदितादथो अविदितादधि" इति विदिक्रियाकर्मत्वप्रतिषेधात्, "येनेदं सर्वं विजानाति तं केन विजानीयात्" इति च । तथोपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति— "यद्वाचानभ्युदितं येन वागभ्युद्यते" इत्यविषयत्वं ब्रह्मण उपन्यस्य, "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति । अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेत् न; अविद्याकल्पित-

प्रकटार्थविवरणम्

दिना ॥ प्रतिज्ञाचतुष्टये हेतुमाह— संपदादिरूपे हीति ॥ अबाधिततत्परमुख्यसामानाधिकरण्यविरोधान्नेयं कल्पनावकल्पत इत्यर्थः । किञ्च सम्पदादेरयथावस्तुत्वान्नाविद्यानिवृत्तिर्ब्रह्मात्मभावो वा स्यादित्याह—भिद्यत इत्यादिना ॥ उक्तप्रकारेण मोक्षरूपब्रह्मपर्यालोचनया च न[1] नियोगानुप्रवेशावकाश[2] इत्याह— एवंभूतस्य चेति ॥ अवेक्षणकर्मण आज्यस्य नियोगशेषत्ववद्विधीयमानशाब्दविदिक्रियाकर्मत्वेन वा ब्रह्मणो विनियोगशेषत्वं[नियोगशेषत्वं] भविष्यतीत्याशङ्क्याह— न च विदीति ॥ शाब्दस्यापि वेदनस्याविषयत्वे शास्त्रप्रमाणत्वमपि न सिध्यति, यदर्थोऽयमुद्यम इत्याह अविषयत्व इति ॥ परिहरति—नेति ॥ कर्मत्वाभाव-

१. T, TM, and P omit न.    २. T, T[1], P and A गानुषकाशः.

भाष्यम्

भेदनिवृत्तिपरत्वात् शास्त्रस्य । न हि शास्त्रं इदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषति । किं तर्हि, प्रत्यगात्मत्वेनाविषयतया प्रतिपादयत् अविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति । तथा च शास्त्रम्—"यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम् ।;" "न दृष्टेर्द्रष्टारं पश्येः न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः" इति चैवमादि । अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः । यस्य तूत्पाद्यो मोक्षः, तस्य मानसं वाचिकं कायिकं वा कार्यमपेक्षत इति युक्तम् । तथा विकार्यत्वे च । तयोः पक्षयोः मोक्षस्य ध्रुवमनित्यत्वम् । न हि दध्यादि विकार्यं उत्पाद्यं वा

प्रकटार्थविवरणम

मात्रेण नाप्रमाणकत्वम्, अनुमानादौ कर्मत्वाभावेऽपि तदनवभासमात्रव्यावर्तकत्वेन प्रामाण्योपलम्भात् तथेहापि प्रतीच आत्मत्वेनाकर्मतया अहं ब्रह्मास्मीति प्रतिपादयत् शास्त्रमविद्याकल्पितवेद्यवेदनादिभेदविलापनेन प्रमाणं भविष्यतीत्यर्थः । ब्रह्मणः स्वप्रकाशत्वात् प्रमातृव्यापाराधेयप्रकाशातिशयवत्त्वं कर्मत्वं नास्तीत्यत्र प्रमाणमाह—तथा च शास्त्रमिति ॥ यस्य ज्ञानिनो ब्रह्म अहमिति कर्तृत्वेनामतम्; ब्रह्मास्मीत्येवानुभवः, तस्य मतं सम्यग्दर्शनम् । मतं कर्मतया यस्य, न वेद सः ऐक्ये कर्मत्वायोगात् । अविज्ञातं अकर्मतया भवति तत्त्वं विजानताम् । विज्ञातमविदुषाम् इत्यनुवादः तर्हि तवापि ध्वस्ताविद्यस्वरूपस्य शास्त्रेण सम्पाद्यत्वादनित्यत्वप्रसङ्ग इत्याशङ्क्याह—अत इति ॥ यथा जलपात्रपातेनेन तद्गतादित्यस्य स्वाभाविकी बिम्बात्मता समर्प्यते, तथा तत्त्वमस्यादिवाक्योत्थेन प्रमातृव्यापारेण ब्रह्मात्मैक्याकारेणाज्ञानध्वंसोचिता स्वाभाविकी ब्रह्मात्मता व्यवतिष्ठत इति नानित्यतादोषः । स्वपक्षेऽनित्यत्वदोषं परिहृत्य परपक्षे क्रियानुप्रवेशसंभवेऽप्यनित्यत्वं दुर्निवारमित्याह—यस्य त्वित्यादिना ॥ तर्हि नित्य-

१. T[1] adds. किंतु.

भाष्यम्

घटादि नित्यं दृष्टं लोके। न चाप्यत्वेनापि कार्यापेक्षा, स्वात्मस्वरूपत्वे सत्यनाप्यत्वात्; स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वम्, सर्वगतत्वेन नित्याप्तस्वरूपत्वात् सर्वेण ब्रह्मणः आकाशस्येव। नापि संस्कार्यो मोक्षः येन व्यापारमपेक्षेत। संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्यात् दोषापनयनेन वा। न तावद्गुणाधानेन संभवति, अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य। नापि दोषापनयनेन, नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य। स्वात्मधर्म एव सन् तिरोभूतो मोक्षः क्रिययात्मनि संस्क्रियमाणेऽभिव्यज्यते— यथा आदर्शे निघर्षणक्रियया संस्क्रियमाणे भास्वरत्वं धर्म इति चेत्, न; क्रियाश्रयत्वानुपपत्तेरात्मनः। यदाश्रया क्रिया तमविकुर्वती नैवात्मानं लभते। यद्यात्मा स्वाश्रयक्रियया विक्रियेतानित्यत्वमात्मनः प्रसज्येत। "अविकार्योऽयमुच्यते" इति चैवमादीनि वाक्यानि बाध्येरन्। तच्चानिष्टम्। तस्मान्न स्वाश्रया क्रिया आत्मनः संभवति। अन्याश्र-

प्रकटार्थविवरणम्

सिद्धस्यैव क्रिययाप्यत्वं भवतु अनित्यतापरिहारायेत्याशङ्क्याह—न चाप्यत्वेनापीति॥ तत्किं जीवस्य स्वरूपम्, उत व्यतिरिक्तम्? उभयथापि क्रियया नाप्यत्वमित्यर्थः। इदानीं संस्कारद्वारेण क्रियानुप्रवेशं वारयति—नापीत्यादिना॥ यथादर्शस्य स्वतो भास्वरत्वेऽपि परोपाधिकं मलिनत्वं तथा स्वतः शुद्धस्वभावत्वेऽपि परोपाधिकमलिनत्वसंभवात् मलापकर्षः संभाव्यत इत्याह— स्वात्मधर्म एव सन्निति॥ किमसौ मलस्तात्त्विकोऽतात्त्विको वा? यद्यतात्त्विकः तर्हि ज्ञानमात्रापोद्यत्वात् न नियोगापेक्षा। यदि तात्त्विकः तात्त्विकस्यैव तर्हि क्रियया तन्निवृत्तिस्तात्त्विकी वाच्या। सा च तात्त्विकी क्रिया किमात्माश्रया उतान्याश्रया? नाद्य इत्याह—न क्रियाश्रयत्वेति॥ तदेव कथमित्यत आह—यदाश्रयेति॥ द्वितीयं दूषयति—अन्याश्रयायास्त्विति॥ क्रियावद्द्रव्यसंयोग्येव दर्पणाद्यन्योन्या[द्यन्या]श्रयक्रियया संस्क्रियते। न

१. T, P and TM. धर्मतः.

भाष्यम्

यायास्तु क्रियाया अविषयत्वान्न तयात्मा संस्क्रियते । ननु देहाश्रयया स्नानाचमनयज्ञोपवीतादिकया क्रियया देही संस्क्रियमाणो दृष्टः । न, देहादिसंहतस्यैवाविद्यागृहीतस्यात्मनः संस्क्रियमाणत्वात् । प्रत्यक्षं हि स्नानाचमनादेर्देहसमवायित्वम् । तया देहाश्रयया तत्संहत एव कश्चिद्-विद्ययात्मत्वेन परिगृहीतः संस्क्रियत इति युक्तम् । यथा देहाश्रयचि-कित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभिमानिन आरोग्यफलम्, 'अहमरोगः' इति यत्र बुद्धिरुत्पद्यते—एवं स्नानाचमनयज्ञोपवीतधारणा-दिकया 'अहं शुद्धः संस्कृतः' इति यत्र बुद्धिरुत्पद्यते स संस्क्रियते । स च देहेन संहत एव । तेनैव अहंकर्त्रा अहंप्रत्ययविषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते । तत्फलं च स एवाश्नाति, "तयोरन्यः पिप्पलं स्वाद्व-त्त्यनश्नन्नन्यो अभिचाकशीति" इति मन्त्रवर्णात् । "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति च । तथा "एको देवः सर्वभूतेषु गूढः

प्रकटार्थविवरणम्

चात्मनो निरंशस्य क्रियावद्द्रव्यैः संस्पर्शोऽस्ति नभोवत् । अतोऽसंस्कार्य इत्यर्थः । जाह्नवीजलाप्लवनादिना शुद्धोऽभूवमित्यादिप्रत्ययविरोधमाह—ननु देहाश्रय-येति ॥ न तत्राप्यन्याश्रयक्रिययात्मनः परमार्थतः संस्क्रियमाणत्वं किंतूदक-चलनेन प्रतिबिम्बचलनवत् अविद्याप्रतिबिम्बितस्य चिद्धातोः तदुत्थदेहादि-संसृष्टस्यानिर्वाच्यमेव तत्संस्कारेण संस्क्रियमाणत्वमित्याह—न देहादिसंहत-स्यैवेति ॥ कश्चिदित्यनिर्धारितविशेषरूपः । परलोकफलभोक्ता कश्चिदस्तीत्येवं प्रतिपन्न इत्यर्थः ॥ अविद्ययेति ॥ वेदान्तार्थानभिज्ञतया ॥ आत्मत्वेनेति ॥ ब्रह्मत्वेन परिगृहीतो मीमांसकैः अहंप्रत्ययावसेय एव जीवो ब्रह्मशब्दाभिधेयः; तस्यालौकिकं बिम्बस्थानीयं ब्रह्मरूपं नास्तीत्येवं मन्यमानैरित्यर्थः । पिप्पलं-कर्मफलम्; स्वादु मृष्टम्; अत्ति भक्षयतीत्यर्थः । आत्मेन्द्रियमनोयुक्तं देहेन्द्रियमन-स्संबद्धं जीवं भोक्तेत्याहुः । एवं तावत् सोपाधिकस्य चिद्धातोर्मिथ्यासंस्कार्यत्व-मुपपाद्य निरुपाधिकस्यासंस्कार्यत्वे प्रमाणमाह—तथैको देव इत्यादिना ॥

१. T, P and TM. संस्कार्य-   २. T, T[1], and P. बिम्बरूपं.

### भाष्यम्

सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इति "स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्" इति च । एतौ मन्त्रावनाधेयातिशयतां नित्यशुद्धतां च ब्रह्मणो दर्शयतः । ब्रह्मभावश्च मोक्षः । तस्मान्न संस्कार्योऽपि मोक्षः । अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यं केनचिद्दर्शयितुम् । तस्माज्ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते । ननु ज्ञानं नाम मानसी क्रिया; न, वैलक्षण्यात् । क्रिया हि नाम सा यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषचित्तव्यापाराधीना च । यथा "यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट् करिष्यन्" इति,

### प्रकटार्थविवरणम्

एको देवश्चिदेकरसः सर्वभूतेषु गूढः प्रतिबिम्बित इत्यर्थः । मायाप्रतिबिम्बितत्वेन च कर्मफलदातृत्वं[दातृ]पृथिव्यादिभूतानामुपादानं साक्षी च भवति । स एवाज्ञानप्रतिबिम्बिततया चेता द्रष्टा जीवः स्वतः पुनः केवलाविद्यातत्कार्यासंस्पृष्टः निर्गुणः नाधेयातिशय इत्यर्थः । स आत्मा परि[1] समन्तात् अगात् सर्वगत इत्यर्थः । शुक्रं दीप्यमानकायं लिङ्गरहितः । अव्रणमस्नाविरमित्याभ्यां स्थूलदेहप्रतिषेधः । अस्नाविरमिति सिरारहितः । सर्वत्र पुल्लिङ्गतया परिणामः । ननूक्तनीत्या संस्कारकतया नोपयोगश्चेत्तर्हि ज्ञानेतिकर्तव्यतयोपयोक्ष्यते कर्मेत्याशङ्क्याह—अतोऽन्यदिति ॥ चतुर्विधक्रियाफलव्यतिरेकेण ज्ञानेतिकर्तव्यत्वे कर्मणो न प्रमाणमिति वक्ष्यामः । तस्मात् इत्युपसंहारः । ज्ञानस्यानुप्रवेशमङ्गीकुर्वता क्रियाया अनुप्रवेशोऽङ्गीकृत एवेत्याह — ननु ज्ञानमिति ॥ क्रियात्वमसिद्धमित्याह—नेति ॥ क्रिया हि नाम सा यत्र पुरुषश्चोद्यते, वस्तुस्वरूपापेक्षा च न भवति, पुरुषेच्छावचननिष्पाद्या च; तत्रैवोदाहरणमाह—यथेति ॥ ध्याने विधिना प्रेर्यते पुरुषः, तच्च न वस्तुसापेक्षं समारोपितरूपे-

१. T and TM. omits. परि.

भाष्यम्

"संध्यां मनसा ध्यायेत्" इति चैवमादिषु। ध्यानं चिन्तनं यद्यपि मानसं तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यम्, पुरुषतन्त्रत्वात्। ज्ञानं तु प्रमाणजन्यम्। प्रमाणं च यथाभूतवस्तुविषयम्। अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुं न शक्यम्। केवलं वस्तुतन्त्रमेव तत्; न चोदनातन्त्रम्; नापि पुरुषतन्त्रम्; तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम्। यथा च "पुरुषो वाव गौतमाग्निः" "योषा वाव गौतमाग्निः" इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति; केवलचोदनाजन्यत्वात्तु क्रियैव सा पुरुषतन्त्रा च; या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा; नापि पुरुषतन्त्रा; किं तर्हि प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतत् नक्रिया। एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम्। तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम्। तद्विषये लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात् कुण्ठीभवन्ति उपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत्, अहेयानुपादेयवस्तुविषयत्वात्। किमर्थानि तर्हि "आत्मा वाऽरे द्रष्टव्यः

प्रकटार्थविवरणम्

णापि ध्यानदर्शनात् पुरुषेच्छासंपाद्यं चेति। क्रियास्वरूपमुक्त्वाधुना तद्विलक्षणज्ञानस्वरूपमित्याह—ज्ञानं त्विति॥ किञ्च न वस्तुनिश्चयहेतुः क्रिया; ज्ञानं तु यथास्थितवस्तुनिश्चायकमित्यपरं वैलक्षण्यमाह—यथा चेत्यादिना॥ प्रकृते योजयति तत्रैवं सतीति॥ उक्तप्रकारेण क्रियावैलक्षण्यमात्रेण न ज्ञाने चोदना निवारयितुं शक्या, लिङादीनां श्रवणादित्याशङ्क्याह—तद्विषय इति॥ तस्मिन् ज्ञानलक्षणे, विषये लिङादयः श्रूयमाणा अपि कुण्ठीभवन्ति, पुरुषं प्रेरयितुं न शक्नुवन्ति, ज्ञानस्य पुरुषेच्छानधीनविषयत्वादित्यर्थः। नापि ज्ञानस्य विषये पुरुषः प्रेरयितुं शक्य इत्याह—अहेयेति॥ यदि पाषाणादिप्रयुक्तक्षुरतैक्ष्ण्यादिवज्ज्ञाने तद्विषये वा कुण्ठीभावः तर्हि वाक्यानां कोऽर्थ इत्याह—किमर्थानीति॥ 'आत्मा द्रष्टव्यः' इत्यात्मदर्शनोन्मुखं चेतःकार्यम्; नाना-

१. TM. हेवं.

भाष्यम्

श्रोतव्यः" इत्यादीनि विधिच्छायानि वचनानि ? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः। यो हि बहिर्मुखः प्रवर्तते पुरुषः 'इष्टं मे भूयादनिष्टं मा भूत्' इति, न च तत्रात्यन्तिकं पुरुषार्थं लभते, तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविकात् कार्यकरणसंघातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति "आत्मा वा अरे द्रष्टव्यः" इत्यादीनि। तस्यात्मान्वेषणाय प्रवृत्तस्याहेयमनुपादेयं चात्मतत्त्वमुपदिश्यते। "इदं सर्वं यदयमात्मा" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्......केन कं विजानीयात् ...विज्ञातारमरे केन विजानीयात्" "अयमात्मा ब्रह्म" इत्यादिभिः। यदप्यकर्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न भवतीति, तत्तथैवेत्यभ्युपगम्यते। अलङ्कारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति। तथा च श्रुतिः—"आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्॥" इति। "एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत" इति च स्मृतिः। तस्मान्न प्रतिपत्तिविधिशेषतया ब्रह्मणः समर्पणम्॥

प्रकटार्थविवरणम्

त्माभिनिवेशः कार्य इत्येव वाक्यार्थ इत्याह—स्वाभाविकेति॥ ननु द्रष्टव्यादिवाक्यैरात्मान्वेषणे प्रवर्तितस्यापि विधिगोचर एवात्मा शास्त्रेणोपदिश्यताम्। नेत्याह—तस्यात्मान्वेषणायेति॥ पूर्वोक्तमनूद्याङ्गीकरोति—यदपीत्यादिना॥ शरीरं तप्यमानमनु तापं कुर्याद्ब्रवत्। किमिच्छन् न किमपीति कृतकृत्यतां दर्शयति। यस्माद्ब्रह्मात्मावगतौ सत्यां न किञ्चिद्धेयमुपादेयं वा विद्यते कृतकृत्यता च भवति। तस्मात् प्राचां वृत्तिकृतां प्रतिपत्तिविधिवादोऽसङ्गत इत्याह—तस्मादिति॥

इदानीं यदाह स प्राभाकरः—"नास्ति जीवातिरिक्तं ब्रह्म, किन्तु जीव एव वेदान्ते ब्रह्मशब्दाभिधेयः; तस्य चोपासानियोगशेषत्वेन वेदान्तैः प्रतिपाद-

भाष्यम्

यदपि केचिदाहुः— प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्ति इति तन्न, औपनिषदस्य पुरुषस्यानन्यशेषत्वात्। योऽसावुपनिषत्स्वेवाधिगतः पुरुषोऽसंसारी ब्रह्मस्वरूपः उत्पाद्यादिचतुर्विधद्रव्यविलक्षणः स्वप्रकरणस्थोऽनन्यशेषः नासौ नास्तीति नाधिगम्यत इति वा शक्यं वदितुम्; "स एष नेति नेत्यात्मा" इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, य एव निराकर्ता तस्यैवात्मत्वात्। नन्वात्मा अहंप्रत्ययविषयत्वादुपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम्; न, तत्साक्षित्वेन प्रत्युक्तत्वात्। न ह्यहंप्रत्ययाविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगतः सर्वस्यात्मा अतः स न केनचित्प्रत्या-

प्रकटार्थविवरणम्

नम्" इति तत् यद्यपि प्रागुक्तन्यायपरास्तम्; तथापि किञ्चिदधिकं वक्तुमुद्भावयति—यदपीत्यादिना॥ तत्र च वक्तव्यम्—किमनवगम्यमानत्वान्नास्ति ब्रह्मेत्युच्यते, किं वा अवगतस्यापि प्रमाणान्तरविरोधात्? नाद्य इत्याह—तन्नौपनिषदस्येति॥ अनन्यशेषत्वादिति॥ स्वातन्त्र्येणैव वेदान्तपदसमन्वयावगम्यमानत्वान्नास्तीति न शक्यते वक्तुमित्यर्थः। किञ्च वेदान्तवेद्ये वस्तुन्यात्मशब्दप्रयोगोऽस्ति। तस्य च निराकरणमशक्यम्; निराकर्तुरेवात्मत्वप्रसक्तेरित्याह—स एष इति॥ द्वितीयं शङ्कते—नन्विति॥ आत्मा नासंसारिब्रह्मरूपेण प्रतिपादयितुं शक्यते, तस्याहंप्रत्ययविषयत्वात् तद्विरोधात्, अत एवौपनिषदत्वविशेषणं चानुपपन्नमित्यर्थः। न विशिष्टस्य ब्रह्मता शास्त्रेण प्रतिपाद्यते, किन्तु तत्परामर्शेन सोऽयमितिवत्स्वरूपैक्यं प्रतिपाद्यते। स्वरूपस्य चाहंप्रत्ययसाक्षित्वेन तद्विषयत्वाभावात् नास्ति विरोध इत्याह—न तत्साक्षित्वेनेति॥ अन्यतोऽसिद्धत्वादौपनिषदत्वमपि घटत इत्याह— न ह्यहमिति॥ नाधिगतश्चेत् केनापि तर्हि नास्त्येव इति न वाच्यमित्याह—सर्वस्यात्मेति॥ चक्षुर्व्यतिरेकेणान्यतोऽसिद्धमपि रूपं यथा न प्रत्याख्यातुं

१. TM. विषया.

## भाष्यम्

ख्यातुं शक्यो विधिशेषत्वं वा नेतुम् । आत्मत्वादेव च सर्वेषां न हेयो नाप्युपादेयः । सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति । पुरुषो विनाशहेत्वभावादविनाशी, विक्रियाहेत्वभावाच्च कूटस्थनित्यः, अत एव नित्यशुद्धबुद्धमुक्तस्वभावः । तस्मात् "पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः" । "तं त्वौपनिषदं पुरुषं पृच्छामि" इति चौपनिषदत्वविशेषणं

## प्रकटार्थविवरणम्

शक्यते तथा उपनिषद्व्यतिरेकेणान्यतोऽसिद्धोऽप्युपनिषद्भ्य एव सिद्ध्यन् न प्रत्याख्यातुं शक्यते इत्यर्थः । ननु चेतनत्वाज्जीववत्तर्हि विधिशेष एवेत्याशङ्क्याह— विधिशेषत्वं वा नेतुम् ॥ न शक्यः शेषत्वे द्वाराभावात्, मानाभावाच्चेत्यर्थः । नन्वधिकारिभेदेनातिरात्रे षोडशिनो ग्रहणाग्रहणवत् मुमुक्षुभिः वेदान्ते श्रद्दधानैरेव तद्वेद्य आत्मोपादीयते, त्यज्यते त्वन्यैरित्याशङ्क्याह— आत्मत्वादेव चेति ॥ ननु प्रसिद्ध एव नित्यात्मपरित्यागो बौद्धानाम्, विनाशोपगमात्; मीमांसकानां चापि अक्रियात्मत्यागो विकाराङ्गीकारात्; साङ्ख्यानां च नित्यशुद्धो[द्धात्मो]पादानं प्रसिद्धमित्याशङ्क्याह—सर्वं हीति ॥ न तावत् स्वत एव विनाशः, क्षणभङ्गस्य निराकरिष्यमाणत्वात्; नापि परतः, निरवयवत्वेन नभोवद्दाहादिविनाशहेतूपरागाभावात्; अतो व्यामोहमहिम्नैव नित्यात्मत्यागः । आकाशवन्निरवयवत्वाद्विक्रियाहेत्वभावात् विकाराङ्गीकारो विभ्रमविलसित एव । यतो विनाशविकारयोर्हेतुर्नास्ति अत एव नित्यशुद्धबुद्धमुक्तस्वभावः, साङ्ख्यैः भ्रान्त्या वस्तुतःपरिच्छिन्नोऽभ्युपगतः । परमार्थतस्तु तस्मात् पुरुषान्न परं किञ्चिद्वस्त्वस्ति; तत्र प्रमाणम् "सा काष्ठा सा परा गतिः" इति श्रुतिः । सर्वस्य विनश्यतश्चिदेव मर्यादावधिः; सर्वस्य भेदभ्रमस्य सा चिदेव परा गतिरधिष्ठानम्; अतोऽहेयानुपादेयता सिद्धा । तद्धितश्रुत्या चोपनिषदां तत्प्रतिपादने विनियोगादौपनिषदत्वं सिद्धमित्याह—तं त्वौपनिषदमिति ॥

१. T. न.

२. TM omits. विधि.

३. TM omits. च.

४. T लब्धिः.

५. TM· पादनविनि·

भाष्यम्

पुरुषस्योपनिषत्सु प्राधान्येन प्रकाश्यमानत्व उपपद्यते । अतो भूतवस्तुपरो वेदभागो नास्तीति वचनं साहसमात्रम् ॥

यदपि शास्त्रतात्पर्यविदामनुक्रमणम्—"दृष्टो हि तस्यार्थः कर्मावबोधनम्" इत्येवमादि, तद्धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभि-

प्रकटार्थविवरणम्

ननु न प्राभाकराणामेवैतत्साहसमात्रम्; दर्शितं हि शबरस्वामिप्रभृतीनां भाषणमपीत्याशङ्क्याह[1] यदपीत्यादिना ॥ अयमर्थः—स्वाध्यायाध्ययनानन्तरं ध्यानविधायकमाम्नायमुपलभ्य[2] वेदस्यानर्थक्ये शङ्किते भाष्यकारेणार्थसद्भावमात्रं[3] दर्शितम् । कर्मावबोधनमिति तु प्रकृतोपयोगादुक्तम्, नान्ययोगव्यवच्छेदाभिप्रायेणेति[4] । किञ्च सूत्रकारादिवचनं वृद्धव्यवहारमूलं किं वा स्वोत्प्रेक्षामूलम्? यद्याद्यः, तर्हि वृद्धव्यवहारे पदानामन्विताभिधाने सामर्थ्यावधारणात् वेदेऽपि मुख्यवृत्त्या पदानामन्विताभिधायित्वात् न कार्यमात्रपरः सर्वो वेदः । तथा च विमतो मुख्यवृत्त्यापि शब्दप्रमेयः, प्रमेयत्वात्, पराभिमतकार्यवदिति प्रयोगः। अथ श्रोतुः प्रवृत्तिदर्शनेन कार्यज्ञानं प्रवृत्त्युपयोग्यनुमाय तत्रैव व्युत्पत्तिं प्रतिपद्यते, न, तटस्थकार्यमात्रज्ञानस्य[5] प्रवर्तकत्वायोगात् । अन्वितकार्यज्ञानस्य[6] प्रवर्तकत्वेऽपि लाघवाय अन्विते शक्तिरस्तु, अन्यथा प्रयत्नादावपि व्युत्पत्तिप्रसङ्गात्[7], प्रयोजकद्वैविध्यप्रसङ्गाच्च । कार्यान्वयिनि सामर्थ्यमिति च बहुविशेषणप्रयोजकप्रसङ्गात्[8], कार्यान्वययोश्च युगपद्विशेषणविशेष्यभावप्रसङ्गात्, तस्माल्लाघवाय[9] उभयसंप्रतिपन्नान्वितमात्रे पदव्युत्पत्तिः । न चात्यन्तलाघवाय पदार्थमात्रे शक्तिः, संसर्गबुद्धेरशाब्दत्वप्रसङ्गात्; शब्दावगतपदार्थनिबन्धनत्वाच्छाब्दत्वे लैङ्गिकस्यापि प्रत्यक्षत्वप्रसङ्गात्; प्रथमावगतसंसर्गपरतायाः त्यागाप्रसङ्गात्[10], मध्ये च पदार्थशक्तिकल्पने गौरवात्, युगपत् सर्वप्रतीत्यादिदूषणस्य चेतरत्र समानत्वात्, सहकारिविशेषापेक्षायाश्च समानत्वात्, वाक्य[वाक्यार्थ]प्रतीतिनान्तरीयकत्वेन पदार्थान्वयव्यतिरेकयोरन्यथासिद्धत्वात्,

१. T. omits आशङ्क्य.
२. TM. omits आम्नायं.
३. TM. संभाव.
४. TM adds नान्ययोगादुक्तम्.
५. A. तदर्थं.
६. TM. अन्वितं.
७. A. जन.
८. TM omits विशेषण.
९. A omits तस्मात्......प्रसङ्गात्.
१०. T, T¹, P and TM. अप्रसङ्गात्.

## प्रकटार्थविवरणम्

"पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः ।
खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः ॥"

इत्यत्रापि संसर्गबुद्धेरनुपपत्तिप्रसूतत्वात् । तस्मात्क्रमेणोच्चार्यमाणेषु पदेषु संस्कारभूयस्त्वादव्यभिचारिणः पदार्थाः प्रथमं प्रतीयन्ते; पश्चात् तान्येव स्मृत्यारूढानि तेषामेवान्वयं प्रतिपादयन्तीत्यन्विताभिधानमेव युक्तम् । प्रयोगोऽपि—विप्रतिपन्नः शब्दव्युत्पत्तिगोचरः, प्रमेयत्वात्, उभयाभिमतप्रमेयवदिति । न च व्यवहारादेव सङ्गत्यधिगतिनियमः । 'पुत्रस्ते जातः' इत्यादौ वदनविकसनादिना हर्षाद्युत्पादानुमानेन सामान्येन तत्कारणप्रतीतिमात्रजननं सामर्थ्यमधिगम्य प्रयोगान्तरेष्वावापोद्धाराभ्यां विशेषेऽपि व्युत्पत्त्युपपत्तेः । संशयस्य च व्यवहारेऽपि समानत्वात् किमयं स्मृत्वा प्रवृत्तः, किं वा बुद्ध्वेति । न च व्यवहारोऽपि कार्यज्ञानात् फलकार्यतायां व्यभिचारात्; किं त्वन्वयव्यतिरेकाभ्यां कृतियोग्येष्टसाधनज्ञानात् । न च पराभिमतं कार्यं तत्त्वतोऽस्ति अनिरूपितप्रमाणकत्वात् नरविषाणवत्; न तावन्ममेदं कार्यमिति धीः चिकीर्षामात्रोल्लेखात्; फले तत्साधने च चिकीर्षागोचरतातिरेकिणी कृत्युद्देश्यता भातीत्यत्र तु कोशपानमेव शरणम् । न च वैदिको लिङादिः पराभिमतकार्यबोधकः तत्रागृहीतसङ्गतित्वात् पदान्तरवत् । न च स्वर्गकामपदसमभिव्याहारात् प्रतीते सङ्गत्यधिगतिः, क्रियाया एवेश्वरद्वारेणावान्तरापूर्वद्वारेण वा कालान्तरीयफलसाधनत्वसंभवात् । आग्नेयादीनां प्रधानापूर्वसाधनत्ववत् । अनुपपत्तिगम्यत्वे चापूर्वत्वानुपपत्तिः । न च तदुत्थं ज्ञानं तर्कः अबाधितासन्दिग्धाज्ञातार्थत्वात् पटज्ञानवत्; न चासिद्धत्वाद्भाविन्यपेक्षा चक्रकापत्तेश्च; यूपादिपदानामगतिकगतित्वाल्लौकिकस्याप्यत्र संभवात् । अतो लिङाद्यर्थः कृतियोग्यमिष्टसाधनमेव, न नियोगः; नापि भावनाद्वयम्, बालेनानाकलितत्वात्, दृष्टपरिहारेणादृष्टकल्पने कारणादर्शनात्, शब्दस्य च परिस्पन्दादिव्यापारानिरूपणात्, युगपत्क्रमेण वा उभयाभिधायोगात्, प्रवर्तकत्वसामान्यस्याभिधाने परिशेषात् शब्दव्यापारस्याश्रयत्वकल्पने

१. T, T[1], P and A श्वेति.
२. A omits पदेषु.
३. TM. उपादान.
४. A. तायाः.
५. TM. प्रधानः. T, T[1] and P विषाना.
६. TM. तत्ते. A. ततो.
७. T, P, TM and A यवा.

## भाष्यम्

प्रायं द्रष्टव्यम् । अपि च "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसङ्गः । प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण भूतं चेद्वस्तूपदिशति भव्यार्थत्वेन, कूटस्थनित्यं भूतं नोपदिशतीति को हेतुः । न हि भूतमुपदिश्यमानं क्रिया भवति ।

## प्रकटार्थविवरणम्

वैदिकस्यापि[1] लिङादेरप्रामाण्यापातात्, शब्दव्यापारे प्रवर्तयत्यपि समीहितसाधनतावगममन्तरेण बुद्धिपूर्वाधिकारिणामुपक्षणीयवचनादिव प्रवृत्त्यनुपपत्तेरन्वयव्यतिरेकसिद्धं कृतियोग्येष्टसाधनस्यैव प्रवर्तकत्वम् । आज्ञादेरपीष्टसाधनत्वानुबन्धेनैव प्रवर्तकत्वं तदभावेऽभावात् । न च व्याकरणेनाज्ञादिव्यापारेषु लोकसङ्गतिः वेदेऽपि प्रसङ्गात्; असंभवादनङ्गीकारे गौरवाल्लोकेऽपि नादर्तव्यम् । लाक्षणिकार्थभेदपरं तु तत्सूत्रम्[2] । वैदिका लिङादयो व्यापारबोधकाः बोधकत्वात्[3] लौकिकलिङादि[4]वदित्यप्यनुमाने साध्यवैकल्यात् । कारकत्वाद्व्यापारवत्त्वानुमाने[5] व्यापकानुपलब्धिबाधः; स्वाधारज्ञानता[ज्ञातता]तिशयाङ्गीकारात् सिद्धसाधनम्; लिङ्गे च व्यभिचारः; प्रवृत्तिहेतुत्वात् तदनुकूलव्यापारवत्त्वा[6]नुमाने चासिद्धिः; अयस्कान्ते चानेकान्तः; काम्यनित्यभेदोऽपि साध्यासाध्याधिकारिविशेषणभेदादुपपन्नः । तदेवं वृद्धव्यवहारानुसारेण कर्मकाण्डमपि पराभिमतकार्यविपरीते सिद्धे प्रमाणं किं पुनर्ब्रह्मकाण्डे [ण्डम्] । प्रयोगोऽपि वेदः सिद्ध एव प्रमाणं प्रमाणत्वात् प्रत्यक्षवदिति । यदि[7] स्वोत्प्रेक्षामूलं सूत्रकारादीनां वचनम्, तदापि[8] किमालम्बनाभाव आनर्थक्यं प्रयोजनाभावो वा ? यद्याद्यस्तर्हि[9] "सोमेन यजेत" इत्यादौ सोमादिपदानां निरालम्बनत्वप्रसङ्ग इत्याह—अपि चाम्नायस्येत्यादिना ॥ अथ निरालम्बनत्वमानर्थक्यं नाङ्गीकरोषि क्रियासाधनोपदेशाभ्युपगमात्, तत्राह—प्रवृत्तिनिवृत्तीति ॥ अथ क्रियाद्वारकत्वात्प्रयोजनस्य तच्छेषत्वेनैव भूतोपदेशो-

१. TM and A omit अपि.
२. A. तत्सूत्र.
३. T and TM बोधत्वात्.
P बोधकलिङादित्वात्.
४. T, T¹, P and TM omit लिङादि.
५. A adds व्यापकानुमाने.
६. A omits व्यापारवत्वा.
७. A omits यदि.
८. T, TM, P and A तदपि.
९. TM. यद्याद्यः.

भाष्यम्

अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात् क्रियार्थ एव भूतोपदेश इति चेत्, नैष दोषः । क्रियार्थत्वेऽपि क्रियानिर्वर्तनशक्तिमद्वस्तूपदिष्टमेव । क्रियार्थत्वं तु प्रयोजनं तस्य । न चैतावता वस्त्वनुपदिष्टं भवति । यदि नामोपदिष्टं किं तव तेन स्यादिति । उच्यते—अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति । तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन । अपि च 'ब्राह्मणो न हन्तव्यः' इति चैवमाद्या निवृत्तिरुपदिश्यते । न च सा क्रिया ; नापि क्रियासाधनम् ; अक्रियार्थानामुपदेशोऽनर्थकश्चेत् 'ब्राह्मणो न हन्तव्यः' इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तम्, तच्चानिष्टम् । न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुम्, हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण । नञश्चैष

प्रकटार्थविवरणम्

ऽङ्गीक्रियते, न स्वातन्त्र्येणेत्याह—अक्रियात्वेऽपीति ॥ भवतु क्रियाद्वारकं प्रयोजनं केषांचित् ; तथापि अप्रयोजनभूतोपदेशस्तदैव त्वयाङ्गीकृत इत्याह—नैष दोष इति ॥ तथापि सप्रयोजनता ममैव सिद्ध्यति क्रियासद्भावात्, न तवेत्याह—यदि नामेति ॥ क्रियाभावेऽप्यलौकिकात्मोपदेशः सप्रयोजन एव ममापीत्याह—उच्यत इति ॥ इतश्चाक्रियार्थानामानर्थक्यं न शक्यते वक्तुमित्याह—ब्राह्मण इत्यादिना ॥ ननु स्वभावत एव शास्त्राद्युपदेशमन्तरेण प्राप्तो यो हन्तिधात्वर्थः स यदा नञानुरज्यते तदा भवत्यहननमिति । ततो हननविरोधिन्यहननक्रिया मनसि [मानसी] । विधीयते अनेनेति विधिरेवायमित्याशङ्क्याह—न च स्वभावप्राप्तेति ॥ हननक्रियाया निवृत्त्या यदौदासीन्यम्, तद्व्यतिरेकेण विधिपरत्वं कल्पयितुं शक्यते, विधिनिषेधविभागस्य विलोपप्रसङ्गादिति भावः । किं च यदा नञो न हन्त्यर्थः संबध्यते, तदा न भवत्यहननमिति, किन्तु हननप्रतिषेध एव नञः स्वसंबन्ध्युपमर्दरूपत्वादित्याह—नञश्चैष इति ॥ किं च न धात्वर्थेन नञः संबन्धः, तस्यान्योपसर्जनत्वात्, किं तु प्रधानेन । प्रत्ययार्थश्च

१. T, T[1], P and A सप्रयोजन. २. A ज्ञानं.

भाष्यम्

स्वभावो यत्स्वसंबन्धिनोऽभावं बोधयतीति । अभावबुद्धिश्चौदासीन्यकारणम् । सा च दग्धेन्धनाग्निवत् स्वयमेवोपशाम्यति । तस्मात् प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव 'ब्राह्मणो न हन्तव्यः' इत्यादिषु प्रतिषेधार्थं मन्यामहे, अन्यत्र प्रजापतिव्रतादिभ्यः । तस्मात् पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यम् ॥

प्रकटार्थविवरणम्

इष्टसाधनत्वं प्रत्ययेनानूद्य निषिध्यते । तथा च ब्राह्मणहननमदृष्टाविरोधीष्टसाधनं न भवतीत्यर्थादनिष्टसाधनं भवतीति ज्ञात्वोदास्त इत्याह—अभावबुद्धिश्चेति ॥ नन्वभावबुद्धौ सत्यां कथमौदासीन्यमित्याशङ्क्याह—सा चेति ॥ उपसंहरति—तस्मादिति ॥ ननु "नेक्षेतोद्यन्तमादित्यम्" इत्यादिष्वनीक्षणं कुर्यादिति तद्विरुद्धार्थत्वं दृष्टमित्याशङ्क्याह—अन्यत्रेति ॥ अभाव एव नञो मुख्यार्थः । प्रजापतिव्रतादिषु तु "तस्य व्रतम्" इत्यनुष्ठेयाभिधायिव्रतशब्दविरोधाल्लक्षणयेक्षणविरोधिनि क्रियान्तरे वृत्तिरिति भावः । तदेतदभिप्रेत्योक्तम्—

"नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकृत् ।
वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनौ ॥" इति ।

न च नास्त्येवाभावो नामेति वाच्यम् । अस्ति तावत् नास्तिताया अप्यनुभवात् । न च भावान्तरमेवाभावः, प्रतियोगिसापेक्षत्वानपेक्षत्वलक्षणविरुद्धधर्माध्यासात् । न च यादृशं स्वरूपं तेऽभावाश्रयः तादृशमभावव्यवहारगोचर इति चतुरश्रम् । यतो ममाभावविरोधिभावावरुद्धे नाभावो ज्ञायते, तव तु तदभावात् स्वरूपं चेदभावव्यवहारगोचरः, तर्हि सघटेऽप्यभावव्यवहारस्य को निवारयिता । यथा सत्यसति चाभावे नाभावं जन्म [अभावजन्म] किं तु सहानवस्थानम् प्रसिद्धमेव । तस्मात् 'निर्घटं भूतलम्' इति ज्ञानं विशेषणनिबन्धनं विशिष्टज्ञानत्वात्, 'सघटं भूतलम्' इति ज्ञानवत् । विशेषणं स्वरूपप्रतियोग्यतिरिक्तोऽभावः । स च योग्यानुपलब्धिगम्यः उभयसंप्रतिपन्नानुपलब्धिसध्रीचीनेन मनसाभावग्रहणोपपत्तौ चक्षुषोऽसंप्रयुक्तप्रतीतिजनकताया अलौकिक्याः

१. TM adds भावान्न च.
२. TM and A भवतु.
३. A व्यवहारगोचरस्य.
४. TM. तस्य सति.

भाष्यम्

यदप्युक्तम्—कर्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात् 'सप्तद्वीपा वसुमती'इत्यादिवदिति, तत्परिहृतम्। 'रज्जुरियं नायं सर्पः' इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात्। ननु श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनान्न रज्जुस्वरूपकथनवदर्थवत्त्वमित्युक्तम्। अत्रोच्यते—नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुं वेदप्रमाणजनितब्रह्मात्मभावविरोधात्। न हि शरीराद्यात्माभिमानिनो दुःखभयादिमत्त्वं दृष्टमिति तस्यैव वेदप्रमाणजनितब्रह्मात्मतावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमित्तं दुःखभयादिमत्त्वं भव-

प्रकटार्थविवरणम्

कल्पयितुमशक्यत्वात्, रूपे [अरूपं] च कल्पनीयत्वात्, कल्पनायाश्च गौरवदोषदुष्टत्वात्, प्राप्यकारित्वप्रमितिलिङ्गयोश्चाविशेषात्। न च गुणस्य[1] गुणाश्रयत्वेऽनवस्था द्रव्यस्य द्रव्याश्रयत्ववदनपवादकत्वात् स्वातन्त्र्योपलम्भमात्रेण द्रव्य[2]व्यवहारात् न द्रव्यत्वप्रसङ्गः। तस्माद्योग्यताख्यसंयोगेनैव रूपग्रहणात् नासंयुक्तेऽभावे चक्षुषः[3] प्रीति[प्रतीति]जनकता। अन्वयव्यतिरेकयोश्च धर्मिग्रहणापेक्षयादन्यथासिद्धेः। तस्मान्नाभावोऽक्षगम्योऽसंयुक्तत्वात् रसवत्; अनुपलब्धिस्तूपलब्ध्यैवाभावज्ञानहेतुः देवकुलादावनुपलब्धदेवदत्ताभावस्यापि स्मर्यमाणानुपलब्धेः, मार्गेऽभावप्रतिपादनात्; न चानवस्था नित्या[4]नुभवगम्यत्वादित्य[5]लं प्रसङ्गागतेन। यस्मात्[6] प्रतिषेधवाक्यानामक्रियार्थानामपि नानर्थक्यं तस्मादित्युपसंहारः। पुनः परोक्तमनूद्य दूषयति—यदप्युक्तमित्यादिना॥ ब्रह्मात्मभावावगमात्प्राक् संसारित्वं नामागामिशरीरादिका[7]रणवत्त्वम्, देहे चाग्रहग्रहः। न च तद्ब्रह्मात्मभावावगतावप्यस्ति, ज्ञानानलेन प्लुष्टत्वात्। कर्मशेषदोषवशात् प्रारब्धकार्यमात्रदर्शनं चाविरुद्धम्। यथान्तःकीटदुष्टवटबीजे भाव्यङ्कुरादिजननशक्तिप्रतिहतावपि बाह्यबीजमात्रव्यवहारदर्शनं तद्वदित्याह—नावगतब्रह्मात्मभावस्येत्यादिना॥

१. TM omits गुणस्य.
२. T, $T^1$, and P. चन्द्र. A omits द्रव्य.
३. A. चक्षुषा प्रतीति.
४. T and $T^1$ मित्यनुभव.
५. A omits इति.
६. A omits यस्मात्.
७. T, $T^1$, P and TM. करण.

भाष्यम्

तीति शक्यं कल्पयितुम् । न हि धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्तं दुःखं भवति । न च कुण्डलिनः कुण्डलित्वाभिमाननिमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानरहितस्य तदेव कुण्डलित्वाभिमाननिमित्तं सुखं भवति । तदुक्तं श्रुत्या "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति । शरीरे पतितेऽशरीरत्वं स्यात्, न जीवत इति चेन्न, सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात् । न ह्यात्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वान्यतः सशरीरत्वं शक्यं कल्पयितुम् । नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचाम । तत्कृतधर्माधर्मनिमित्तं सशरीरत्वमिति चेन्न, शरीरसंबन्धस्यासिद्धत्वात् धर्माधर्मयोरात्मकृतत्वासिद्धेः, शरीरसंबन्धस्य, धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गात्, अन्धपरम्परैषानादित्वकल्प-

प्रकटार्थविवरणम्

उक्तमेव सदृष्टान्तं सप्रमाणं च प्रपञ्चयति—न हीत्यादिना । कर्मशेषसद्भावं दर्शयिष्यति स्वयमेव । अशरीरशब्दस्य व्युत्पत्तिबलेन विरोधमाह—शरीरे पतित इति ॥ तत्र वक्तव्यं किं नैमित्तिकमशरीरत्वं शरीरे पतिते स्यात् उत स्वाभाविकम्? तत्रागामिसकलशरीरादिकारणाभाववत्त्वं नैमित्तिकमशरीरत्वं जीवतोऽप्यविरुद्धमित्याह—न सशरीरत्वस्येति॥ अभिमानोऽनेन लक्ष्यत इति लक्षणं कारणमित्यर्थः । स्वाभाविकमशरीरत्वं पूर्वमपि सिद्धमित्याह—[१]नित्यमिति॥ सत्य एवात्मनः शरीरसंबन्धो न मिथ्याज्ञाननिमित्त इत्याह—तत्कृतेति ॥ आत्मकृतधर्माधर्मनिमित्तं सशरीरत्वम्, आत्मनः सशरीरत्वे च सिद्धे धर्माधर्मयोः तत्कृतत्वमितीतरेतराश्रयप्रसङ्गेन परिहरति—नेति ॥ ननु यद्येतच्छरीरकृतधर्माधर्मादिनिमित्त एतच्छरीरसंबन्धः तदा भवेदन्योऽन्याश्रयत्वम्, न तु तथा; किं तु पूर्वपूर्वकर्मकृत उत्तरोत्तरशरीरसंबन्ध इति, बीजाङ्कुरवदनादित्वात् नानवस्थापीत्याशङ्क्याह—अन्धपरम्परेति ॥ इदानीं बीजाङ्कुरयोर्निमित्तनैमित्तिकाभावदर्शनात्स पूर्वमप्येवमिति भवेद्विश्वासः ।

१. A अहमनित्यमिति.

### भाष्यम्

नाः क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः। संनिधानमात्रेण राजप्रभृतीनां दृष्टं कर्तृत्वमिति चेन्न, धनदानाद्युपार्जितभृत्यसंबन्धित्वात् तेषां कर्तृत्वोपपत्तेः। न त्वात्मनो धनदानादिवच्छरीरादिभिः स्वस्वामिभावसंबन्धनिमित्तं किंचिच्छक्यं कल्पयितुम्। मिथ्याभिमानस्तु प्रत्यक्षः संबन्धहेतुः। एतेन यजमानत्वमात्मनो व्याख्यातम्। अत्राहुः—देहादिव्यतिरिक्तस्यात्मनः आत्मीये देहादावभिमानो गौणो न मिथ्येति चेन्न, प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः। यस्य हि प्रसिद्धो वस्तुभेदः, यथा केसरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ्मुख्योऽन्यः प्रसिद्धः, ततश्चान्यः पुरुषः प्रायिकैः क्रौर्यशौर्यादिभिः सिंहगुणैः संपन्नः सिद्धः, तस्य तस्मिन् पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतः, नाप्रसिद्धवस्तुभेदस्य। तस्य त्वन्यत्रान्यशब्दप्रत्ययौ भ्रान्तिनिमित्तावेव भवतो न गौणौ; यथा मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, यथा वा शुक्तिकायामकस्मात् रजतमिति निश्चितौ शब्दप्रत्ययौ, तद्वत् देहादिसंघाते अहमिति निरुपचारेण शब्दप्रत्ययावात्मानात्माविवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुम्। आत्मानात्मविवेकिनामपि पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः। तस्माद्देहादिव्यतिरिक्तात्मास्तित्ववादिनां देहादावहंप्रत्ययो मिथ्यैव न गौणः। तस्मान्मिथ्याप्रत्ययनिमित्तत्वात्सशरीरत्वस्य, सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम्। तथा च ब्रह्मविद्विषया श्रुतिः "तद्यथा-

### प्रकटार्थविवरणम्

इह पुनः परमार्थशरीरसंबन्धस्य कर्मसंबन्धस्य चात्मनोऽदृष्टत्वात् प्रथमत एव कल्प्यमानत्वात् न तत्राप्यवस्थानमिति न तात्त्विकः शरीरसंबन्धः। स्वपक्षे[1] पुनः कर्मशरीरयोर्निमित्तनैमित्तिकभावेन वर्तमानयोरनाद्यज्ञानोपादानत्वे[2]नात्मसंबन्ध इति नानवस्था। इतश्च न तात्त्विक इत्याह—क्रियेति॥ पूर्वं निरस्तमपि मतं प्रसङ्गादुद्भाव्य दूषयति—"संनिधानमात्रेण" इत्यारभ्य "तथा च ब्रह्मविद्विषया" इत्यतः प्राक्तनेन। विदुषोऽपि शरीराद्याभासानुवृत्तौ प्रमाणमाह—तथा चेत्यादिना॥ अहिनिर्ल्वयनी सर्पत्वक्। प्राणोपलक्षितो

१. TM. सपक्षे.        २. T, T[1], P and A. यज्ञानयोरुपादान.

भाष्यम्

हिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव" इति "सचक्षुरचक्षुरिव सकर्णः अकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव" इति च। स्मृतिरपि च "स्थितप्रज्ञस्य का भाषा" इत्याद्या स्थितप्रज्ञस्य लक्षणान्याचक्षाणा विदुषः सर्वप्रवृत्त्यसंबन्धं दर्शयति । तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम्। यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभाव इत्यनवद्यम् ॥

यत्पुनरुक्तं श्रवणात्पराचीनयोर्मनननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणो न स्वरूपपर्यवसायित्वमिति । न, अवगत्यर्थत्वान्मनननिदिध्यासनयोः। यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येत, भवेत्तदा विधिशेषत्वम्; न तु तदस्ति, मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात्। तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः संभवतीत्यतः स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादिति सिद्धम्।

प्रकटार्थविवरणम्

जीवो जीवन्नपि[1] ब्रह्मैव। अपतितेऽपि देहे[2] तेज एव परमात्मैव भवति। अचक्षुरपि सचक्षुरिवेति विपरीतोऽन्वयः । सर्वाः प्रवृत्तीः शरीरगता एव मन्यते अविक्रियब्रह्मात्मतां मन्यमान इति प्रवृत्त्यसंबन्ध इत्यर्थः। उक्तनीत्या सिद्धवस्तुज्ञानस्यापि सप्रयोजनत्वात् वेदान्ता नियोगपराः शास्त्रत्वात् इत्यस्याप्रयोजकत्वं सिद्धम्॥

पुनः परोक्तमनुभाषते—यत्पुनरिति ॥ दूषयति—नेति ॥ श्रवणवन्मनननिदिध्यासनयोरप्यवगत्यर्थत्वात्, स्वातन्त्र्येणावगतिजननसमर्थमहावाक्यशेषभूतार्थवादत्वात, न मननाद्यवष्टम्भेन वेदान्तानां नियोगनिष्ठताकल्पना। कल्पिते महावाक्यशेषभूतार्थवादत्वे श्रवणादिवाक्यानां श्रवणादिविधानं प्रथमसूत्रसूत्रितं परित्यक्तं स्यादिति चेत् न; ब्रह्मसाक्षात्कारेण श्रवणादीनां साध्यसाधनभावस्यापूर्वत्वात्, क्रियारूपतया च विधिजन्यपुरुषेच्छाप्रयत्नसाध्यत्वात्, अवान्तरतात्पर्येण श्रवणादिविधानसंभवात् यथा दर्शपूर्णमासविधिशेषेण "न

१. TM. जीवनमपि. २. TM. इति. ३. TM. विदेहे.

४. A adds विधिशेषत्वम् । श्रवणविधिशेषत्वं भवेत् । नाम साधनव्याप्तिशेषो ना... तथा च.

### भाष्यम्

एवं च सति "अथातो ब्रह्मजिज्ञासा" इति तद्विषयः पृथक्शास्त्रारम्भ उपपद्यते । प्रतिपत्तिविधिपरत्वे हि "अथातो धर्मजिज्ञासा" इत्येवारब्धत्वान्न पृथक्शास्त्रमारभ्येत । आरभ्यमाणं चैवमारभ्येत—'अथातः परिशिष्टधर्मजिज्ञासा' इति, "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इतिवत् । ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः "अथातो ब्रह्मजिज्ञासा" इति । तस्मात् "अहं ब्रह्मास्मि"इत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि । न ह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति । अपि चाहुः—

### प्रकटार्थविवरणम्

मलवद्वाससा विसंवदेत् [संवदेत ।" "नास्या अन्नमद्यात्" इत्यनेन तदभिगमनप्रतिषेधो विधीयते । तदुक्तं "प्रागवरोधान्मलवद्वाससः" इति । यस्मात्प्रतिपत्तिनियोगवाद्युद्भावितः सकलोऽप्यवकरोऽपाकृतः तस्मादित्युपसंहारः । स्वातन्त्र्येणैव शास्त्रप्रमाणकं ब्रह्मेत्येतस्मिन्नेव मते पृथक्शास्त्रारम्भोऽप्युपपद्यत इत्याह—एवं च सतीति ॥ ननु मानसव्यापारमात्रसाध्यनियोगनिरूपणाय पुनरारम्भो भविष्यतीत्याशङ्क्याह—आरभ्यमाणं चेति ॥ यथा तृतीये श्रुत्यादिभिः शेषशेषिभावमभिधायानन्तरं किं क्रतुशेषभूतं किं वा पुरुषशेषभूतमिति वीक्षायां चतुर्थमारभमाणोऽभ्यधात् "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इतिवदभि[तद्वदभि]दध्यात् । न चाभ्यधादित्यर्थः । इदानीं स्वमते सूत्रसामञ्जस्यमाह—ब्रह्मात्मैक्येति ॥ ननु यदि स्वातन्त्र्येण ब्रह्मात्मैकत्वनिष्ठा वेदान्ताः तर्हि तदेव परमार्थवस्त्विति कथं द्वैतालम्बनस्य विधिकाण्डस्य प्रत्यक्षादेश्च प्रामाण्यमित्याशङ्क्याह—तस्मादिति ॥ प्रमातृव्यापारसंसृष्टो हि घटादिश्चितो विषयतामियर्ति । न तु स्वत एवासङ्गोयाश्रितो विषयसङ्गः । तस्माद्ब्रह्मात्मैक्यावगतेः प्रागेव प्रमाणादिव्यवहार इत्यर्थः । अयमर्थोऽन्येषामपि ब्रह्मविदां संमत इत्याह—अपि चाहुरिति ॥ सद्ब्रह्मात्माहमित्येवं बोधे जाते पुत्रदेहादेः

१. TM. व्यवकरो.
२. T and TM. रम्यमाणः.
३. A. अभ्यादधीत.
४. T, T[1], P and TM. त्मैकत्व.
५. T, T[1], TM and P आशङ्का.
६. T, T[1] and P सङ्ग.

भाष्यम्

"गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् ।
सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत् ॥
अन्वेष्टव्यात्मविज्ञानात्प्राक्प्रमातृत्वमात्मनः ।
अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः ॥
देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥" इति ॥

प्रकटार्थविवरणम्

सत्ताबाधनात् मायामात्रत्वावगमात् 'अयं पुत्रोऽहमेव' 'मनुष्योऽहम्' इति गौणमिथ्यारूपस्य प्रत्ययस्यासत्त्वे जाते कार्यं कथं भवेत्—निमित्ताभावाद्विधिविधेयादिव्यवहारो न कथञ्चिद्भवेदित्यर्थः ॥

ननु यद्यात्मा ब्रह्मैव कस्तर्हि प्रमाता? यद्ययमेव कथं तर्हि ब्रह्मतास्येत्याशङ्क्याह—अन्वेष्टव्येति ॥

ननु यद्यन्वयव्यतिरेकाभ्यां प्रमातृत्वमप्यज्ञानकृतम्; कथं तर्हि तदाश्रयाणां प्रामाण्यमित्याशङ्क्याह—देहात्मप्रत्यय इति ॥ प्रमातृत्वस्य सदातनत्वाभावेऽप्यात्मनिश्चयादर्वाग्देहात्मप्रत्ययवद्व्यावहारिकं प्रत्यक्षादेः प्रामाण्यम्, विषयस्य तत्त्वांशप्रतिषेधेऽप्यर्थक्रियासामर्थ्यानपहारात्; आगमस्य तु तत्त्वावेदनलक्षणं प्रामाण्यमत्यन्ताबाध्यार्थविषयत्वादिति भावः ॥

यदत्र केशवोऽभ्यगीष्ट—

"बाधितस्य प्रमाणत्वं वदता बौद्धवेदयोः ।
सम्यक् संपादितं साम्यं शास्त्रयोः किमतः परम् ॥"

इति तद्गुरभ्यगीष्ट । यतो वेदबौद्धयोर्मायामयत्वाविशेषेऽपि बाधिताबाधितविषयत्वेन पौरुषेयत्वापौरुषेयत्वेन च वैषम्यमित्युक्तम् । अन्यथा तस्यापि स्वरूपसत्त्वाविशेषे साम्यस्य किं व्यासेधकम् । यच्च "भिन्नाभिन्नं ब्रह्म जगतः कारणम्, तत्कार्यस्य च प्रपञ्चस्य न मिथ्यात्वम्" इत्यादि फल्गुवल्गितं तदारम्भणाधिकरणे पर्यहार्षीदाचार्य इति मयापि तत्रैव परिजेहीयिष्यत इत्युपरम्यते ॥

१. T, T[1], P and TM. वैषम्यमतिवक्तव्यम्.
२. A omits न.
३ A. जिहीर्ष्यते.

### भाष्यम्

एवं वेदान्तवाक्यानां ब्रह्मात्मावगतिप्रयोजनानां ब्रह्मात्मनि तात्पर्येण समन्वितानामन्तरेणापि कार्यानुप्रवेशं ब्रह्मणि पर्यवसानमुक्तम् । ब्रह्म च सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिनाशकारणमित्युक्तम् । सांख्यादयस्तु परिनिष्ठितं वस्तु प्रमाणान्तरगम्यमेवेति मन्यमानाः प्रधानादीनि कारणान्तराण्यनुमिमानाः तत्परतयैव वेदान्तवाक्यानि योजयन्ति । सर्वेष्वेव वेदान्तवाक्येषु सृष्टिविषयेष्वनुमानेनैव कार्येण कारणं लिलक्षयिषितम् । प्रधानपुरुषसंयोगा नित्यानुमेया इति सांख्या मन्यन्ते ।

### प्रकटार्थविवरणम्

पूर्वोत्तरग्रन्थयोः संबन्धाभिधित्सया वृत्तं सङ्कीर्तयति—एवं वेदान्तवाक्यानामित्यादिना ॥ प्रथमसूत्रेण ब्रह्मजिज्ञासां प्रतिज्ञाय द्वितीयेन च तल्लक्षणमुक्त्वा तृतीयेन[1] तत्र वेदान्तानां प्रामाण्यमुपचिक्षेप । चतुर्थे च जैमिनीयपादोपजीविनां मतापाकरणेन तदेव प्रामाण्यं प्रत्यतिष्ठिपत् । पुनश्च साङ्ख्यादिपक्षप्रतिक्षेपेण तेषां वाक्यानां ब्रह्मण्येव प्रामाण्यप्रतिष्ठापनाय परं सन्दर्भं[2] सूत्रयामासेत्यभिप्रेत्य साङ्ख्याद्यभिप्रायमाह—साङ्ख्यादयस्त्विति ॥ वृद्धव्यवहारे[3] सिद्धार्थव्युत्पत्तिमाश्रित्य जैमिनीयमतं प्रत्यक्षेऽपि । तत्र च प्रमाणान्तरगोचर पदार्थे व्युत्पत्तिसंभवात् प्रधानादीनामेव प्रमाणान्तरगोचरत्वात् तेष्वेव वेदान्तानां तात्पर्यं वृद्धव्यवहारानुसारेण कल्पनीयमिति भावः । किञ्च "तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ" इत्याद्याः श्रुतयः शुङ्गेनेति कार्येण[4] लिङ्गेन सतो मूलस्यान्वेषणं दर्शयन्त्यः प्रमाणान्तर[5]सिद्धमेव जगत्कारणं दर्शयन्तीत्याह—सर्वेष्विति ॥ ननु धूमस्याध्यक्षसिद्धेनैव धूमध्वजेन क्वचिदविनाभावमनुभूय प्रदेशान्तरे तदनुमोदयमासादयति, न तथा प्रधानादि क्वचित्प्रत्यक्षसिद्धम्, कथं तदनुमानस्य गोचर इत्याशङ्क्याह—प्रधानेति ॥ यथातीन्द्रियमपि विद्युदादिकारणं सामान्यतोदृष्टलिङ्गगम्यं[गम्यमेवमि]त्यर्थः । विमतमचेतनप्रकृतिकं तदन्वितत्वाद्वा संप्रतिपन्नवत्, तथान्तःकरणे चित्प्रतिबिम्बं बिम्ब-

१. A adds च.
२. A adds च.
३. A. वृद्धव्यवहारेण.
४. T omits कार्येण लिङ्गेन.
५. T, T¹, P and TM. प्रमाणान्तर.

### भाष्यम्

काणादास्त्वेतेभ्य एव वाक्येभ्य ईश्वरं निमित्तकारणमनुमिमते, अणूंश्च समवायिकारणम् । एवमन्येऽपि तार्किका वाक्याभासयुक्त्याभासावष्टम्भाः पूर्वपक्षवादिन इहोत्तिष्ठन्ते । तत्र पदवाक्यप्रमाणज्ञेनाचार्येण वेदान्तवाक्यानां ब्रह्मावगतिपरत्वदर्शनाय वाक्याभासयुक्त्याभासप्रतिपत्तयः पूर्वपक्षीकृत्य निराक्रियन्ते ॥

तत्र सांख्याः प्रधानं त्रिगुणमचेतनं जगतः कारणमिति मन्यमाना आहुः—यानि वेदान्तवाक्यानि सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो जगत्कारणत्वं

### प्रकटार्थविवरणम्

संनिधानाधीनं प्रतिबिम्बत्वात् संप्रतिपन्नप्रतिबिम्बवत्; तथा विमतं चेतनाधि[नानधि]ष्ठिताचेतनप्रकृतिकं कार्यत्वात् पटवदिति प्रयोगः । आदिशब्दसूचितं मतान्तरमाह—काणादास्त्वति ॥ "यतो वा इमानि भूतानि" इत्यादिवाक्येभ्यो यच्छब्दोपबन्धनेन सिद्धवज्जगत्कारणपरामर्शावगमात् कार्यं बुद्धिमत्कर्तृकमिति सामान्यतोदृष्टेन ईश्वरमनुमिमत इत्यर्थः । पटादिकार्यं स्वपरिमाणादल्पपरिमाणारब्धं दृष्ट्वा अन्यदपि कार्यं तथैवेति परमाणून् समवायिकारणत्वेन कल्पयन्तीत्यर्थः । "असद्वा इदमग्र आसीत्" इत्यादिवाक्याभासावष्टम्भाः प्रदीपादेर्निरन्वयविनाशदर्शनात् पृथिव्यादिकार्यस्यापि शून्यतापर्यन्तं नष्टस्यासत एव प्रादुर्भाव इत्यादियुक्त्याभासावष्टम्भाः सन्त इहाद्वैतवादे प्रतिपक्षिणो माध्यमिकादयः प्रत्यवतिष्ठन्त इत्याह—एवमन्येऽपीति ॥ एवं सबीजविप्रतिपत्तीरुक्त्वा तन्निरासायोत्तरसन्दर्भारम्भ इत्याह—तत्रेति ॥

यद्यपि जन्मादिसूत्रलक्षणनिर्णयायार्थात् प्रधानादिकारणत्वासंभवः सूत्रितः, तथापीह वेदान्तानां ब्रह्मण्येव प्रामाण्यप्रतितिष्ठापयिषया तेषां योजनाप्रकारभेदाविभेदो मुखतः सूत्रित इति साङ्ख्ययोजनाप्रकारं तावदाह—तत्र साङ्ख्या इत्यादिना ॥ नन्वचेतनस्य मृदादेः स्वविकारगोचरमपि सर्व-

१. A omits सन्नि.........बिम्ब.  ३. T, T[1], P and TM. भेदाविभे.
२. T[1], P, TM and A. कल्पेन.

## भाष्यम्

दर्शयन्तीत्यवोचः तानि प्रधानकारणपक्षेऽपि योजयितुं शक्यन्ते । सर्वशक्तित्वं तावत्प्रधानस्यापि स्वविकारविषयमुपपद्यते । एवं सर्वज्ञत्वमप्युपपद्यते । कथम्? यत्तु ज्ञानं मन्यसे स सत्त्वधर्मः "सत्त्वात् संजायते ज्ञानम्" इति स्मृतेः । तेन च सत्त्वधर्मेण ज्ञानेन कार्यकरणवन्तः पुरुषाः सर्वज्ञा योगिनः प्रसिद्धाः । सत्त्वस्य हि निरतिशयोत्कर्षे सर्वज्ञत्वं प्रसिद्धम् । न केवलस्याकार्यकरणस्य पुरुषस्योपलब्धिमात्रस्य सर्वज्ञत्वं किंचिज्ज्ञत्वं वा कल्पयितुं शक्यम् । त्रिगुणत्वात्तु प्रधानस्य सर्वज्ञानकारणभूतं सत्त्वं प्रधानावस्थायामपि विद्यत इति प्रधानस्याचेतनस्यैव सतः सर्वज्ञत्वमुपचर्यते वेदान्तवाक्येषु । अवश्यं च त्वयापि सर्वज्ञं ब्रह्माभ्युपगच्छता सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमुपगन्तव्यम् । न हि सर्वविषयं ज्ञानं कुर्वदेव ब्रह्म वर्तते । तथा हि—ज्ञानस्य नित्यत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यं ब्रह्मणो हीयेत; अथानित्यं तदिति, ज्ञानक्रियाया उपरमेतापि ब्रह्म, तदा सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमापतति । अपि च प्रागुत्पत्तेः सर्वकारकशून्यं ब्रह्मेष्यते त्वया । न च ज्ञानसाधनानां शरीरेन्द्रियादीनामभावे ज्ञानोत्पत्तिः कस्यचिदुपपन्ना । अपि च प्रधानस्यानेकात्मकस्य परिणामसंभवात् कारणत्वोपपत्तिर्मृदादिवत्, नासंहतस्यैकात्मकस्य ब्रह्मणः इत्येवं प्राप्ते इदं सूत्रमारभ्यते—

## प्रकटार्थविवरणम्

ज्ञत्वं न दृष्टचरम्, कथङ्कारं प्रधानस्य तदङ्गीक्रियत इत्याह—कथमिति ॥ सत्त्वपरिणामेन ज्ञानेन सर्वज्ञाः । न तु [ननु ब्रह्मापि स्यात् सर्वज्ञं] रजस्तमसी तिरस्कृत्योद्भूतसत्त्वधर्मस्याशङ्कयाह—न केवलस्येति ॥ ननु तथापि साम्यावस्थायां सत्त्वधर्मज्ञानासंभवात् कथं सर्वज्ञत्वमित्याशङ्कयाह—त्रिगुणत्वात्त्विति ॥ सर्वज्ञानपरिणामशक्तिमत्सत्त्वसद्भावात् साम्यावस्थायामपि सम्मार्गं एवाश्रयणीय इत्यर्थः । इतोऽपि सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वं वाच्यमित्याह—अपि चेति ॥ पराभिमतस्य कारणत्वमुपगम्य प्रधानपक्षेऽपि जगत्कारणवादिवाक्यं योजयितुं शक्यमित्युक्तम् । इदानीं ब्रह्मणः कारणत्वासंभवात् प्रधानवाद एव वाक्यानि सङ्गच्छन्त इत्याह—अपि च प्रधानस्येति ॥

१. A. सर्वज्ञात्. २. T. केवलमिति. ३. TM. साम्यव.

भाष्यम्

# ईक्षतेर्नाशब्दम् ॥ १-१-५ ॥

न सांख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं शक्यं वेदान्तेष्वाश्रयितुम् । अशब्दं हि तत् । कथमशब्दत्वम् ? ईक्षतेः । ईक्षितृत्वश्रवणात् कारणस्य । कथम् ? एवं हि श्रूयते—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्युपक्रम्य "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इति । तत्रेदंशब्दवाच्यं नामरूपव्याकृतं जगत् प्रागुत्पत्तेः सदात्मनावधार्य, तस्यैव प्रकृतस्य सच्छब्दवाच्यस्येक्षणपूर्वकं तेजःप्रभृतेः स्रष्टृत्वं दर्शयति । तथान्यत्र—"आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत् । स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत" इतीक्षापूर्विकामेव सृष्टिमाचष्ट । क्वचिच्च षोडशकलं पुरुषं प्रस्तुत्याह—"स ईक्षांचक्रे ।...स

प्रकटार्थविवरणम्

ईक्षतेर्नाशब्दम् ॥

सूत्रमवतार्य नञोऽर्थमाह—न¹ साङ्ख्येति ॥ हेतुमाह—अशब्दं² हीति ॥ जगत्कारणवादिवाक्येषु प्रधानशब्दाभावात् पदार्थस्यैव च पदार्थान्तरसंसृष्टतया वाक्यार्थत्वात् न प्रधानपरतया वाक्यानि योजयितुं शक्यन्त इत्यर्थः । प्रमाणान्तरवारणं³ च परस्तादवतरिष्यति⁴ । ननु "सदेव सोम्येदम्" इति सच्छब्द एव प्रधानाभिधायीत्याह—कथमशब्दत्वमिति ॥ सच्छब्दवाच्यस्य कारणस्य चेतनत्वावगमात् न सच्छब्दः प्रधानाभिधायीत्यभिप्रेत्याह—ईक्षतेरिति ॥ मिषत् निमेषोन्मेषधर्मकम् । लोकान् नु किलाहं सृजै इति पर्यालोचनं कृतवानित्यर्थः⁵ ।

"कलाः षोडशभूतानि प्राणोऽन्नमण[न्नं]⁶ नाम कर्म च ।
श्रद्धा लोकाः तपो मन्त्रा मनो वीर्यं शरीरकर्म[कम्] ॥"

जीवाभिन्नस्य परमात्मन इहेक्षणं विवक्षितम् । ननु "इक्श्तिपौ धातुनिर्देशे" इति कात्यायनस्मरणात् सूत्रकारस्यापि धातुनिर्देशोऽभिप्रेतः । तत्कथं

१. A omits न.
२. T. अशाब्दं.
३. A. प्रमाणान्तरं.
४. A. परस्तात् भविष्यति.
५. T, T¹, P and TM add व्यक्तं.
६. A. मणनाम.

भाष्यम्

प्राणमसृजत" इति । ईक्षतेः इति च धात्वर्थनिर्देशोऽभिप्रेतः, यजतेरितिवत्; न धातुनिर्देशः । तेन

"यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।
तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥"

इत्येवमादीन्यपि सर्वज्ञेश्वरकारणपराणि वाक्यान्युदाहर्तव्यानि ॥

यच्चूक्तं सत्त्वधर्मेण ज्ञानेन सर्वज्ञं प्रधानं भविष्यतीति, तन्नोपपद्यते । न हि प्रधानावस्थायां गुणसाम्यात् सत्त्वधर्मो ज्ञानं संभवति । ननूक्तं सर्वज्ञानशक्तिमत्त्वेन सर्वज्ञं भविष्यतीति; तदपि नोपपद्यते । यदि गुणसाम्ये सति सत्त्वव्यपाश्रयां ज्ञानशक्तिमाश्रित्य सर्वज्ञं प्रधान-

प्रकटार्थविवरणम्

धात्वर्थोपादानेन व्याख्यायत इत्याशङ्क्याह—ईक्षतेरिति चेति ॥ श्तिप्प्रत्ययान्तप्रयोगेण सूत्रकारस्य धात्वर्थनिर्देशो लक्षणयाभिप्रेतः इतरथा अप्रस्तुताभिधानप्रसङ्गात् । तत्र जैमिनीयमुदाहरणमाह— यजतेरितिवदिति ॥ "इतिकर्तव्यताविधेः यजतेः पूर्ववत्त्वम्" इत्यत्र जैमिनेर्याग एव तिप्प्रत्ययान्तेन विवक्षितः, पाणिनेः "भवतेरः" इतिवत्; न धातुनिर्देशोऽभिप्रेत इत्यर्थः । येनेक्षतिधात्वर्थालोचनं सूत्रितम्, न शब्दमात्रं तेन वाक्यान्तराण्यप्युदाहरणीयानीति योजना । सामान्येन सर्वं जानातीति सर्वज्ञः । विशेषतः सर्वं वेत्तीति सर्ववित् । तप आलोचनं स्वरूपज्ञानमयम्, नान्तःकरणाद्यधीनमित्यर्थः । ब्रह्म हिरण्यगर्भः ॥

पूर्वपक्षबीजं विभिनत्ति—यत्तूक्तमित्यादिना ॥ पूर्वं केवलसत्त्ववृत्तेर्ज्ञानत्वमभ्युपगम्य न सत्त्वधर्मेण ज्ञानेन सर्वज्ञमित्युक्तम् । इदानीं नाप्रवृत्ता

१. A. धात्वर्थे लक्षया.

२. T, T¹ and P omit इतरथा...... इत्यर्थः.

३. T, T¹, P add इत्यर्थः.

४. T and T¹ न स्वान्तः,

५. A. विभिनक्ति,

## भाष्यम्

मुख्येत, कामं रजस्तमोऽप्याश्रयामपि ज्ञानप्रतिबन्धकशक्तिमाश्रित्य किंचिज्ज्ञमुच्येत। अपि च नासाक्षिका सत्त्ववृत्तिर्जानातिना अभिधीयते। न चाचेतनस्य प्रधानस्य साक्षित्वमस्ति। तस्मादनुपपन्नं प्रधानस्य सर्वज्ञत्वम्। योगिनां तु चेतनत्वात् सत्त्वोत्कर्षनिमित्तं सर्वज्ञत्वमुपपन्नमित्यनुदाहरणम्। अथ पुनः साक्षिनिमित्तमीक्षितृत्वं प्रधानस्य कल्प्येत, यथाग्निनिमित्तमयःपिण्डादेर्दग्धृत्वम्; तथा सति यन्निमित्तमीक्षितृत्वं प्रधानस्य, तदेव सर्वज्ञं मुख्यं ब्रह्म जगतः कारणमिति युक्तम्। यत्पुनरुक्तं ब्रह्मणोऽपि न मुख्यं सर्वज्ञत्वमुपपद्यते, नित्यज्ञानक्रियत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यासंभवादिति; अत्रोच्यते—इदं तावद्भवान्प्रष्टव्यः, कथं नित्यज्ञानक्रियत्वे सर्वज्ञत्वहानिरिति। यस्य हि सर्वविषयावभासनक्षमं ज्ञानं नित्यमस्ति,

## प्रकटार्थविवरणम्

सत्त्ववृत्तिर्ज्ञानं किन्तु अन्तःकरणवृत्त्यभिव्यक्तः चित्प्रकाशः, तथाविधज्ञानस्य [विधं ज्ञानमस्य] नास्तीत्याह—अपि चेति ॥ पूर्वोक्तं दृष्टान्तं विघटयति—योगिनां तु इति ॥ अचेतनस्यापि साक्षिचैतन्यव्याप्ततया चिच्छायापत्त्येक्षणं भवतु इत्याह—अथ पुनरिति ॥ सुदूरमपि गत्वा सर्वसाक्षी चिद्धातुः स्वीकृतश्चेत् किं प्रधानकल्पनयेत्याह—तथा च सतीति ॥ पराभिप्रायमुद्भावयति—यत्पुनरिति ॥ प्रकृत्यर्थस्य नित्यचित्प्रकाशस्य निरपेक्षत्वात् प्रत्ययार्थस्य च कर्तृत्वस्य सापेक्षत्वात् सापेक्षत्वानपेक्षत्वयोर्विरोधे सापेक्षप्रत्ययार्थं विहाय निरपेक्षप्रकृत्यर्थोपादानेन नित्यचित्प्रकाशं ब्रह्म सर्वज्ञादिपदैः लक्ष्यत इति न प्रधाने समन्वय इत्यभिप्रेत्याह—अत्रोच्यत इति ॥ किञ्च किं नित्यज्ञानेन सर्वज्ञत्वं न संभवति आगन्तुकेनैव संभवतीत्यभिप्रायः, ततश्च कर्तृत्वव्यपदेशो न संभवति [तीति,] इत्याह—इदं तावदिति ॥ आद्यं प्रत्याह—यस्य हीति ॥ द्वितीयं शङ्कते—ज्ञाननित्यत्व इति ॥ व्यपदेशमात्रस्य नानुप-

१. T, T[1], P and TM वृत्तिश्च.

२. A. तयापिधान.

३. TM. भवति.

४. A. उद्घाटयति.

५. T and T[1] omit न.

भाष्यम्

सोऽसर्वज्ञ इति विप्रतिषिद्धम्। अनित्यत्वे हि ज्ञानस्य, कदाचिज्जानाति कदाचिन्न जानातीत्यसर्वज्ञत्वमपि स्यात्। नासौ ज्ञाननित्यत्वे दोषोऽस्ति। ज्ञाननित्यत्वे ज्ञानविषयः स्वातन्त्र्यव्यपदेशो नोपपद्यत इति चेन्न, सततौष्ण्यप्रकाशेऽपि सवितरि दहति प्रकाशयतीति स्वातन्त्र्यव्यपदेशदर्शनात्। ननु सवितुर्दाह्यप्रकाश्यसंयोगे सति दहति प्रकाशयतीति व्यपदेशः स्यात्, न ब्रह्मणः प्रागुत्पत्तेर्ज्ञानकर्मसंयोगोऽस्तीति विषमो दृष्टान्तः। न, असत्यपि कर्मणि सविता प्रकाशत इति कर्तृत्वव्यपदेशदर्शनात्। एवमसत्यपि ज्ञानकर्मणि ब्रह्मणः "तदैक्षत" इति कर्तृत्वव्यपदेशोपपत्तेर्न वैषम्यम्। कर्मापेक्षायां तु ब्रह्मणीक्षितृत्वश्रुतयः सुतरामुपपन्नाः। किं पुनस्तत्कर्म, यत्प्रागुत्पत्तेरीश्वरज्ञानस्य विषयो भवतीति। तत्त्वान्य-

प्रकटार्थविवरणम्

पत्तिः सततौष्ण्यप्रकाशेऽपि सवितरि कर्तृत्वव्यपदेशदर्शनादित्याह—नेति॥ तत्रापि विषयोपरक्तरूपेण प्रकाशस्य जन्यत्वात् घटते कर्तृत्वव्यपदेश इत्याह—नन्विति॥ तर्हीहापि तथास्त्विति नेत्याह—न ब्रह्मण[1] इति॥ तत्र किं ज्ञानस्य कर्मसंबन्धविवक्षा नास्ति चित्प्रकाशस्याक्रियात्वात्, किं वा कर्मसंयोग एव नास्ति? प्रथमं प्रत्याह—न, असत्यपीति॥ प्रकाशस्याक्रियात्वात् कर्मसंबन्धेऽविवक्षितेऽपि लोके सवितुः कर्तृव्यपदेशदर्शनात् सविता प्रकाशयतीति तथेहापि स्यादित्यर्थः। द्वितीयं प्रत्याह—कर्मापेक्षायां त्विति॥ यथा कुम्भकारस्य व्याचिकीर्षिताकारः स्वोपाध्यन्तःकरणपरिणाम ईक्षणम्; तथा ब्रह्मणोऽपि मायोपाधेरनादिप्रवृत्तसंस्काराया मायायाः प्रलयकारणकर्मक्षयोत्थापितसंस्कारादिनिमित्तवशात् सर्गोन्मुखः परिणाम ईक्षणमित्यर्थः। अस्मिन्पक्षे कर्तृत्वस्य प्रत्ययार्थस्यापि बाधाभावात् सुतरामित्युक्तम्। आविकर्ता स्वोपाधिपरिणामेक्षण ईक्षितृत्वात्कुलालवत् इति। अतोऽन्यस्य मुख्यस्यासंभवात् इदमेव मुख्यमीक्षणम्। अद्वैतभङ्गं मत्वाह—किं पुनरिति॥ सकार्याया मायाया अनिर्वचनीयत्वात् नाद्वैतभङ्ग इत्याह[2]—तत्त्वेति॥ "किञ्च भक्तिविशेषादावर्जित ईश्वरः

1. T and T[1] ब्राह्मणः.          2. T and T[1] omit इत्याह.

### भाष्यम्

स्वाभ्यामनिर्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते इति ब्रूमः। यत्प्रसादाद्धि योगिनामप्यतीतानागतविषयं प्रत्यक्षं ज्ञानमिच्छन्ति योगशास्त्रविदः, किमु वक्तव्यं तस्य नित्यसिद्धस्येश्वरस्य सृष्टिस्थितिसंहृतिविषयं नित्यज्ञानं भवतीति। यदप्युक्तं प्रागुत्पत्तेर्ब्रह्मणः शरीरादिसंबन्धमन्तरेणेक्षितृत्वमनुपपन्नमिति, न तच्चोद्यमवतरति; सवितृप्रकाशवद्ब्रह्मणो ज्ञानस्वरूपनित्यत्वे ज्ञानसाधनापेक्षानुपपत्तेः। अपि चाविद्यादिमतः संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यात्, न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य। मन्त्रौ चेमावीश्वरस्य शरीराद्यनपेक्षतामनावरणज्ञानतां च दर्शयतः—

"न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च"॥ इति।
"अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम्"॥ इति च।

### प्रकटार्थविवरणम्

समनुगृह्णाति ज्ञानवैराग्यादिना" इति योगशास्त्रभाष्यकृद्वचनात् यस्य भगवतः प्रसादाद्योगिनामपि सर्वार्थदर्शित्वमिष्यते, किमु वक्तव्यं तस्य सर्वज्ञत्वमित्याह—यत्प्रसादादिति॥ उक्तानुवादेन दूषयति—यदप्युक्तमित्यादिना॥ नित्यत्वात् न स्वरूपोत्पत्त्यर्था साधनापेक्षा; नाप्यभिव्यक्त्यर्था प्रतिबन्धाभावादित्याह—अपि चेति॥ यथोक्तार्थे प्रमाणमाह—मन्त्रौ चेमाविति॥ विकारापेक्षया परा। शक्तिर्माया। विविधा सर्वाघटमानघटनापटीयसी। ज्ञानस्य चैतन्यस्य बलं चिदाभासः तस्य क्रिया नाम तज्जनकता कारणता सापि नैसर्गिकी,

१ T and T[1] तदनु.
२. T add T[1] तन्नौ.
३. T and T[1] सनुग्राता.

भाष्यम्

ननु नास्ति तावज्ज्ञानप्रतिबन्धकारणवानीश्वरादन्यः संसारी, "नान्योऽतोऽस्ति विज्ञाता" इति श्रुतेः; तत्र किमिदमुच्यते संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिर्नेश्वरस्येति। अत्रोच्यते—सत्यं नेश्वरादन्यः संसारी; तथापि देहादिसंघातोपाधिसंबन्ध इष्यत एव, घटकरकगिरिगुहाद्युपाधिसंबन्ध इव व्योम्नः; तत्कृतश्च शब्दप्रत्ययव्यवहारो लोकस्य दृष्टः घटच्छिद्रं करकच्छिद्रमित्यादिराकाशाव्यतिरेकेऽपि; तत्कृता चाकाशे घटाकाशादिभेदमिथ्याबुद्धिर्दृष्टा; तथेहापि देहादिसंघातोपाधिसंबन्धाविवेककृतेश्वरसंसारिभेदमिथ्याबुद्धिः। दृश्यते चात्मन एव सतो देहादिसंघातेऽनात्मन्यात्मत्वाभिनिवेशो मिथ्याबुद्धिमात्रेण पूर्वपूर्वेण। सति चैवं संसारित्वे देहाद्यपेक्षमीक्षितृत्वमुपपन्नं संसारिणः। यदप्युक्तं प्रधानस्यानेकात्मकत्वान्मृदादिवत्कारणत्वो-

प्रकटार्थविवरणम्

मायापरिणामेषु हि प्रतिबिम्बिता चित् तत्र प्रकाशाभासोदयहेतुर्भवति सूर्य इव जले प्रतिबिम्बितः, सैव ज्ञातृतेत्यर्थः। प्रासङ्गिकं चोद्यमुद्भावयति—ननु नास्तीति॥ य एव चिद्धातुर्मायाप्रतिबिम्बितत्वेनेश्वरः स एवाविद्याप्रतिबिम्बिततया संसारीति नास्त्येव स्वरूपभेदः। तथापि विशिष्टभेदोऽस्तीत्याह—सत्यमित्यादिना॥ स्वरूपाभेदेऽपि विशिष्टभेदकृतो व्यवहारासङ्करश्च दृष्ट इत्याह—तत्कृतश्चेति॥ देहादिसङ्घात एवोपाधिः; तत्संबन्धे हेतुरविवेकोऽनादिरविद्या तत्कृता। ननु यदि जीवस्य ब्रह्मभावः स्वाभाविकः तर्हि सदा किं न प्रकाशेत। प्रकाशमाने वस्तुनि स्वरूपानवभासस्याविद्ययाप्यदर्शनादित्याशङ्क्याह—दृश्यते चेति॥ देहादिव्यतिरिक्तस्यैव सतो जीवस्य स्वभावभूतोऽपि व्यतिरेको नावभासते। विपरीतस्तु मिथ्याभिमानो दृश्यतेऽनिर्वाच्याविद्याप्रभावात्; तथा तस्यैव ब्रह्मता न व्यज्यते, विपरीतं तु प्रमातृत्वादि व्यज्यत इत्यर्थः। प्रासङ्गिकं परिहृत्य पूर्ववाद्युक्तं पुनरुद्भावयति यदप्युक्तमिति॥

१. TM. तृत्वेत्यर्थः.　　　४. TM. वस्तु.

२. T and T¹ स्वप्न.　　　५. A. नाभिव्य.

३. A omits एव.

भाष्यम्

पपत्तिः नासंहतस्य ब्रह्मण इति, तत् प्रधानस्याशब्दत्वेनैव प्रत्युक्तम् । यथा तु तर्केणापि ब्रह्मण एव कारणत्वं निर्वोढुं शक्यते न प्रधानादीनां तथा प्रपञ्चयिष्यति "न विलक्षणत्वादस्य" इत्येवमादिना ॥

अत्राह—यदुक्तं नाचेतनं प्रधानं जगत्कारणमीक्षितृत्वश्रवणादिति तदन्यथाप्युपपद्यते, अचेतनेऽपि चेतनवदुपचारदर्शनात् । यथा प्रत्यासन्नपतनतां नद्याः कूलस्यालक्ष्य 'कूलं पिपतिषति' इत्यचेतनेऽपि कूले चेतनवदुपचारो दृष्टः, तद्वदचेतनेऽपि प्रधाने प्रत्यासन्नसर्गे चेतनवदुपचारो भविष्यति "तदैक्षत" इति । यथा लोके कश्चिच्चेतनः स्नात्वा भुक्त्वा चापराह्णे ग्रामं रथेन गमिष्यामि इतीक्षित्वा अनन्तरं तथैव नियमेन प्रवर्तते, तथा प्रधानमपि महदाद्याकारेण नियमेन प्रवर्तते ; तस्माच्चेतनवदुपचर्यते । कस्मात्पुनः कारणात् विहाय मुख्यमीक्षितृत्वम् औपचारिकं कल्प्यते ? "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" इति चाचेतनयोरप्यप्तेजसोश्चेतनवदुपचारदर्शनात् ; तस्मात् सत्कर्तृकमपीक्षणमौपचारिकमिति गम्यते, उपचारप्राये वचनात् ; एवं प्राप्त इदं सूत्रमारभ्यते—

प्रकटार्थविवरणम्

सति[1] प्रधाने प्रामाणिके कारणत्वसंभवचिन्तावतारो न च तदस्तीत्याह—तत् प्रधानस्येति ॥ ननु ब्रह्मणोऽपि कारणत्वं ततो न घटते, अचेतनस्य चेतनप्रकृतिकत्वादर्शनादित्याशङ्क्याह—यथा त्विति ॥

उत्तरसूत्रनिरास्यां शङ्कामाह अत्राहेत्यादिना । ईक्षणे गौणे किं गुणसाम्यमित्याशङ्क्याह—यथा लोक इति ॥ प्रतिनियतप्रवृत्तिशालित्वं चेतनसाम्यमित्यर्थः । मुख्यार्थपरिग्रहे प्रमाणान्तरविरोधे मुख्यार्थगुणयोगादर्थान्तरे वृत्तिर्गौणी । किमिह मुख्यार्थबाधकमित्याह—कस्मात्पुनरिति ॥ उपचारप्रचुरे प्रकरणे समाम्नानं बाधकमित्याह—तत्तेज[2] इति ॥

१. TM omits सति.  २. A. अत्रेत्या.

भाष्यम्

## गौणश्चेन्नात्मशब्दात् ॥ १-१-६ ॥

यदुक्तं प्रधानमचेतनं सच्छब्दवाच्यं तस्मिन्नौपचारिक ईक्षतिः, अप्तेजसोरिवेति, तदसत्। कस्मात्? आत्मशब्दात्। "सदेव सोम्येदमग्र आसीत्" इत्युपक्रम्य "तदैक्षत तत्तेजोऽसृजत" इति च तेजोऽबन्नानां सृष्टिमुक्त्वा तदेव प्रकृतं सदीक्षितृ तानि च तेजोऽबन्नानि देवताशब्देन परामृश्याह—"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति। तत्र यदि प्रधानमचेतनं गुणवृत्त्येक्षितृ कल्प्येत, तदेव प्रकृतत्वात् सेयं देवता इति परामृश्येत; न तदा देवता जीवमात्मशब्देनाभिदध्यात्। जीवो हि नाम चेतनः शरीराध्यक्षः प्राणानां धारयिता, तत्प्रसिद्धेः निर्वचनाच्च। स कथमचेतनस्य प्रधानस्यात्मा भवेत्। आत्मा हि नाम स्वरूपम्। नाचेतनस्य प्रधानस्य चेतनो जीवः स्वरूपं भवितुमर्हति। अथ तु चेतनं ब्रह्म मुख्यमीक्षितृ परिगृह्यते, तस्य जीवविषय आत्मशब्दप्रयोग उपपद्यते। तथा "स य एषोऽणि-

प्रकटार्थविवरणम्

### गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

प्रकृतेनेक्षित्रा चेतने जीवे स्वरूपाभिधाय्यात्मशब्दप्रयोगात्, चेतनाचेतनयोश्च विरोधादेकत्वासंभवात् न प्रकृते सच्छब्दार्थे गौण ईक्षतिप्रयोग इति सूत्रार्थमाह—यदुक्तमित्यादिना ॥ निर्वचनाच्चेति ॥ "जीव प्राणधारणे" इति धात्वर्थानुसरणाच्चेत्यर्थः। ननु संसार्यसंसारिणोरपि परस्परविरोधात् कथं ब्रह्मणोऽपि जीवविषये आत्मशब्द इत्याशङ्क्याह—अथ त्विति ॥ मलीमसेऽपि दर्पणे मदीयं मुखमिति प्रत्यभिज्ञावदित्यर्थः। चेतनस्य श्वेतकेतोरात्मत्वेनोपदेशादपि न प्रकृते गौण ईक्षतिरिति प्रकारान्तरमाह—तथेत्यादिना ॥ यदुक्तम् "उपचारप्राये वचनात्" इति तत्रपा-

१. T, T[1] and P गौण.
२. TM. शब्दा.

१. A. मित्याह.
२. T. युक्तमित्यादिना.

भाष्यम्

मैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्यत्र "स आत्मा" इति प्रकृतं सदणिमानमात्मानमात्मशब्देनोपदिश्य "तत्त्वमसि श्वेतकेतो" इति चेतनस्य श्वेतकेतोरात्मत्वेनोपदिशति। अप्तेजसोस्तु विषयत्वादचेतनत्वम्, नामरूपव्याकरणादौ च प्रयोज्यत्वेनैव निर्देशात्, न चात्मशब्दवत्किंचिन्मुख्यत्वे कारणमस्तीति युक्तं कूलवद्गौणत्वमीक्षितृत्वस्य। तयोरपि सदधिष्ठितत्वापेक्षमेवेक्षितृत्वम्। सतस्त्वात्मशब्दान्न गौणमीक्षितृत्वमित्युक्तम्॥

अथोच्येत—अचेतनेऽपि प्रधाने भवत्यात्मशब्दः, आत्मनः सर्वार्थकारित्वात्, यथा राज्ञः सर्वार्थकारिणि भृत्ये भवत्यात्मशब्दः, 'ममात्मा भद्रसेनः' इति। प्रधानं हि पुरुषस्यात्मनो भोगापवर्गौ कुर्वदुपकरोति, राज्ञ इव भृत्यः संधिविग्रहादिषु वर्तमानः। अथवा एक एवात्मशब्दश्चेतनाचेतनविषयो भविष्यति, भूतात्मा, इन्द्रियात्मेति च प्रयोगदर्शनात्; यथैक एव ज्योतिःशब्दः क्रतुज्वलनविषयः। तत्र कुत एतदात्मशब्दादीक्षतेरगौणत्वमित्यत उत्तरं पठति—

प्रकटार्थविवरणम्

करोति—अप्तेजसोस्त्विति॥ अचेतनत्वम्, चेतनव्यापारविषयत्वेनैव च निर्देशो मुख्यत्वे बाधकोऽस्ति; साधकं च किञ्चिन्नास्तीत्यप्तेजसोरीक्षितृत्वस्य युक्तं गौणत्वम्; न तु तत् सन्निधिमात्रेण, वह्नेरपि माणवकसन्निधानात्[१] तीव्रत्वादेगौणत्वप्रसङ्गादिति भावः। किञ्चाप्तेजसोः सदधिष्ठितत्वात्तद्गतमेवेक्षणं कार्यगतं व्यपदिश्यते लक्षणयेत्याह—तयोरपीति॥ कुतस्तर्हि सतो मुख्यमीक्षितृत्वं सिद्धमित्याशङ्क्याह सतस्त्विति॥

आत्मशब्दप्रयोगोऽपि गौणो भविष्यतीत्याह—अथोच्येतेत्यादिना॥ ननु प्रधानस्य सर्वार्थकारित्वमसिद्धम्, पुरुषस्यौदासीन्यादित्यत आह—प्रधानं हीति॥ साधारणो वात्मशब्दश्चेतनाचेतनयोरित्याह—अथवेति॥

१. A. मानवस.

भाष्यम्

## तन्निष्ठस्य मोक्षोपदेशात् ॥ १-१-७ ॥

न प्रधानमचेतनमात्मशब्दालम्बनं भवितुमर्हति; "स आत्मा" इति प्रकृतं सदणिमानमादाय "तत्त्वमसि श्वेतकेतो" इति चेतनस्य श्वेतकेतोर्मोक्षयितव्यस्य तन्निष्ठामुपदिश्य "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति मोक्षोपदेशात्। यदि ह्यचेतनं प्रधानं सच्छब्दवाच्यम् 'तदसि' इति ग्राहयेत्, मुमुक्षुं चेतनं सन्तमचेतनोऽसीति, तदा विपरीतवादि शास्त्रं पुरुषस्यानर्थायेत्यप्रमाणं स्यात्। न तु निर्दोषमिदं शास्त्रमप्रमाणं कल्पयितुं युक्तम्। यदि चाज्ञस्य सतो मुमुक्षोरचेतनमनात्मानमात्मेत्युपदिशेत् प्रमाणभूतं शास्त्रम्, स श्रद्दधानतया अन्धगोलाङ्गूलन्यायेन तदात्मदृष्टिं न परित्यजेत्, तद्व्यतिरिक्तं चात्मानं न प्रतिपद्येत; तथा सति पुरुषार्थाद्विहन्येत, अनर्थं वा ऋच्छेत्। तस्माद्यथा स्वर्गाद्यर्थिनोऽग्निहोत्रादि साधनं यथाभूतमुपदिशति, तथा मुमुक्षोरपि "स आत्मा तत्त्वमसि श्वेतकेतो" इति यथाभूतमेवात्मानमुपदिशतीति युक्तम्। एवं च सति

प्रकटार्थविवरणम्

### तन्निष्ठस्य मोक्षोपदेशात् ॥

प्रकृतेसद्वस्तुनिष्ठस्य तत्साक्षात्कारवतः श्रुत्या मोक्षोपदेशात् अनात्मज्ञस्य[1] च मोक्षानभ्युपगमात् न तत्रात्मशब्दो गौण इति प्रकारं पूर्वसूत्रादनुवर्त्य व्याचष्टे—न प्रधानमित्यादिना ॥ किञ्च [किं] "तत्त्वमसि" इति साक्षात्सदात्मत्वोपदेशः किं वा सम्पन्मात्रम्? प्रथमं प्रत्याह—यदि ह्यचेतनमिति ॥ किञ्चास्मिन्पक्षे न पुरुषार्थोऽपीत्याह—यदि चेति ॥ अतः सदात्मत्वोपदेशमङ्गीकुर्वता सतश्चेतनत्वमेव वक्तव्यमित्याह—तस्मादिति ॥ चोरत्वेनाभिशस्तस्य कस्यचित् सत्यवादिनः तप्तपरशुग्रहणे बन्धनविमोक्षो भवतीत्यनेन दृष्टान्तेन सत्याद्वैतात्माभिमानवत एव मोक्ष उपदिश्यमान उपपन्नो भवति मुख्यात्मोपदेशपक्ष एवेत्याह—एवं च सतीति ॥ द्वितीयं निरस्यति—

१. T.M. प्रकृतिवत्.

भाष्यम्

तप्तपरशुग्रहणमोक्षदृष्टान्तेन सत्याभिसंधस्य मोक्षोपदेश उपपद्यते। अन्यथा ह्यमुख्ये सदात्मतत्त्वोपदेशे, "अहमुक्थमस्मीति विद्यात्" इतिवत् संपन्मात्रमिदमनित्यफलं स्यात्, तत्र मोक्षोपदेशो नोपपद्येत। तस्मान्न सदणिमन्यात्मशब्दस्य गौणत्वम्। भृत्ये तु स्वामिभृत्यभेदस्य प्रत्यक्षत्वादुपपन्नो गौण आत्मशब्दः 'ममात्मा भद्रसेनः' इति। अपि च क्वचिद्गौणः शब्दो दृष्ट इति नैतावता शब्दप्रमाणकेऽर्थे गौणी कल्पना न्याय्या, सर्वत्रानाश्वासप्रसङ्गात्। यत्तूक्तं चेतनाचेतनयोः साधारण आत्मशब्दः, क्रतुज्वलनयोरिव ज्योतिःशब्द इति, तन्न; अनेकार्थत्वस्यान्याय्यत्वात्। तस्माच्चेतनविषय एव मुख्य आत्मशब्दश्चेतनत्वोपचाराद्भूतादिषु प्रयुज्यते—भूतात्मा इन्द्रियात्मेति च। साधारणत्वेऽप्यात्मशब्दस्य न प्रकरणमुपपदं वा किंचिन्निश्चायकमन्तरेणान्यतरवृत्तिता निर्धारयितुं शक्यते। न चात्राचेतनस्य निश्चायकं किंचित्कारणमस्ति। प्रकृतं तु सदीक्षितृ संनिहितश्च चेतनः श्वेतकेतुः। न हि चेतनस्य श्वेतकेतोरचेतन आत्मा संभवतीत्यवोचाम। तस्माच्चेतन-

प्रकटार्थविवरणम्

अन्यथा हीति॥ उक्थं कर्माङ्गभूतं शस्त्रम्। यस्मात् सतोऽनात्मत्वे न मोक्षसिद्धिः तस्मादित्युपसंहारः। दृष्टान्ते गौणत्वमङ्गीकरोति—भृत्ये त्विति॥ किञ्च प्रमाणान्तरगोचरे भवेत् प्रमाणान्तरानुसारेण गौणत्वम्, न शब्दैकसमधिगम्य इत्याह—अपि चेति॥ इदानीं साधारणपक्षदूषणायाह यत्तूक्तमित्यादिना॥ चेतने रूढस्यात्मशब्दस्यान्यत्र गौण्यापि प्रयोगोपपत्तौ न वाचकशक्तिकल्पनावकाशः, गौरवात्। "अनन्यलभ्यः शब्दार्थः" इति हि वृद्धाः। किञ्च साधारण्येऽपि प्रधानपक्षपातो निष्प्रमाणक इत्याह—साधारणत्वेऽपीति॥ स्वपक्षे पुनः प्रकरणमुपपदं चास्तीत्याह—प्रकृतं त्विति॥ ननु श्वेतकेतुसन्निधानं कथं निश्चायकं चेतनत्वस्येत्यत आह—न हीति॥ "एतानि वाव तानि ज्योतींषि। य एतस्य स्तोमाः" इत्यर्थवादसिद्धेन ज्वलनसादृश्येन ज्योतिष्ट्वलक्षणेन गौण्या वृत्त्या क्रतौ प्रवृत्तो ज्योति-

१. TM. रूढात्म.
२. A. पक्षोनिष्प्र.
३. A. साधारणे त्विति.

भाष्यम्

विषय इहात्मशब्द इति निश्चीयते । ज्योतिःशब्दोऽपि लौकिकेन प्रयोगेण ज्वलन एव रूढः, अर्थवादकल्पितेन तु ज्वलनसादृश्येन क्रतौ प्रवृत्त इत्यदृष्टान्तः । अथवा पूर्वसूत्र एवात्मशब्दं निरस्तसमस्तगौणत्वसाधारणत्वाशङ्कतया व्याख्याय, ततः स्वतन्त्र एव प्रधानकारणनिराकरणहेतुर्व्याख्येयः "तन्निष्ठस्य मोक्षोपदेशात्" इति । तस्मान्नाचेतनं प्रधानं सच्छब्दवाच्यम् ॥

कुतश्च न प्रधानं सच्छब्दवाच्यम्?

## हेयत्वावचनाच्च ॥ १-१-८ ॥

यद्यनात्मैव प्रधानं सच्छब्दवाच्यम् "स आत्मा तत्त्वमसि"

प्रकटार्थविवरणम्

शब्दः; तमःपरिपन्थिनि तु रूढ इति न[1] साधारण्ये दृष्टान्त इत्याह—ज्योतिश्शब्दोऽपीति ॥ ज्योतींषि स्तोमा यस्येति ज्योतिष्टोमः । त्रिवृत्पञ्चदशः त्रिवृत्सप्तदशः त्रिवृदेकविंशः [त्रिवृत् पञ्चदशः सप्तदशः एकविंशः] इत्येते स्तोमा ज्योतिश्शब्दवाच्या अर्थवादत [वादात् । अत] एव तत्र प्रकृते ज्योतिष्टोमे ज्योतिश्शब्दः प्रयुज्यते "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यत्रेत्यर्थः । पूर्वं शङ्कोत्तरत्वेन सूत्रं व्याख्याय इदानीं इतश्च न प्रधानं सच्छब्दवाच्यमिति वा संबन्धो वक्तव्य इत्याह—अथवेति ॥ निरस्ता गौणसाधारणत्वाशङ्का यस्य स तथोक्तः, तस्य भावः तत्ता तया[2] । नात्मशब्दोऽयं गौणः, गौणमुख्ययोर्मुख्ये संप्रत्ययात्, बाधका दर्शनाच्च[3] । नापि[4] साधारणः, अनेकशक्ति[5]कल्पनाप्रसङ्गात् इत्येवं व्याख्यायेत्यर्थः ॥

हेयत्वावचनाच्च ॥

कुतश्चेति ॥ इतश्चेत्यस्मिन्नर्थे । मुख्यमात्मानमुपदिशता पित्रा सच्छब्दार्थस्य हेयत्वावचनात् नाचेतनं[6] सद्वस्त्वित्यर्थः । व्यतिरेकमुखेन व्याचष्टे—यद्यनात्मैवेत्यादिना ॥ ब्रह्मप्रतिज्ञाविरोधाख्याधिकहेतुप्रदर्शनार्थः[7] सूत्रे चकार

१. TM omits न.
२. T and T¹ यतानन्नात्म.
३. T, T¹, P and TM. नन्वात्म.
४. A. नापि वा.
५. A. शक्तित्व.
६. A. न चेयं.
७. T and T¹ नार्थसूत्रे.

### भाष्यम्

इतीहोपदिष्टं स्यात्; स तदुपदेशश्रवणादनात्मज्ञतया तन्निष्ठो मा भूदिति, मुख्यमात्मानमुपदिदिक्षु शास्त्रं तस्य हेयत्वं ब्रूयात्। यथारुन्धतीं दिदर्शयिषुः तत्समीपस्थां स्थूलां ताराममुख्यां प्रथममरुन्धतीति ग्राहयित्वा, तां प्रत्याख्याय, पश्चादरुन्धतीमेव ग्राहयति; तद्वन्नायमात्मेति ब्रूयात्। न चैवमवोचत्। सन्मात्रात्मावगतिनिष्ठैव हि षष्ठप्रपाठके परिसमाप्तिर्दृश्यते। चशब्दः प्रतिज्ञाविरोधाभ्युच्चयप्रदर्शनार्थः। सत्यपि हेयत्ववचने प्रतिज्ञाविरोधः प्रसज्येत। कारणविज्ञानाद्धि सर्वं विज्ञातमिति प्रतिज्ञातम्— "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति; कथं नु भगवः स आदेशो भवतीति; यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्", "एवं सोम्य स आदेशो भवति" इति वाक्योपक्रमे श्रवणात्। न च सच्छब्दवाच्ये प्रधाने भोग्यवर्गकारणे हेयत्वेनाहेयत्वेन वा विज्ञाते भोक्तृवर्गो विज्ञातो भवति, अप्रधानविकारत्वाद्भोक्तृवर्गस्य। तस्मान्न प्रधानं सच्छब्दवाच्यम्॥

### प्रकटार्थविवरणम्

इत्याह—चशब्द इति॥ तं विवृणोति—सत्यपीत्यादिना॥ कासौ प्रतिज्ञेत्यत आह—कारणेति॥ तत्र हेतुः—वाक्योपक्रमे श्रवणादिति॥ वेदानधीत्य समागतं स्तब्धं पुत्रमुपलभ्य पितोवाच—तमप्युपदेशं किं त्वमप्राक्षीः येनाश्रुतमपि श्रुतं भवति, सर्वज्ञता भवतीत्यर्थः। एवं पर्यनुयुक्ते श्वेतकेतुरुवाच—कथं खलु भगवन् स आदेशो भवति। न ह्यन्यज्ञानादन्यज्ञानं संभवति। पुनः पितोवाच—यथैकस्मिन्मृत्पिण्डे मृदात्मनावधारिते अन्यदपि मृन्मयं मृदात्मकमेव, यश्च विकारो घटशरावादिविशेषः तद्वागिन्द्रियेणोच्चार्यमाणं नामधेयं निर्वस्तुकशब्दमात्रमनृतमिति भावः। सत्यं पुनर्मृन्मात्रमव्यभिचारात्। एवमुक्त आदेशो नाघटमानः। परमकारणे ज्ञाते सर्वस्य तदात्मकत्वात् सर्वं विज्ञातमेव भवति॥

१. T, T[1], P and TM. श्रवणादि.

२. TM and A तद्वानिन्द्रिय.

३. TM and A मात्रत्वमनृ[illegible]

भाष्यम्

कुतश्च न प्रधानं सच्छब्दवाच्यम् ?

## स्वाप्ययात् ॥ १-१-९ ॥

तदेव सच्छब्दवाच्यं कारणं प्रकृत्य श्रूयते "यत्रैतत्पुरुषः स्वपिति नाम, सता सोम्य तदा संपन्नो भवति; स्वमपीतो भवति; तस्मादेनं स्वपितीत्याचक्षते; स्वं ह्यपीतो भवति" इति। एषा श्रुतिः स्वपितीत्येतत्पुरुषस्य लोकप्रसिद्धं नाम निर्वक्ति। स्वशब्देनेहात्मोच्यते। यः प्रकृतः सच्छब्दवाच्यस्तमपीतो भवति अपिगतो भवतीत्यर्थः। अपिपूर्वस्यैतेर्लयार्थत्वं प्रसिद्धम्, प्रभवाप्ययावित्युत्पत्तिप्रलययोः प्रयोगदर्शनात्। मनःप्रचारोपाधिविशेषसंबन्धादिन्द्रियार्थान् गृह्णंस्तद्विशेषापन्नो जीवो जागर्ति; तद्वासनाविशिष्टः स्वप्नान् पश्यन् मनःशब्दवाच्यो भवति; स उपाधिद्वयोपरमे सुषुप्तावस्थायामुपाधिकृतविशेषाभावात् स्वात्मनि प्रलीन इवेति "स्वं ह्यपीतो भवति" इत्युच्यते। यथा हृदयशब्दनिर्वचनं श्रुत्या दर्शितम् "स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति; तस्माद्धृदयमिति" इति। यथा वा अशनायोदन्याशब्दप्रवृत्तिमूलं दर्शयति

प्रकटार्थविवरणम्

प्रधानवादे तु पुरुषाणामप्रधानात्मकत्वान्न तद्ज्ञानेन सर्वज्ञानं घटत इति हेत्वन्तरमाह—कुतश्चेति ॥ सुषुप्ते जीवस्य प्रकृते सच्छब्दवाच्ये स्वरूपभूतेऽप्ययश्रवणादचेतनस्य चेतनस्वरूपत्वायोगान्नाचेतनं सच्छब्दवाच्यमित्यर्थः।

स्वाप्ययात् ॥

वाक्यपर्यालोचनेन विवेचयति—तदेवेत्यादिना ॥ एतेर्धातोरपिपूर्वस्य लयार्थत्वं प्रसिद्धमित्येवं कथमनादिनिधनस्य जीवस्य लय उच्यत इत्याशङ्क्यौपाधिकत्वं वक्तुमुपाधिमाह—मनःप्रचारेत्यादिना ॥ मनःपरिणामोपाधिभिर्विषयविशेषसंबन्धात् स्थूलदेहात्मतामापन्नो जागर्ति। ननु स्वपितिनामनिर्वचनस्यार्थवादत्वान्न यथाश्रुतार्थवत्त्वमित्याशङ्क्याह—यथेत्यादिना ॥ तस्य

१. A. जीवलय इत्या.

भाष्यम्

श्रुतिः—"आप एव तदशितं नयन्ते" "तेज एव तत्पीतं नयते" इति च ; एवं स्वमात्मानं सच्छब्दवाच्यमपीतो भवतीतीममर्थं स्वपितिनामनिर्वचनेन दर्शयति । न च चेतन आत्मा अचेतनं प्रधानं स्वरूपत्वेन प्रतिपद्येत । यदि पुनः प्रधानमेवात्मीयत्वात् स्वशब्देनैवोच्येत, एवमपि चेतनोऽचेतनमप्येतीति विरुद्धमापद्येत । श्रुत्यन्तरं च "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" इति सुषुप्तावस्थायां चेतनेऽप्ययं दर्शयति । अतो यस्मिन्नप्ययः सर्वेषां चेतनानां तच्चेतनं सच्छब्दवाच्यं जगतः कारणं स्यात्, नाचेतनं प्रधानम् ॥ ९ ॥

कुतश्च न प्रधानं जगतः कारणम्?

## गतिसामान्यात् ॥ १-१-१० ॥

यदि तार्किकसमय इव वेदान्तेष्वपि भिन्ना कारणावगतिरभविष्यत्, क्वचिच्चेतनं ब्रह्म जगतः कारणम्, क्वचिदचेतनं प्रधानम्, क्वचिदन्यदेवेति; ततः कदाचित्प्रधानकारणवादानुरोधेनापीक्षत्यादिश्रवणमकल्पयिष्यत् । न त्वेतदस्ति । समानैव हि सर्वेषु वेदान्तेषु चेतनकारणावगतिः । "यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः

प्रकटार्थविवरणम्

हृदयशब्दस्य एतदेव निर्वचनम्। यद्धृदयमात्मा वर्तत इति, तत्स्थानं हृदयमुच्यते अशितं नयन्ते जरयतीत्यशनाया आपः ; पीतमुदकं नयन्ते शोषयतीति तेजउदन्यमिति यथेमामेवाप्तेजसोः शब्दप्रवृत्तिनिमित्तनिर्वचनेन दर्शयत्यर्थवादत्वेऽपि एवमिहापीति भावः । तच्च प्रधानवादे न समञ्जसमित्याह—न चेत्यादिना ॥

गतिसामान्यात् ॥

चेतनकारणावगतेः सर्वोपनिषत्स्वैकरूप्यादपि नाचेतनकारणपरताच

१. TM and A हृदय.
२. A. यते जरयती.
३ A. निमित्तं निर्व.

भाष्यम्

सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति, "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति, "आत्मत एवेदं सर्वम्" इति, "आत्मन एष प्राणो जायते" इति चात्मनः कारणत्वं दर्शयन्ति सर्वे वेदान्ताः । आत्मशब्दश्च चेतनवचन इत्यवोचाम । महच्च प्रामाण्यकारणमेतत्, यद्वेदान्तवाक्यानां चेतनकारणत्वे समानगतित्वम्, चक्षुरादीनामिव रूपादिषु । अतो गतिसामान्यात् सर्वज्ञं ब्रह्म जगतः कारणम् ॥ १० ॥

कुतश्च सर्वज्ञं ब्रह्म जगतः कारणम् ?

## श्रुतत्वाच्च ॥ १-१-११ ॥

स्वशब्देनैव च सर्वज्ञ ईश्वरो जगतः कारणमिति श्रूयते श्वेताश्वतराणां मन्त्रोपनिषदि सर्वज्ञमीश्वरं प्रकृत्य "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति । तस्मात्सर्वज्ञं ब्रह्म जगतः कारणम्, नाचेतनं प्रधानमन्यद्वेति सिद्धम् ॥

प्रकटार्थविवरणम्

वाक्यानि योजयितुं शक्यन्त इत्याह गतिसामान्यादिति ॥ व्यतिरेकमुखेन व्याख्याति यदीति ॥ प्राणाः इन्द्रियाणि यथास्थानं प्रादुर्भवन्ति प्रथमम्; पश्चाद्देवाः सूर्यादयोऽधिष्ठातारः ततोऽनन्तरं लोका विषयाः । अथवा गतिः प्रवृत्तिः । सर्वेषां वेदान्तानामेकरूपैव प्रवृत्तिश्चेतने दृश्यते । एकरूपप्रवृत्तिमत्त्वं च महत्प्रामाण्यकारणमित्याह महच्चेति ॥ यथा सर्वं चक्षूरूपमेव गोचरयति सर्वं च श्रोत्रं शब्दं गोचरयतीत्येकरूपप्रवृत्तिदर्शनात् परस्पराहतेश्च रूपादिषु चक्षुरादीनां प्रामाण्यं तद्वदित्यर्थः ॥

श्रुतत्वाच्च ॥

पूर्वमीक्षणादिश्रवणलिङ्गैरचेतने समन्वयं निरस्य इदानीं श्रुत्या स्वमुखेनैव चेतनस्य कारणत्वाभिधानाद्ब्रह्मण्येव समन्वय इत्याह श्रुतत्वाच्चेति ॥ करणाधिपानां जीवानामधिपोऽध्यक्ष इत्यर्थः । अधिकरणार्थमुपसंहरति—तस्मादिति ॥

१. A. लोकविषय.
२. A. श्रवणे.
३. T and T स्वमु TM. मुखु.

## भाष्यम्

"जन्माद्यस्य यतः" इत्यारभ्य "श्रुतत्वाच्च" इत्येवमन्तैः सूत्रैर्यान्युदाहृतानि वेदान्तवाक्यानि, तेषां सर्वज्ञः सर्वशक्तिरीश्वरो जगतो जन्मस्थितिलयकारणमित्येतस्यार्थस्य प्रतिपादकत्वं न्यायपूर्वकं प्रतिपादितम् । गतिसामान्योपन्यासेन च सर्वे वेदान्ताः चेतनकारणवादिन इति व्याख्यातम् । अतः परस्य ग्रन्थस्य किमुत्थानमिति, उच्यते—द्विरूपं हि ब्रह्मावगम्यते—नामरूपविकारभेदोपाधिविशिष्टम्, तद्विपरीतं च सर्वोपाधिविवर्जितम् । "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्" "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते"

## प्रकटार्थविवरणम्

उत्तरसूत्रसन्दर्भारम्भं संभावयति—जन्माद्यस्येत्यादिना ॥ येषां वाक्यानां जैमिनिपादोपजीविमतापाकरणेन समन्वयसूत्रे प्रामाण्यं परिनिष्ठितं प्रत्यतिष्ठिपत् तेषामेव साङ्ख्यादिमतापाकरणेन ब्रह्मण्येव प्रामाण्यं पुनः[1] प्रतिष्ठापयांबभूव । अतः समन्वयाध्यायार्थस्य समाप्तत्वात् परस्य ग्रन्थस्य किमारम्भकारणमित्यर्थः । सविशेषवस्तूपासनोपदेशकानामपि सर्ववाक्यानां निर्विशेषपरब्रह्मण्येव महा[2]तात्पर्यमिति समन्वयविशेषप्रतिपादनायोत्तरं सन्दर्भमारेभे भगवानित्याह—उच्यत इति ॥ ननु नास्ति निर्विशेषं ब्रह्म यत्र महातात्पर्यम्; किं तु सविशेषमेवेत्याशङ्क्याह—द्विरूपं हीति ॥ ननु रूपद्वयस्य परस्परविरोधान्नैकत्र[3] युगपत्समावेश इत्याशङ्क्य यथा शुक्तेः स्वतोऽरूप्यात्मता, अविद्याध्यासाच्च रूप्यात्मता; तथा ब्रह्मणोऽपि स्वाभाविकी निष्प्रपञ्चता मायोपाधिकस्य च सप्रपञ्चता इत्यविरोधं वक्तुं द्विरूपाणि वाक्यान्युदाहरति–यत्र हीत्यादिना ॥ भवत्वेवं द्विरूपत्वं तथापि कथमुपासनपराणां

१. A omits पुनः.

२. A omits महा.

३. A. विरोधात् तेनकुत्र.

भाष्यम्

"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥"

"नेति नेति" "अस्थूलमनण्वह्रस्वमदीर्घम्" "न्यूनमन्यत्स्थानं संपूर्णमन्यत्" इति चैवं सहस्रशो विद्याविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वेदान्तवाक्यानि । तत्राविद्यावस्थायां ब्रह्मण उपास्योपासकादिलक्षणः सर्वो व्यवहारः । तत्र कानिचित् ब्रह्मण उपासनान्यभ्युदयार्थानि, कानिचित् क्रममुक्त्यर्थानि, कानिचित् कर्मसमृद्ध्यर्थानि । तेषां गुणविशेषोपाधिभेदेन भेदः । एक एव तु पर आत्मा ईश्वरस्तैस्तैर्गुणविशेषैर्विशिष्ट उपास्यो यद्यपि भवति, तथापि यथागुणोपासनमेव फलानि भिद्यन्ते ; "तं यथा यथोपासते तदेव भवति" इति श्रुतेः, "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति च । स्मृतेश्च—

प्रकटार्थविवरणम्

निर्विशेषे समन्वय इत्याशङ्क्याह—तत्राविद्यावस्थायामिति ॥ अध्यारोपापवादन्यायेन निर्विशेषप्रतिपत्त्यर्थं सप्रपञ्चप्रतिपत्तिमाश्रित्य प्रासङ्गिकमुपासनं विधीयते, यथा दर्शपूर्णमासार्थाप्प्रणयनाश्रयेण गोदोहनं विधीयते पशुभ्यः । ततोऽवान्तरतात्पर्येऽपि स्वार्थे परमशेषिणि महातात्पर्यं न विरुध्यत इत्यर्थः । तर्हि निर्गुणविद्याधिकारिण एवात्राधिकारः स्यादित्याशङ्क्याह—तत्रेति ॥ तत्तत्कामस्य स्यादधिकारः अनुष्ठानवत्प्रतिपत्तौ विशेषाभावादित्यर्थः । ननु ब्रह्मण एवोपास्यत्वे किञ्चिदपरब्रह्मोपासनं किञ्चित्सगुणब्रह्मोपासनमिति विभागः किन्निबन्धन इत्याशङ्क्याह—तेषामिति ॥ यत्र सत्यकामादिगुणविशिष्टं स्वतन्त्रमेव ब्रह्मोपास्यत्वेनोपदिश्यते तत् सगुणोपासनम्, यथा शाण्डिल्यविद्यादिषु । यत्र तु विशेषानुगतं तदवच्छिन्नं तदात्मनैवोपास्यत्वेनोपदिश्यते, यथा वैश्वानरविद्यायाम्, तदपरब्रह्मोपासनमिति भेदः । तर्ह्येकस्यैवोपास्यत्वात् न फलभेदः, एकग्रामप्राप्तिसाधनमार्गभेदवदित्याशङ्क्याह—एक एव त्विति ॥ राजोपासनफलभेदवदित्यर्थः । क्रतुः सङ्कल्पः ।

१. T. किञ्चिद्गुणब्रह्म.

२. T, TM and P क्रतः संकल्पः.
T[1]. क्रतु संकल्पम्.

### भाष्यम्

"यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥" इति ।

यद्यप्येक आत्मा सर्वभूतेषु स्थावरजङ्गमेषु गूढः तथापि चित्तोपाधिविशेषतारतम्यादात्मनः कूटस्थनित्यस्यैकरूपस्याप्युत्तरोत्तरमाविष्कृतस्य तारतम्यमैश्वर्यशक्तिविशेषैः श्रूयते—"तस्य य आत्मानमाविस्तरां वेद" इत्यत्र । स्मृतावपि—

"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥" इति ।

यत्र यत्र विभूत्याद्यतिशयः स स ईश्वर इत्युपास्यतया चोद्यते । एवमिहाप्यादित्यमण्डले हिरण्मयः पुरुषः सर्वपाप्मोदयलिङ्गात्पर एवेति वक्ष्यति । एवम् "आकाशस्तल्लिङ्गात्" इत्यादिषु द्रष्टव्यम् । एवं सद्योमुक्तिकारणमप्यात्मज्ञानमुपाधिविशेषद्वारेणोपदिश्यमानमप्यविवक्षितोपाधिसंबन्धविशेषं परापरविषयत्वेन संदिह्यमानं वाक्यगतिपर्यालोचनया निर्णेतव्यं भवति । यथेहैव तावत् "आनन्दमयोऽभ्यासात्" इति । एवमेकमपि ब्रह्मापेक्षितोपाधिसंबन्धं निरस्तोपाधिसंबन्धं

### प्रकटार्थविवरणम्

ननु यद्येक एवात्मा सर्वत्रानुगत उपास्यः, कथं तर्हि तस्य तारतम्यश्रुतयः? ततो न ब्रह्मोपास्यमित्याशङ्क्याह—यद्यप्येक इति ॥ अस्यात्मनः तरामतिशयेनापि प्रकटं रूपं यो वेदेत्यत्र तरप्प्रत्ययप्रयोगात् यत् तारतम्यं श्रूयते तच्चित्तोपाधेः शुद्धतालक्षणस्य विशेषस्य तारतम्यात्, न त्वब्रह्मत्वादित्यर्थः । न केवलं श्रुतिस्मृत्योरेवोपाधिविशेषावच्छिन्नोऽपीश्वर एवोपास्यत्वेनोपदिश्यते, सूत्रकारोऽपि वक्ष्यतीत्याह—एवमिहापीति ॥ सर्वपापासंस्पर्शलिङ्गादित्यर्थः । तस्मादध्यारोपावस्थायां ब्रह्मण एव तत्र तत्रोपास्यत्वात् उपासनाभागोऽपि ब्रह्मण्येव प्रमाणमिति कथयितुमुत्तरग्रन्थारम्भ इति भावः । तथा क्वचिदुपाधिरुपदिष्टोऽप्यविवक्षित इत्यपि कथयितुमुत्तरारम्भ इत्याह—एवं सद्य इति ॥ आरम्भं प्रसाध्योपसंहरति—एवमित्यादिना ॥

१. TM omits ननु. २. A adds अपि.

भाष्यम्

चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यत इति प्रदर्शयितुं परो ग्रन्थ आरभ्यते । यच्च "गतिसामान्यात्" इत्यचेतनकारणनिराकरणमुक्तं तदपि वाक्यान्तराणि ब्रह्मविषयाणि व्याचक्षाणेन ब्रह्मविपरीतकारणनिषेधेन प्रपञ्च्यते—

## आनन्दमयोऽभ्यासात् ॥ १-१-१२ ॥

तैत्तिरीयके अन्नमयं प्राणमयं मनोमयं विज्ञानमयं चानुक्रम्याम्नायते "तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मानन्दमयः" इति । तत्र संशयः—किमिहानन्दमयशब्देन परमेव ब्रह्मोच्यते यत्प्रकृतम् "सत्यं ज्ञानमनन्तं ब्रह्म" इति, किं वा अन्नमयादिवद्ब्रह्मणोऽर्थान्तरमिति । किं तावत्प्राप्तम्? ब्रह्मणोऽर्थान्तरममुख्य आत्मानन्दमयः स्यात् । कस्मात्? अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वात् । अथापि स्यात् सर्वान्तरत्वादानन्दमयो मुख्य एवात्मेति; न स्यात्, प्रियाद्यवयवयोगात् शारीरत्वश्रवणाच्च । मुख्यश्चेदात्मा आनन्दमयः स्यात्, न प्रियादिसंस्पर्शः स्यात् । इह तु "तस्य प्रियमेव शिरः" इत्यादि श्रूयते । शारीरत्वं च श्रूयते "तस्यैष एव शारीर आत्मा । यः पूर्वस्य" इति । तस्य पूर्वस्य विज्ञानमयस्यैष एव शारीर आत्मा य एष आनन्दमय

प्रकटार्थविवरणम्

आनन्दमयोऽभ्यासात् ॥ इति

एतदधिकरणं प्राचां वृत्तिकृतां मतेन व्याख्यातुं विषयवाक्यमाह—तैत्तरीयक इति ॥ मयटः प्राचुर्ये विकारे च विशेषानुपलब्धेः संशयमाह—तत्र संशय इत्यादिना ॥ किं आनन्दप्रचुरं ब्रह्म आनन्दमय उच्यते, किं वा आनन्दविकारविशिष्टतया तद्विकारो जीव इत्यर्थः । प्रश्नपूर्वकं पूर्वपक्षं रचयति—किं तावदिति ॥ अन्नमयादेरनात्मत्वं युक्तम् । श्रुत्यैव चात्मान्तरकथनेनानात्मत्वाभिधानात् न तथा आनन्दमयादन्योऽन्तर आत्मोपदिष्ट इत्याह—अथापीति ॥ परिहरति—न स्यादिति ॥ वस्तुसङ्ग्रहवाक्यद्वयं व्यतिरेकमुखेन विवृणोति—मुख्यश्चेदिति ॥ चेतनाचेतनसाधारणस्यापि सच्छब्दस्येक्षणादिबहुचेतनलिङ्गाच्चेतनपरत्वं पूर्वत्रोक्तम् । एवं प्राचुर्यविकारसाधारणस्यापि मयटो

भाष्यम्

इत्यर्थः । न च सशरीरस्य सतः प्रियाप्रियसंस्पर्शो वारयितुं शक्यः । तस्मात् संसार्येवानन्दमय आत्मेत्येवं प्राप्त इदमुच्यते—

"आनन्दमयोऽभ्यासात्" । पर एवात्मा आनन्दमयो भवितुमर्हति । कुतः? अभ्यासात् । परस्मिन्नेव ह्यात्मन्यानन्दशब्दो बहुकृत्वोऽभ्यस्यते । आनन्दमयं प्रस्तुत्य "रसो वै सः" इति तस्यैव रसत्वमुक्त्वा उच्यते "रसꣳह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति" "सैषानन्दस्य मीमाꣳसा भवति" "एतमानन्दमयमात्मानमुपसंक्रामति" "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति" इति "आनन्दो ब्रह्मेति व्यजानात्" इति च । श्रुत्यन्तरे च "विज्ञानमानन्दं ब्रह्म" इति ब्रह्मण्येवानन्दशब्दो दृष्टः । एवमानन्दशब्दस्य बहुकृत्वो ब्रह्मण्यभ्यासादानन्दमय आत्मा ब्रह्मेति गम्यते । यत्तूक्तमन्नमयाद्यमुख्यात्मप्रवाहपतितत्वादानन्दमयस्याप्यमुख्यत्वमिति, नासौ दोषः, आनन्दमयस्य सर्वान्तरत्वात् । मुख्यमेव ह्यात्मानमुपदिदिक्षु शास्त्रं लोकबुद्धिमनुसरत्, अन्नमयं शरीरमनात्मानमत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्य मूषानिषिक्तद्रुतताम्रादिप्रतिमावत्ततोऽन्तरं ततोऽन्तरमित्येवं पूर्वेण पूर्वेण समानमुत्तरमुत्तरमनात्मानमात्मेति ग्राह-

प्रकटार्थविवरणम्

विकारार्थैव ग्राह्या सावयवत्वशारीरत्वप्रियादिसंस्पर्शित्वलिङ्गेभ्यः । ततो जीवोपासनपरं वाक्यमिति पूर्वः पक्षः ॥

सिद्धान्तत्वेन सूत्रमवतार्य व्याचष्टे—पर एवेत्यादिना ॥ अन्यात् अपाननव्यापारं कः कुर्यात्; प्राण्यात् प्राणनव्यापारं वा कः कुर्यात्, यद्येष आकाश आनन्दोऽधिष्ठाता न स्यात् । अभ्यासाख्यतात्पर्यलिङ्गदर्शनात् ब्रह्मप्रमितिपरं वाक्यं न जीवोपासनपरमिति भावः । उक्तानुवादेन दोषाभिधानम्—यत्तूक्तमित्यादिना ॥ श्लिष्टतरं युक्ततरम् । आनन्दमयः परमात्मा, सर्वान्तरत्वात्

१. A. मुख्य इति.
२. T and T¹ शैव.
३. T and T¹ रूपं.
४. A. युक्तमा-

भाष्यम्

यत्, प्रतिपत्तिसौकर्यापेक्षया सर्वान्तरं मुख्यमानन्दमयमात्मानमुपदिदेशेति श्लिष्टतरम् । यथारुन्धतीनिदर्शने बह्वीष्वपि तारास्वमुख्यास्वरुन्धतीषु दर्शितासु या अन्त्या प्रदर्श्यते सा मुख्यैवारुन्धती भवति, एवमिहाप्यानन्दमयस्य सर्वान्तरत्वान्मुख्यमात्मत्वम् । यत्तु ब्रूषे, प्रियादीनां शिरस्त्वादिकल्पनानुपपन्ना मुख्यस्यात्मन इति, अतीतानन्तरोपाधिजनिता सा; न स्वाभाविकीत्यदोषः । शारीरत्वमप्यानन्दमयस्यान्नमयादिशरीरपरम्परया प्रदर्श्यमानत्वात्; न पुनः साक्षादेव शारीरत्वं संसारिवत् । तस्मादानन्दमयः पर एवात्मा ॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १-१-१३ ॥

अत्राह—नानन्दमयः पर आत्मा भवितुमर्हति; कस्मात्? विकारशब्दात् । प्रकृतिवचनादयमन्यः शब्दो विकारवचनः समधिगतः 'आनन्दमयः' इति, मयटो विकारार्थत्वात्; तस्मादन्नमयादिशब्दवद्विकारविषय एवायमानन्दमयशब्द इति चेत्, न; प्राचुर्यार्थेऽपि मयटः

प्रकटार्थविवरणम्

तैत्तिरीयकपञ्चमपर्यायस्थत्वाद्वा भृगुवल्ल्युक्तानन्दवदिति भावः । ननु सावयवत्वप्रतिपत्तिबाध इत्याशङ्क्याह—यत्तु प्रियादीनामिति ॥ अतीतानन्तरोपाधौ तावदस्त्यवयवकल्पना तत्प्रायापत्त्या पुरुषविधत्वसंपादनार्थावयवकल्पनानन्दमयेऽपि न स्वावयवसिद्ध्यर्था, अतो न बाध इत्यर्थः । शारीरत्वप्रतिपत्तिरपि न बाधिकेत्याह—शारीरत्वमपीति ॥

विकारार्थमयट्श्रुतिबाधमाशङ्क्य परिहरति--

विकारशब्दान्नेतिचेन्न प्राचुर्यात् ॥

आनन्दप्राचुर्यादपि मयडुपपत्तौ न बाधकत्वसंभवः, अनन्यथासिद्ध्यभावादिति भावः । तस्य विकारस्य प्रकृतिवचने हेत्वभिधाने गम्यमाने मयट्प्रत्ययो

१. A omits न.
२. A सावयवत्वकल्पनासि-
३. TM. नान्य.

भाष्यम्

स्मरणात् । "तत्प्रकृतवचने मयट्" इति हि प्रचुरतायामपि मयट् स्मर्यते । यथा 'अन्नमयो यज्ञः' इत्यन्नप्रचुर उच्यते, एवमानन्दप्रचुरं ब्रह्मानन्दमय उच्यते । आनन्दप्रचुरत्वं च ब्रह्मणो मनुष्यत्वादारभ्य उत्तरस्मिन्नुत्तरस्मिन् स्थाने शतगुण आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतिशयत्वावधारणात् । तस्मात्प्राचुर्यार्थे मयट् ॥

## तद्धेतुव्यपदेशाच्च ॥ १-१-१४ ॥

इतश्च प्राचुर्यार्थे मयट् । यस्मादानन्दहेतुत्वं ब्रह्मणो व्यपदिशति श्रुतिः "एष ह्येवानन्दयाति" इति । आनन्दयतीत्यर्थः । यो ह्यन्यानानन्दयाति स प्रचुरानन्द इति प्रसिद्धं भवति; यथा लोके योऽन्येषां धनिकत्वमापादयति स प्रचुरधन इति गम्यते, तद्वत् । तस्मात् प्राचुर्यार्थेऽपि मयटः संभवादानन्दमयः पर एवात्मा ॥

## मान्त्रवर्णिकमेव च गीयते ॥ १-१-१५ ॥

इतश्चानन्दमयः पर एवात्मा; यस्मात् "ब्रह्मविदाप्नोति परम्" इत्युपक्रम्य "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यस्मिन्मन्त्रे यत् प्रकृतं सत्यज्ञानानन्तविशेषणैर्निर्धारितम्, यस्मादाकाशादिक्रमेण स्थावरजङ्ग-

प्रकटार्थविवरणम्

भवतीत्यनेन विकारापेक्षया प्रकृतेः प्राचुर्यात् प्राचुर्ये मयड्विहित इत्यर्थः[1] । ब्रह्मण्यानन्दप्राचुर्यमेव कुतः सिद्धमित्यत आह—आनन्दप्रचुरत्वं चेति ॥ "स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः" इत्युपक्रम्य देवगन्धर्वपितृलोकं[2] [?]..............

[ तद्धेतुव्यपदेशाच्च ॥ ]

..............................................................

यद्ब्रह्म तदेव ब्राह्मणेनापि गीयते, प्रकृतत्वान्मन्त्रब्राह्मणयोश्च वैरूप्यायोगादित्याह—

मान्त्रवर्णिकमेव च गीयते ॥

ननु तर्ह्यन्नमयादेरपि ब्रह्मत्वप्रसङ्गः, प्रक्रमाविशेषात् इत्याशङ्क्याह—

१. A. प्राचुर्यमयाड्विहितः २. The mss. do not show any indication but a considerable portion seems to have been lost.

भाष्यम्

मानि भूतान्यजायन्त, यच्च भूतानि सृष्ट्वा तान्यनुप्रविश्य गुहायामवस्थितम्, सर्वान्तरम्, यस्य विज्ञानाय "अन्योऽन्तर आत्मा" "अन्योऽन्तर आत्मा" इति प्रक्रान्तम्, तन्मान्त्रवर्णिकमेव ब्रह्मेह गीयते "अन्योऽन्तर आत्मानन्दमयः" इति। मन्त्रब्राह्मणयोश्चैकार्थत्वं युक्तम्, अविरोधात्। अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्याताम्। न चान्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्माभिधीयते। एतन्निष्ठैव च "सैषा भार्गवी वारुणी विद्या" इति। तस्मादानन्दमयः पर एवात्मा ॥

## नेतरोऽनुपपत्तेः ॥ १-१-१६ ॥

इतश्च आनन्दमयः पर एवात्मा, नेतरः; इतर ईश्वरादन्यः संसारी जीव इत्यर्थः। न जीव आनन्दमयशब्देनाभिधीयते; कस्मात्? अनुपपत्तेः। आनन्दमयं हि प्रकृत्य श्रूयते— "सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदꣳसर्वमसृजत। यदिदं किं च" इति। तत्र प्राक्शरीराद्युत्पत्तेरभिध्यानम्, सृज्यमानानां च विकाराणां स्रष्टुरव्यतिरेकः, सर्वविकारसृष्टिश्च न परस्मादात्मनोऽन्यत्रोपपद्यते ॥

प्रकटार्थविवरणम्

न चेति ॥ किं च भृगवे प्रोक्ता भार्गवी, वरुणेनोपदिष्टा वारुणी, या विद्या साप्यानन्दमयब्रह्मनिष्ठैवेत्याह—एतन्निष्ठैवेति ॥

कामनापूर्वकसकलजगत्सृष्ट्याद्यनुपपत्तेर्न जीव आनन्दमय इत्याह—

नेतरोऽनुपपत्तेः ॥ इति

सृज्यमानपदार्थालोचनं तपः। अतप्यत कृतवानित्यर्थः। श्रूयतां नाम, ततः किमित्यत आह—तत्रेति ॥ "सोऽकामयत" इत्यभिध्यानम्; बहु स्यां भवेयम्, कार्यकरणे चाहमेवोत्पद्येयेत्यव्यतिरेकः, "इदं सर्वमसृजत" इति सृष्टिश्च जीवे नानुपपत्तेः [नोपपद्यन्ते] परिच्छिन्नशक्तित्वादित्यर्थः ॥

१. T and T उत्पाद्येय

भाष्यम्

## भेदव्यपदेशाच्च ॥ १-१-१७ ॥

इतश्च नानन्दमयः संसारी; यस्मादानन्दमयाधिकारे "रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति" इति जीवानन्दमयौ भेदेन व्यपदिशति । न हि लब्धैव लब्धव्यो भवति । कथं तर्हि "आत्मान्वेष्टव्यः", "आत्मलाभान्न परं विद्यते" इति श्रुतिस्मृती, यावता न लब्धैव लब्धव्यो भवतीत्युक्तम् ? बाढम् । तथाप्यात्मनोऽप्रच्युतात्मभावस्यैव सतस्तत्त्वानवबोधनिमित्तो मिथ्यैव देहादिष्वनात्मस्वात्मत्वनिश्चयो लौकिको दृष्टः । तेन देहादिभूतस्यात्मनोऽपि आत्मा अनन्विष्टोऽन्वेष्टव्यः, अलब्धो लब्धव्यः, अश्रुतः श्रोतव्यः, अमतो मन्तव्यः, अविज्ञातो विज्ञातव्यः, इत्यादिभेदव्यपदेश उपपद्यते । प्रतिषिद्ध्यत एव तु परमार्थतः सर्वज्ञात्परमेश्वरादन्यो द्रष्टा श्रोता वा "नान्योऽतोऽस्ति

प्रकटार्थविवरणम्

आनन्दमयप्रकरणे जीवेश्वरयोर्भेदव्यपदेशाच्च न जीव आनन्दमय इत्याह—

भेदव्यपदेशाच्च ॥ इति

रसवद्रसः; मोदनहेतुत्वादानन्दमयः; तत्प्राप्यायं जीवः सुखी भवतीत्येतावदुच्यते । न भेद इत्याशङ्क्याह—न हि लब्धैवेति ॥ एकस्य कर्मकर्तृत्वानुपपत्तेरार्थिकश्चेद्भेदव्यपदेशः, कथं तर्हि श्रुतिस्मृती आत्मन एव लाभविषये सङ्गच्छेते इत्याह—कथं तर्हीति ॥ सत्यमात्मन एव लाभं दर्शयतः श्रुतिस्मृती; किन्तु मिथ्याभेदाङ्गीकारेणैवेत्याह—बाढमिति ॥ अविद्याप्रतिबिम्बितस्य चिद्धातोरविद्याकार्यदेहाद्यात्माभिमानिनो बिम्बस्थानीयं ब्रह्म स्वरूपभूतमप्यन्वेष्टव्यम्, लभ्यं च भवतीति न[1] कर्तृकर्मविरोध इति भावः । ननु यद्येकस्य कर्तृत्वकर्मत्वविरोधाद्भेदोऽङ्गीकृतः, तर्हि स तात्त्विक एवास्त्वित्याशङ्क्याह— प्रतिषिद्ध्यत एवेति ॥ यो मायाप्रतिबिम्बितत्वेन सर्वज्ञादिशब्दवाच्यः चिद्धातुः तस्मात्परमार्थत एवान्यो द्रष्टा श्रोता वा प्रतिषिद्ध्यत एव[2] शास्त्रेण प्रतिपन्नभेदानुपमर्देनेति न तात्त्विको भेद आश्रीयत

१. T and T[1] omit न.  २. TM. एवमस्तु.

भाष्यम्

द्रष्टा" इत्यादिना । परमेश्वरस्त्वविद्याकल्पिताच्छारीरात्कर्तुर्भोक्तुः विज्ञानात्माख्यादन्यः ; यथा मायाविनश्चर्मखड्गधरात्सूत्रेणाकाशमधिरोहतः स एव मायावी परमार्थरूपो भूमिष्ठोऽन्यः ; यथा वा घटाकाशादुपाधिपरिच्छिन्नादनुपाधिपरिच्छिन्न आकाशोऽन्यः । ईदृशं च विज्ञानात्मपरमात्मभेदमाश्रित्य "नेतरोऽनुपपत्तेः" "भेदव्यपदेशाच्च" इत्युक्तम् ॥

## कामाच्च नानुमानापेक्षा ॥ १-१-१८ ॥

आनन्दमयाधिकारे च "सोऽकामयत बहु स्यां प्रजायेयेति" इति

प्रकटार्थविवरणम्

इत्यर्थः । नन्वेतदः प्रसिद्धावद्योतकत्वात् लोकप्रसिद्धात् जीवाख्याद्दृष्टुरन्य ईश्वरोऽनेन वाक्येन प्रतिषिध्यत इत्याशङ्क्याह—परमेश्वरस्त्विति ॥ अविद्याकल्पितादिति ॥ अविद्याप्रतिबिम्बिताच्चिद्धातोर्जीवाख्यादन्यः परमेश्वरो न निषिध्यते । प्रसिद्धावद्योतकस्याप्येतदः प्रकरणानुगृहीतस्य प्रकृतान्तर्याम्यवलम्बित्वात् नियम्यनियामकभावेन प्रसक्तताात्त्विकभेदशङ्कानिरासकत्वाद्वाक्यस्येत्यर्थः । प्रतिषिद्धे च प्रतिपन्नभेदस्य तत्त्वांशे मिथ्यात्वं व्यवतिष्ठते; तत्रोदाहरणमाह—यथेति ॥ मायामहिम्ना देहं निर्माय स्वयं च तत्र प्रविश्याकाशमधिरोहति ; विशिष्टयोरेव तत्रापि भेदः कल्पितः ; स्वरूपं पुनरेकमेवेति भावः । ननु सूत्रकारेण तात्त्विक एव भेद उक्तः ; कथं मिथ्याभेद उदाहृत इत्याशङ्क्याह—ईदृशं चेति ॥ यदत्र भास्करो विललाप "यथासूत्रार्थसंभवे भङ्क्त्वा व्याख्यानस्याप्यन्याय्यत्वात्" इति तदसौ स्वात्मानं ह्रेपयति स्म । न हि सूत्रे सत्यपदं समस्ति ; न च कल्पयितुं शक्यम्, आत्मलाभश्रवणश्रमप्रसङ्गात् । साधारणे च भेदशब्दे सति सत्यताकल्पनायां तस्यैव सूत्रभङ्गप्रसङ्गादिति ॥

कामाच्च नानुमानापेक्षा ॥

ननु तर्हि प्रधानमानन्दात्मकसत्त्वसंपन्नमानन्दमयशब्दाभिधेयमस्त्वित्याशङ्क्याह—कामाच्चेति ॥ अनुमानेन गम्यमानं प्रधानं तस्य नानन्दमयत्वेना-

१. TM. एतदप्रसिद्ध.
२. T and T¹ लोकसिद्धात्.
३. A. जीवादन्यः.
४. TM. ह्रापयति.

भाष्यम्

कामयितृत्वनिर्देशाच्च नानुमानिकमपि सांख्यपरिकल्पितमचेतनं प्रधानमानन्दमयत्वेन कारणत्वेन वापेक्षितव्यम् । "ईक्षतेर्नाशब्दम्" इति निराकृतमपि प्रधानं पूर्वसूत्रोदाहृतां कामयितृत्वश्रुतिमाश्रित्य प्रसङ्गात् पुनर्निराक्रियते गतिसामान्यप्रपञ्चनाय ॥

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १-१-१९ ॥

इतश्च न प्रधाने जीवे वा आनन्दमयशब्दः ; यस्मादस्मिन्नानन्दमये प्रकृत आत्मनि प्रतिबुद्धस्यास्य जीवस्य तद्योगं शास्ति ; तदात्मना योगस्तद्योगः, तद्भावापत्तिः, मुक्तिरित्यर्थः । तद्योगं शास्ति शास्त्रम् "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति" इति । एतदुक्तं भवति—यदैतस्मिन् आनन्दमये अल्पमप्यन्तरमतादात्म्यरूपं पश्यति तदा संसारभयान्न निवर्तते ; यदा त्वेतस्मिन्नानन्दमये निरन्तरं तादात्म्येन प्रतितिष्ठति तदा संसारभयान्निवर्तत इति । तच्च परमात्मपरिग्रहे घटते, न प्रधानपरिग्रहे जीवपरिग्रहे वा । तस्मादानन्दमयः परमात्मेति सिद्धम् ॥

प्रकटार्थविवरणम्

पेक्षा कामयितृत्वस्य चेतनधर्मस्य श्रवणादित्यर्थः । ननु न[१] युक्ता प्रधानाशङ्का, तस्याशब्दत्वोक्तेरित्याशङ्क्याह—ईक्षतेरिति ॥

अस्मिन्नस्य च तद्योगं शास्ति ॥

प्रकृतानन्दमयप्रबोधवतो मोक्षशासनात् जीवप्रधानाच्च[न प्रबोधाच्च] तदसंभवात् नतयोरानन्दमयतेत्याह—अस्मिन्निति ॥ अदृश्ये चक्षुराद्यगोचरे ; अनात्म्ये असङ्गे ; अनिरुक्ते शब्दशक्त्यगोचरे ; अनिलयने स्वतन्त्रे ; अभयं प्रतिष्ठां यदैवैष जीवो लभते अथ तदैव स मुक्तो भवतीत्यर्थः । उत्[२] अपि ; अरम् अल्पम् ; अन्तरं भेदमित्यर्थः ॥

१. T and TM omit न.  २. T अपि

## भाष्यम्

इदं त्विह वक्तव्यम्— 'स वा एष पुरुषोऽन्नरसमयः' 'तस्माद्वा एतस्मादन्नरसमयात् अन्योऽन्तर आत्मा प्राणमयः' तस्मात् 'अन्योऽन्तर आत्मा मनोमयः' तस्मात् 'अन्योऽन्तर आत्मा विज्ञानमयः' इति च विकारार्थे मयट्प्रवाहे सति, आनन्दमय एवाकस्मादर्धजरतीयन्यायेन कथमिव मयटः प्राचुर्यार्थत्वं ब्रह्मविषयत्वं चाश्रीयत

## प्रकटार्थविवरणम्

एवं वृत्तिकारमतेन व्याख्याय आक्षिपति स्वापेक्षितव्याख्यानाय— इदं त्विह वक्तव्यमित्यादिना ॥ एतदुक्तं भवति—शब्दः किल शक्तिस्मृतिसापेक्षो बुद्धिमुत्पादयति । अन्नमयादिषु च मयटो विकाराभिधानशक्तेर्बुद्धिस्थत्वादानन्दमयेऽपि विकाराभिधानमेव युक्तम्, लाघवात्; अन्यथाकार्यं गौरवादिति । यदत्र भास्करो रुरोद "यद्यप्यन्नमये विकारार्थे[1] मयट्प्रत्ययः, तथापि न प्राणमयादिषु विकारार्थः[2] संभवति, पञ्च[3]वृत्तेः प्राणस्यैकत्वात् प्रकृतिविकारभावासंभवात्; अतः तत्र स्वार्थे मयट्प्रत्ययो[4] वृत्तिबाहुल्यविवक्षया वा ततः परेषु विवक्षा नास्तीत्यानन्दमयः प्रभूतानन्दो वा" इति—तदज्ञत्वमेव प्रतिजज्ञे । तथा हि—"स वा एष पुरुषोऽन्नरसमयः" इत्यत्र तावत् प्रकृतं ब्रह्मात्मानं सशब्देनानुकृष्य भूतानि निर्माय देहमनुप्रविष्टं तमेवैषशब्देन परामृश्यान्नरसेनान्नकार्येण देहेनावच्छिन्नतया तद्विकारं तन्निर्दिशति—अन्नरसमय[5] इति ॥ ततोऽनन्तरं प्राणेनावच्छिन्नतया तदेव तद्विकारमाह—प्राणमय इति ॥ तस्य प्राणमयस्यैष एव प्रकृताभिज्ञातुः प्राणे च प्रतिबिम्बितः शारीर आत्मा यः पूर्वस्यान्नमयस्येति प्रकृतस्यैव विशिष्टात्मनामात्मभूतस्यानुकर्षणात् ततोऽनन्तरं सङ्कल्पादिसमर्थ[7]मनोवच्छिन्नतया मनोमयम् अध्यवसायसमर्थविज्ञानविशिष्ट[6]तया विज्ञानमयम् आनन्दविशिष्टतया आनन्दमयं तमेवाह । त एते पञ्च विशिष्टा

१. A. विकारार्थो.
२. A. विकारः
३. T omits पञ्च.
४. T. Space is left out for writing प्रत्ययो......प्रकृतं ब्रह्म
५. T. Space is left out for writing अन्नरस......प्राणमय इति । तस्य.
६. T. Space is left out for writing विशिष्ट.........समर्थविज्ञान.
७. A omits मनो......समर्थ.

## भाष्यम्

इति । मान्त्रवर्णिकब्रह्माधिकारादिति चेत्, न; अन्नमयादीनामपि तर्हि ब्रह्मत्वप्रसङ्गः। अत्राह—युक्तमन्नमयादीनामब्रह्मत्वम्, तस्मात्तस्मादान्तरस्यान्तरस्यान्यस्यान्यस्यात्मन उच्यमानत्वात्; आनन्दमयात्तु न कश्चिदन्य आन्तर आत्मोच्यते; तेनानन्दमयस्य ब्रह्मत्वम्; अन्यथा

## प्रकटार्थविवरणम्

अज्ञानप्रतिबिम्बितचित्स्वरूपे समारोपिताः विशेषविकारत्वात् मयटोच्यन्ते । ननु विशेषणविशेष्यसम्बन्धव्यतिरेकेण न निवि[विशि]ष्टोऽस्ति न संबन्धग्रहणोत्तरकालीनत्वात् विशिष्टबुद्धेरतिरिक्तविषयत्वादन्यथा पटस्याप्यपह्नवप्रसङ्गात्; तन्तुसंयोगमात्रं तत्रापि भातीति वक्तुं शक्यत्वात् । अतो यथा अन्वयव्यतिरेकाभ्यां तन्तुसंयोगारब्धः पटः तथा विशेषणविशेष्यसंबन्धारब्धो विशिष्टोऽभ्युपेयः सर्वैः । रहस्यं तु विशेषणविशेष्ययोः परस्पराधीनसिद्धिकत्वात् वस्तुत्वायोगात् विशेषणयोगात् स्वरूपे समारोपितो विशिष्टो भातीति 'सुरभि चन्दनम्' इत्यादावेकैकग्रहणसंस्कारसध्रीचीनेन मनसा विशिष्टाध्यवसाय इत्यनेन[नेनेति] । तदेवं विकारार्थमयट्प्रवाहमुल्लङ्घ्य न प्राचुर्यार्थो मयडानन्दमये व्याख्यातुमुचितः; नापि स्वार्थः, पौनरुक्त्यापाताच्च "आनन्द आत्मा" इत्यनेन। किन्तु विकारार्थ एव । आक्षिप्तमपि दु[पृ]ष्टमिति मत्वाह—मान्त्रवर्णिकेति ॥ अतिप्रसङ्गेन परिहरति—अन्नमयादीनामपीति ॥ पूर्वोक्तं पराभिप्रायमाह—अत्राहेत्यादिना ॥ तत्रभवान् पृष्टो व्याचष्टाम् । किं तस्मादन्योऽन्तर इत्येवंका:मश्रवणादतिरिक्तानभिधानं किं वा प्रकारान्तरेणाप्या-

१. T. Space is left out for writing पिता: . .. ...संबन्ध.

२. A omits निविष्ट:.

३. T. Space is left out for writing अतो.........विशेष्य

४. TM. पटस्थो.

५. T. Space is left out for writing विशिष्टो.........संस्का TM. माविशिष्टो.

६. T. Space is left out for writing आत्मा...मान्त्रवर्णि.

७. T, T¹, TM and P. समिति.

८. A. नामिति.

९. T. एवं कार्य. A. कारमन्त्रवर्णा.

१०. T. Space is left out for writing किं वा......रिक्तानभि.

भाष्यम्

प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गादिति । अत्रोच्यते—यद्यप्यन्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्मेति न श्रूयते, तथापि नानन्दमयस्य ब्रह्मत्वम्, यत आनन्दमयं प्रकृत्य श्रूयते "तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा" इति । तत्र यत्तद्ब्रह्म मन्त्रवर्णे प्रकृतम् "सत्यं ज्ञानमनन्तं ब्रह्म" इति, तदिह "ब्रह्म पुच्छं प्रतिष्ठा" इत्युच्यते । तद्विजिज्ञापयिषयैवान्नमयादय आनन्दमयपर्यन्ताः पञ्च कोशाः कल्प्यन्ते । तत्र कुतः प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गः । नन्वानन्दमयस्यावयवत्वेन "ब्रह्म पुच्छं प्रतिष्ठा" इत्युच्यते, अन्नमयादीनामिव "इदं पुच्छं प्रतिष्ठा" इत्यादि ; तत्र कथं ब्रह्मणः स्वप्रधानत्वं शक्यं विज्ञातुम् ?

प्रकटार्थविवरणम्

नभिधानमेवेति । आद्यमनुजानाति-यद्यपीति ॥ तथापि ने[1]तिरिक्तानभिधानम्, नाप्यानन्दमयस्य ब्रह्मत्वमिति योजना । उभयत्र हेतुमाह—यत इति ॥ ज्ञानकर्मफलभूतानन्दविशिष्टं भोक्तारं प्रक्रम्य प्रियाद्यवयवाभिधानादानन्द आत्मेत्य[2]ज्ञानप्रतिबिम्बितस्य चिद्धातोर्विशिष्टानुयायिनो बि[3]म्बभूतस्य च "ब्रह्म पुच्छं प्रतिष्ठा" इति पृथगभिधानादित्यर्थः । शुभकर्मोपस्थापितबाह्येष्टसन्दर्शने प्रतिबिम्बितमात्मचैतन्यं प्रियं सुखम्, तदनुस्मरणे प्रतिबिम्बितं मोदः, स एवाभ्यासात् प्र[4]कृष्टः प्रमोदः । तच्च बिम्बभूतचैतन्यमानन्दप्रियादिविशिष्टस्याहङ्कर्तुरात्मेत्यर्थः । यच्चोवाच अन्यथा प्र[5]कृतहानाप्रकृतप्रक्रियाप्रसङ्ग इति तत्राह—तत्र यत्तदिति ॥ अवयववाचिना पुच्छशब्देन समानाधिकृतस्य ब्रह्मशब्दस्य कथं स्वप्र[6]धानब्रह्मवाचकत्वमित्याह—नन्वानन्दमयस्येति ॥ परिहरति—

१. A. न स्ताति.

२. T. Space is left out for writing ज्ञान......मभिधाना.

३. A omits बिम्ब......तच्च.

४. T. Space is left out for writing त्प्रकृ......विशिष्ट.

५. T. प्रकृतप्रक्रिया.

६. T. Space is left out for writing धान......परिहरति.

### भाष्यम्

प्रकृतत्वादिति ब्रूमः । नन्वानन्दमयावयवत्वेनापि ब्रह्मणि विज्ञायमाने न प्रकृतत्वं हीयते, आनन्दमयस्य ब्रह्मत्वादिति; अत्रोच्यते—तथा सति तदेव ब्रह्म आनन्दमय आत्मावयवी, तदेव च ब्रह्म पुच्छं प्रतिष्ठावयव इत्यसामञ्जस्यं स्यात् । अन्यतरपरिग्रहे तु, युक्तम् "ब्रह्म पुच्छं प्रतिष्ठा" इत्यत्रैव ब्रह्मनिर्देश आश्रयितुम्, ब्रह्मशब्दसंयोगात्, नानन्दमयवाक्ये ब्रह्मशब्दसंयोगाभावादिति । अपि च "ब्रह्म पुच्छं प्रतिष्ठा" इत्युक्त्वेदमुच्यते "तदप्येष श्लोको भवति । असन्नेव स भवति । असत् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति"। अस्मिंश्च श्लोकेऽननुकृष्यानन्दमयं ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद्गम्यते "ब्रह्म पुच्छं प्रतिष्ठा" इत्यत्र ब्रह्मण एव स्वप्रधानत्व-

### प्रकटार्थविवरणम्

प्रकृतत्वादिति ॥ स्वप्रधानस्य ब्रह्मणः प्रकृतत्वाद्ब्रह्मशब्दात् तथैव प्रत्यभिज्ञायमानस्य पुच्छशब्दविरोधे सति एकस्मिन्वाक्ये प्रथमचरमश्रुतयोश्शब्दयोः प्रथमश्रुतस्या[१]संज्ञानविरोधित्वेन बलीयस्त्वात् पुच्छत्वे[२]नोपसर्जनत्वबाधया प्रधानप्रमितिपरता कल्प्यत इति भावः । प्र[३]कृतत्वमात्रमन्यथापि संभवतीत्याह—नन्विति ॥ तर्ह्येकस्यैव गुणत्वप्रधानत्वप्रसङ्ग[४] इत्याह—अत्रोच्यत[५] इति ॥ यदत्रोवाच केशवः—"न शब्देनेह पारमार्थिकोऽवयवावयविभावः । किन्तु कल्पनामात्रं तत्र सुखविशिष्टं ब्रह्मानन्दमयपदार्थः । तमेकं विग्रहं कृत्वा तदन्तर्गतं स्वरूपमवयवं कल्पयति" इति—तदपि मन्दम् । विशिष्टस्य क[६]ल्पितत्वोक्तेः आनन्दमयस्य मिथ्यात्वापातात् । न च भाष्यकारोऽप्यवयवावयविभावं तात्त्विकमवोचत्, येनायमुपालम्भो भवतीति । तत्र गुणप्रधानभावविरोधपरिहारायान्यतरस्मिन्वाक्ये [७]ब्रह्मप्रतिपादने वक्तव्ये[८] किं युक्तमित्याशङ्क्याह—अ[९]न्यतरेति ॥ निगमनश्लोकपर्यालोचनयापि ब्रह्मैव स्वप्रधानं प्रतिपाद्यमित्याह—

१. T. Space is left out for writing तस्या......त्वेनो.
२. A. पुच्छशब्दत्वेनो,
३. TM. कृत.
४. A. प्रसङ्गात्.
५. T. Space is left out for writing त इति......विभा.
६. T. Space is left out for writing कल्पि...पातात् । न.
७. T. Space is left out for writing ब्रह्म...निगमन.
८. TM. वक्तव्यं.
९. A. अन्यतर इति.

भाष्यम्

मिति । न चानन्दमयस्यात्मनो भावाभावशङ्का युक्ता, प्रियमोदादिविशिष्टस्यानन्दमयस्य सर्वलोकप्रसिद्धत्वात् । कथं पुनः स्वप्रधानं सद्ब्रह्म आनन्दमयस्य पुच्छत्वेन निर्दिश्यते "ब्रह्म पुच्छं प्रतिष्ठा" इति ? नैष दोषः । पुच्छवत् पुच्छम्, प्रतिष्ठा परायणमेकनीडं लौकिकस्यानन्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते, नावयवत्वम्, "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुत्यन्तरात् । अपि च आनन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्माभ्युपगन्तव्यम्;

प्रकटार्थविवरणम्

अपि चेति ॥ ननु तत्र ब्रह्मशब्देनानन्दमय एवोच्यत इत्याशङ्क्याह— न चानन्दमयस्येति ॥ किं तर्हि पुच्छशब्देन विवक्षितमित्यभिप्रेत्याह— कथं पुनरिति ॥ प्रतिष्ठाशब्दसामानाधिकरण्यादाधारत्वं विवक्षितमित्याह— नैष दोष इति ॥ ननु वृत्तिकारैरपि तैत्तिरीयकवाक्यं ब्रह्मण्येव समन्वितमङ्गीक्रियते; तत्र *किमुदाहरणान्तरम् [?] "दृश्यते त्वग्र्यया बुद्ध्या" इत्यादिकमप्यपास्तम्, सविशेषस्य मिथ्यात्वोक्तेः । किं च अशुद्धयोर्वाङ्मनसयोरगोचरो ब्रह्मेति प्रतिपादनेऽप्राप्तप्रतिषेधः स्यात् "अदृश्येऽनात्म्ये" इति प्रागेव प्रतिषेधाद्दृश्यतायाः । किं तु यत् सविशेषं तद्वाङ्मनसगोचरमिति व्याप्तेः व्यापकाभावाभिधानेन व्याप्याभावे पर्यवस्यति । नापि श्रुत्यन्तरबलेन सविशेषत्वम्; तद्धि निदिध्यासनाद्यापन्नैकाग्रचित्तसहकारिणा निर्विशेषब्रह्मात्मैकत्वपरेण शब्देन जनितायां बुद्धौ स्वप्रकाशत्वात् स्वगं प्रतिबिम्बितं निर्विशेषमेव भातीत्येवं परम्; न तस्य दृश्यतायां

* अत्र यथामातृकं मुद्रितम्; तच्च वाक्यं अनन्वितमिव प्रतिभाति । कदाचिदेवं स्यात्— "किमुदाहरणान्तरेणेत्यत आह—अपि चेति ॥ सविशेषमिति ॥ ततश्च दृश्यत्वेन मिथ्यात्वापत्तिरित्यर्थः । एतेन यदुक्तम् — "यतो वाचो निवर्तन्ते" इति रागादिदोषदूषितयोर्वाङ्मनसयोरगोचरं ब्रह्मेत्यर्थः । तथा च श्रुत्यन्तरम् ।" [See Brahmasūtrabhāṣya of Bhāskara : Ānandamayādhikaraṇa.]

१. T. Space is left out for writing इत्या .. प्रतिष्ठाशब्द.

२. A. कारेणापि.

३. T. Space is left out for writing ब्रह्मण्येव ......मिथ्यात्वोक्तेः.

४. A. मनसोः.

५. T, T[1], P and TM. चस्य.

६. T. Space is left out for writing अदृश्ये..... पर्यवस्यति । ना.

७. A. बित. T. space is left out for writing म्बितं...ष.

## भाष्यम्

निर्विशेषं तु ब्रह्म वाक्यशेषे श्रूयते, वाङ्मनसयोरगोचरत्वाभिधानात् "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चन" इति । अपि च आनन्दप्रचुर इत्युक्ते दुःखास्तित्वमपि गम्यते प्राचुर्यस्य लोके प्रतियोग्यल्पत्वापेक्षत्वात् । तथा च सति, "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति भूम्नि ब्रह्मणि तद्व्यतिरिक्ताभावश्रुतिरुपरुध्येत । प्रतिशरीरं च प्रियादिभेदादानन्दमयस्यापि भिन्नत्वम्; ब्रह्म तु न प्रतिशरीरं भिद्यते, "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यानन्त्यश्रुतेः; "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इति च श्रुत्यन्तरात् । न चानन्दमयस्याभ्यासः श्रूयते । प्रातिपदिकार्थमात्रमेव हि सर्वत्राभ्यस्यते "रसो वै सः । रसꣳ ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्" । "सैषानन्दस्य मीमाꣳसा भवति" "आनन्दं

## प्रकटार्थविवरणम्

सविशेषतायां पर्यवस्यति प्रधानविरोधात् । अतो निर्विशेषब्रह्मात्मैकत्व प्रमितये पुच्छवाक्यमुदाजहार भगवान्भाष्यकारः । इदानीं मयटः प्राचुर्यार्थत्वे दूषणान्तरमाह—अपि चेत्यादिना ॥ यदत्र वल्गितम्—यथा 'प्रचुरप्रकाशः सविता' इति निकृष्टव्यावृत्तये प्रयुज्यते, न तु तत्र तमसोऽप्यल्पताभिप्रायेण तथा संसारव्यावृत्तये ब्रह्माप्यानन्दप्रचुरमिति व्यपदिश्यते; अतो न दुःखाल्पतास्तित्वम्—इति, तदसत् । आनन्देन प्राचुर्यस्य प्रत्ययार्थस्य विशेषितत्वात् । येन च प्राचुर्यं विशेष्यते तत्प्रतियोगिनोऽल्पता प्रसिद्धा । यथा 'ब्राह्मणप्रचुरोऽयं ग्रामः' इत्युक्ते शूद्रस्याप्यल्पता गम्यते; सवितरि तु विपरीतं प्राचुर्यस्यैव प्रकाशविशेषणत्वात्; नेह प्राचुर्यमानन्दविशेषणं प्रत्ययार्थस्यैव प्राधान्यात् इति । आनन्दमयस्य ब्रह्मत्वाभावे हेत्वन्तरमाह—प्रतिशरीरं चेति ॥ अभ्यासादिति हेतुरप्यसिद्ध इत्याह—न चेति ॥ नन्वानन्दमयं प्रकृत्य प्राति-

१. T and T[1] add च.
२. A. सार्यात्मन्या.
३. A ततो.
४. TM. रुति पितरिव.
५. TM. विषयत्वात्.
६. A. हेतुं सूच्यसिद्धः.

## भाष्यम्

ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति" "आनन्दो ब्रह्मेति व्यजानात्" इति च । यदि च आनन्दमयशब्दस्य ब्रह्मविषयत्वं निश्चितं भवेत्, तत उत्तरेष्वानन्दमात्रप्रयोगेष्वप्यानन्दमयाभ्यासः कल्प्येत; न त्वानन्दमयस्य ब्रह्मत्वमस्ति, प्रियशिरस्त्वादिभिर्हेतुभिरित्यवोचाम; तस्मात् श्रुत्यन्तरे "विज्ञानमानन्दं ब्रह्म" इत्यानन्दप्रातिपदिकस्य ब्रह्मणि प्रयोगदर्शनात्, "यदेष आकाश आनन्दो न स्यात्" इति ब्रह्मविषयः प्रयोगो न त्वानन्दमयाभ्यास इत्यवगन्तव्यम् । यस्त्वयं मयडन्तस्यैवानन्दशब्दस्याभ्यासः "एतमानन्दमयमात्मानमुपसंक्रामति" इति, न तस्य ब्रह्मविषयत्वमस्ति; विकारात्मनामेवान्नमयादीनामनात्मनामुपसंक्रमितव्यानां प्रवाहे पठितत्वात् । नन्वानन्दमयस्योपसंक्रमितव्यस्यान्नमयादिवदब्रह्मत्वे सति नैव विदुषो ब्रह्मप्राप्तिः फलं निर्दिष्टं भवेत् । नैष दोषः, आनन्दमयोपसंक्रमणनिर्देशेनैव पुच्छप्रतिष्ठाभूतब्रह्मप्राप्तेः फलस्य निर्दिष्टत्वात्, "तदप्येष श्लोको भवति । यतो

## प्रकटार्थविवरणम्

पदिकाभ्यासोऽपि प्रकृतविषय एवेत्याशङ्क्याह—यदि चेति ॥ आनन्दमयस्य ब्रह्मत्वे सिद्धे प्रातिपदिकमात्राभ्यासोऽपि प्रकृतानन्दमयविषयः सिध्यति, ततश्च ब्रह्मतासिद्धिः इतीतरेतराश्रयमिति भावः । किंविषयस्तर्ह्यभ्यास इत्याशङ्क्य पुच्छवाक्योक्तब्रह्मविषय इत्याह—तस्मादिति ॥ ननु मयडन्तस्याप्यानन्दशब्दस्याभ्यासो दर्शित इत्याशङ्क्याह—यस्त्वयमिति ॥ उपसंक्रमितव्यानामिति ॥ विवेकेन त्याज्यानामित्यर्थः । विदुषः फलावाप्तयेऽयमुपक्रमः "एतमानन्दमयमात्मानमुपसङ्क्रामति" इत्यादिः । सा तर्हि नोक्तेत्याह — नन्विति ॥ उत्तरोत्तरपरिग्रहेणेह पूर्वपूर्वपरित्यागस्य सङ्क्रमणस्य विवक्षितत्वादानन्दमयपरित्यागाभिधानेन पुच्छप्रतिष्ठाभूतब्रह्मप्राप्तिरर्थादुक्तैवेत्याह—नैष दोष इति ॥ मन्त्रेण प्रपञ्च्यमानत्वाच्च न ब्रह्मप्राप्तिरनुक्तैवेत्याह—तदप्येष इति ॥

१. T and T[1] वाप्तोऽयं.

२. T and T[1] त्यागसंक्र.

३. TM adds न.

भाष्यम्

वाचो निवर्तन्ते" इत्यादिना च प्रपञ्च्यमानत्वात् । या त्वानन्दमयसंनिधाने "सोऽकामयत । बहु स्यां प्रजायेयेति।" इतीयं श्रुतिरुदाहृता सा "ब्रह्म पुच्छं प्रतिष्ठा" इत्यनेन संनिहिततरेण ब्रह्मणा संबध्यमाना नानन्दमयस्य ब्रह्मता प्रतिबोधयति । तदपेक्षत्वाच्चोत्तरस्य ग्रन्थस्य "रसो वै सः" इत्यादेर्नानन्दमयविषयता । ननु "सोऽकामयत" इति ब्रह्मणि पुंलिङ्गनिर्देशो नोपपद्यते । नायं दोषः, "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यत्र पुंलिङ्गेनाप्यात्मशब्देन ब्रह्मणः प्रकृतत्वात् । या तु भार्गवी वारुणी विद्या "आनन्दो ब्रह्मेति व्यजानात्" इति, तस्यां मयडश्रवणात्, प्रियशिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्मत्वम् । तस्मादणुमात्रमपि विशेषमनाश्रित्य न स्वत एव प्रियशिरस्त्वादि ब्रह्मण उपपद्यते । न चेह सविशेषं ब्रह्म प्रतिपिपादयिषितम्, वाङ्मनसगोचरातिक्रमणश्रुतेः । तस्मादन्नमयादिष्विवानन्दमयेऽपि विकारार्थ एव मयड्विज्ञेयः, न प्राचुर्यार्थः ॥

प्रकटार्थविवरणम्

यानि च वाक्यान्यानन्दमयस्य ब्रह्मतासमर्पकतयोदाहृतानि तानि पुच्छवाक्योक्तब्रह्मपराणि इत्याह—या त्वित्यादिना ॥ यत्त्वावादि आनन्दमयनिष्ठैव भार्गवी विद्येति तत्राह—या तु भार्गवीति ॥ पञ्चमपर्यायस्थत्वमप्रयोजकं केवलानन्दप्रातिपदिकार्थत्वमेव प्रयोजकमिति भावः । वृत्तिकारमतापाकरणमुपसंहरति—तस्मादिति ॥ तैत्तिरीयके नानन्दमयो ब्रह्म तद्गतमयडन्तवाच्यत्वात् नारायणोपनिषद्गतानन्दमयवदिति प्रयोगः—तत्र च "अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्" इति शुद्धिप्रार्थनादब्रह्मत्वं सिद्धम् । न चात्यन्तमनुमानानपेक्षा तद्व्यतिरेकेण संशयानपोहात् । न च गुणगुणिभावे प्रमाणमिति वर्णयिष्यामः ॥

१. A. ब्रह्मतथा.
२. A. तायो.
३. T and T[1] omit तानि.
४. A omits या तु भार्गवीति.
५. A omits प्रयोजकम्.
६. T. and T[1]. तत्राहुः.
७. T. अब्राह्मणत्वं.
८. T, T[1]. and P. अनपोहनं च गुण-

भाष्यम्

सूत्राणि त्वेवं व्याख्येयानि—"ब्रह्म पुच्छं प्रतिष्ठा" इत्यत्र किमानन्दमयावयवत्वेन ब्रह्म विवक्ष्यते, उत स्वप्रधानत्वेनेति। पुच्छशब्दादवयवत्वेनेति प्राप्त उच्यते—"आनन्दमयोऽभ्यासात्"। आनन्दमय आत्मेत्यत्र "ब्रह्म पुच्छं प्रतिष्ठा" इति स्वप्रधानमेव ब्रह्मोपदिश्यते; अभ्यासात् "असन्नेव स भवति" इत्यस्मिन्निगमनश्लोके ब्रह्मण एव केवलस्याभ्यस्यमानत्वात् ॥

"विकारशब्दान्नेति चेन्न प्राचुर्यात्"। विकारशब्दोऽवयवशब्दोऽभिप्रेतः; पुच्छमित्यवयवशब्दान्न स्वप्रधानत्वं ब्रह्मण इति यदुक्तम्, तस्य परिहारो वक्तव्यः। अत्रोच्यते—नायं दोषः, प्राचुर्यादप्यवयवशब्दोपपत्तेः; प्राचुर्यं प्रायापत्तिः, अवयवप्राये वचनमित्यर्थः; अन्नमयादीनां हि शिरआदिषु पुच्छान्तेष्ववयवेषूक्तेष्वानन्दमयस्यापि शिरआदीन्यवयवान्तराण्युक्त्वा अवयवप्रायापत्त्या "ब्रह्म पुच्छं प्रतिष्ठा" इत्याह, नावयवविवक्षया; यत्कारणमभ्यासादिति स्वप्रधानत्वं ब्रह्मणः समर्थितम् ॥

"तद्धेतुव्यपदेशाच्च"। सर्वस्य हि विकारजातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते—"इदꣳ सर्वमसृजत। यदिदं किं च" इति। न च कारणं सत् ब्रह्म स्वविकारस्यानन्दमयस्य मुख्यया वृत्त्यावयव उपपद्यते। पराण्यपि सूत्राणि यथासंभवं पुच्छवाक्यनिर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्यानि ॥

प्रकटार्थविवरणम्

एवं तावत्परमतं निराकृत्य स्वमतानुसारेण सूत्राणि योजयितुमुपक्रमते—सूत्राणि त्वेवमिति ॥ पूर्वत्र ईक्षत्यादेः मुख्यत्वबलेन चेतने समन्वयं न्यरूरूपत्। तेनैव न्यायेन पुच्छशब्दस्यापि अवयवे मुख्यत्वात् आनन्दमयस्य प्रतिपाद्यस्योपसर्जनं ब्रह्मेति पूर्वः[1] पक्षः। अभ्यासलक्षणतात्पर्यलिङ्गावगमात्, अप्रधानस्य श्लोकेन निगमनानुपपत्तेश्चासञ्जातविरोधितया प्रथमश्रुतस्य बलीयस्त्वाच्च प्रधाने ब्रह्मणि समन्वय इति सिद्धान्तः। न च नैवं सूत्रार्थ इति राज्ञामाज्ञा व्यज्ञायि वेदाज्ञा वा। न चान्यैरनुक्तत्वान्नायं सूत्रार्थ इति वाच्यम्; अन्योक्तस्याप्यास्माकीनैरनुक्तत्वादसूत्रार्थत्वप्रसङ्गात्; तस्मान्न्यायसहिष्णोरेवागमार्थस्य, सूचकत्वात्सूत्राणाम्, अन्यथा विचारानारम्भप्रसङ्गात् अध्याहारेणापि व्याख्यानं समञ्जसम् ॥ पराण्यपीति ॥ अस्यायमर्थः—

१. T, T[1] and P. पूर्वपक्षः.

प्रकटार्थविवरणम्

इतश्च नानन्दमयो वाक्यार्थः । ["मान्त्रवर्णिकमेव च गीयते"॥] यतो यन्मन्त्रवर्णेनोक्तं ब्रह्म तदानन्दमयशब्देन विशिष्टपरामर्श[शके]न लक्ष्यमाणजीवचैतन्यस्य स्वरूपमिति गीयते "ब्रह्म पुच्छं प्रतिष्ठा" इत्यनेन "तत्त्वमसि" इतिवत् । कथमवगम्यते ? "ब्रह्मविदाप्नोति परम्" इति ब्रह्मविदो ब्रह्मप्राप्त्यभिधानेन ब्रह्मात्मनोरैक्योपक्रमादन्यज्ञानादन्यस्यान्यभावानुपपत्तेः । तथा "स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः।" इत्येकत्वोपसंहारात् मध्येऽपि विशिष्टपरामर्शेन स्वरूपैक्ये तात्पर्यमवसीयते ॥

["नेतरोऽनुपपत्तेः"] इतश्च निर्विशेषब्रह्मात्मैक्यमेवात्र प्रतिपाद्यते, नेतर आनन्दमयः । कुतः ? तस्मिन् सविशेषे प्रतिपाद्यमाने वाक्यशेषे "अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने" इति सकलविशेषप्रतिषेधपरामर्शानुपपत्तेः ॥

इतश्च निर्विशेषब्रह्मात्मैक्यपरमेव तैत्तिरीयकम्, "भेदव्यपदेशाच्च" इति स्वल्पस्यापि भेदस्य निन्दाव्यपदेशात् "उदरमन्तरं कुरुते । अथ तस्य भयं भवति।" इति ॥

ननु भृगुवल्ल्यामानन्दस्य ब्रह्मत्वदर्शनादानन्दमयस्यापि ब्रह्मत्वमनुमीयेत इत्याशङ्क्याह—"कामाच्च नानुमानापेक्षा" इति । काम्यत इति काम आनन्दः, तस्य ब्रह्मत्वदर्शनान्नानुमानेनानन्दमयस्यापि ब्रह्मत्ववाञ्छा कार्या विकारार्थमयट्विरोधादित्यर्थः ॥

ननु "आनन्दं ब्रह्मणो विद्वान्" इति भेदनिर्देशात् सविशेषं ब्रह्मावगम्यत इत्याशङ्क्याह— "अस्मिन्नस्य च तद्योगं शास्ति" अस्मिन्प्रकरणवति प्रतिबुद्धस्यास्य जीवस्य तद्योगं मोक्षं शास्ति तच्छास्त्रम्; न च सविशेषज्ञानान्मिथ्यार्थावलम्बनान्मोक्ष उपपद्यते । तस्मात् 'राहोः शिरः' इतिवदौपचारिको भेदनिर्देश इति निर्विशेषब्रह्मात्मैकत्वपरमेव वाक्यमिति स्थितम् ॥

१. A. अयं.
२. A. वक्ष्य.
३. TM omits अन्यज्ञानात्.
४. T and T¹ ब्रह्मदर्श.
५. T and T¹ काम इति.
६. TM. वाञ्छाता.

भाष्यम्

## अन्तस्तद्धर्मोपदेशात् ॥ १-१-२० ॥

इदमाम्नायते—"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः" "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद···इत्यधिदैवतम्" "अथाध्यात्मम्···अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इत्यादि । तत्र संशयः—किं विद्याकर्मातिशयवशात्प्राप्तोत्कर्षः कश्चित् संसारी सूर्यमण्डले चक्षुषि चोपास्यत्वेन श्रूयते किं वा नित्यसिद्धः परमेश्वर इति । किं तावत् प्राप्तम्? संसारीति । कुतः? रूपवत्त्वश्रवणात् ।

प्रकटार्थविवरणम्

### अन्तस्तद्धर्मोपदेशात ॥

अस्य विषयवाक्यं छान्दोग्यगतं पठति—इदमाम्नायत इति ॥ आदित्यमण्डलस्यान्तर्मध्ये हिरण्मय इति ज्योतिर्मयः पुरुषो दृश्यते समाहितचित्तैरित्यर्थः । हिरण्मयानि ज्योतिर्मयान्येवास्य श्मश्रूणि केशाश्चेति तथोक्तः । प्रणखो नखाग्रम् । तेन सह[1] सर्व एव ज्योतिर्मयः । ज्योतिर्मयस्याप्यक्ष्णोर्विशेषः । कपेर्मर्कटस्यासः पृष्ठभागोऽत्यन्ततेजस्वी तत्सदृशं पुण्डरीकं यथात्यन्तदीप्तिमदेवमस्य पुरुषस्या[2]क्षिणी अत्यन्तदीप्तिमती । कथं तस्योन्नामत्वमिति स्वयं निर्वक्ति—सर्वेभ्यः पाप्मभ्यः उत् इतः[3] उद्गतः सकार्यसकलपाप्मासंस्पृष्ट[4] इत्यर्थः । रूपवत्त्वश्रवणात् सर्वपापासंस्पर्शश्रवणाच्च संशयमाह—तत्रेति[5] ॥ पूर्वाधिकरणन्यायेन रूपवत्त्वस्य प्रथमश्रुतत्वाच्चरमश्रुतस्य पाप्मातिक्रमस्य देवतायाः कर्माधिकाराभावेनाप्युपपत्तेः आदित्यक्षेत्रज्ञ उपास्य[6] इति पूर्वपक्षमाह—किं ताव-

१. A omits सह.
२. TM omits पुरुषस्य.
३. TM omits उत् इतः
४. A. संसृष्टः
५. A adds तत्र.
६. A omits उपास्यः.

भाष्यम्

आदित्यपुरुषे तावत् "हिरण्यश्मश्रुः" इत्यादि रूपमुदाहृतम्; अक्षिपुरुषेऽपि तदेवातिदेशेन प्राप्यते "तस्यैतस्य तदेव रूपं यदमुष्य रूपम्" इति। न च परमेश्वरस्य रूपवत्त्वं युक्तम्, "अशब्दमस्पर्शमरूपमव्ययम्" इति श्रुतेः; आधारश्रवणाच्च "य एषोऽन्तरादित्ये" "य एषोऽन्तरक्षिणि" इति। न ह्यनाधारस्य स्वमहिमप्रतिष्ठस्य सर्वव्यापिनः परमेश्वरस्याधार उपदिश्येत। "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इति, "आकाशवत्सर्वगतश्च नित्यः" इति च श्रुती भवतः। ऐश्वर्यमर्यादाश्रुतेश्च "स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" इत्यादित्यपुरुषस्यैश्वर्यमर्यादा। "स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च" इत्यक्षिपुरुषस्य। न च परमेश्वरस्य मर्यादावदैश्वर्यं युक्तम्; "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" इत्यविशेषश्रुतेः। तस्मान्नाक्ष्यादित्ययोरन्तः परमेश्वर इत्येवं प्राप्ते ब्रूमः—

प्रकटार्थविवरणम्

दित्यादिना॥ इतश्च नेश्वरपरिग्रह इत्याह—आधारश्रवणाच्चेति॥ स्वमहिमप्रतिष्ठत्वे स्वतन्त्रत्वे सर्वव्यापित्वे च प्रमाणमाह स भगव इति॥ परमेश्वरापरिग्रहे हेत्वन्तरमाह ऐश्वर्यमर्यादेति॥ अमुष्मादादित्यादूर्ध्वगता ये लोकाः तेषामीशिता भवति। देवानां ये कामा भोगाः तेषां चेत्यर्थः। एतस्मादाध्यात्मिकात्। परमेश्वरस्याप्युपासनार्थं मर्यादावदैश्वर्यं किमिति न भवतीत्याशङ्क्याह—न चेति॥ "एष सर्वेश्वरः" इत्यविशेषश्रुतेरित्यन्वयः। कथमस्य सर्वेश्वरत्वमुच्यते, यतो भूतानां नियन्ता यमोऽस्ति भूतपालश्च इन्द्रादिरित्याशङ्क्य सोऽप्ययमेवेत्युक्तम्। सेतुरिव विधारयिता असंभेदाय असङ्करायेत्यर्थः। पूर्वपक्षमुपसंहृत्य सिद्धान्तसूत्रमवतार्य व्याचष्टे—तस्मादित्यादिना॥ प्रथमश्रुतस्यापि रूपवत्त्वस्यापि सर्वपापातिक्रमस्य सप्रयोजनत्वात् प्राबल्यमित्यक्ष्यादित्ययोरन्तः परमेश्वर एवोपास्यः। इहाधिकाराभावेऽपि जन्मान्तर-

## भाष्यम्

"अन्तस्तद्धर्मोपदेशात्" इति । "य एषोऽन्तरादित्ये" "य एषोऽन्तरक्षिणि" इति च श्रूयमाणः पुरुषः परमेश्वर एव, न संसारी । कुतः? तद्धर्मोपदेशात् । तस्य हि परमेश्वरस्य धर्मा इहोपदिष्टाः । तद्यथा "तस्योदिति नाम" इति श्रावयित्वा तस्यादित्यपुरुषस्य नाम "स एष सर्वेभ्यः पाप्मभ्य उदितः" इति सर्वपाप्मापगमेन निर्वक्ति । तदेव च कृतनिर्वचनं नामाक्षिपुरुषस्याप्यतिदिशति "यन्नाम तन्नाम" इति । सर्वपाप्मापगमश्च परमात्मन एव श्रूयते "य आत्मापहतपाप्मा" इत्यादौ । तथा चाक्षुषे पुरुषे सैव ऋक् तत् साम तदुक्थं तद्यजुस्तद्ब्रह्म" इत्यृक्सामाद्यात्मकतां निर्धारयति । सा च परमेश्वरस्योपपद्यते, सर्वकारणत्वात् सर्वात्मकत्वोपपत्तेः । पृथिव्यग्न्याद्यात्मके चाधिदैवतं ऋक्सामे, वाक्प्राणाद्यात्मके चाध्यात्ममनुक्रम्याह "तस्यर्क्च साम च गेष्णौ" इत्यधिदैवतम् । तथाध्यात्ममपि "यावमुष्य गेष्णौ तौ गेष्णौ"

## प्रकटार्थविवरणम्

सञ्चितपापसंभवात् पश्वादीनामपि कर्माधिकाराभावाविशेषात् "न ह वै देवान् पापं गच्छति" इत्यस्य पापाल्पत्वाभिप्रायात् न संसारी सर्वपापासंस्पृष्ट इति भावः । किञ्च सर्वात्मत्वमपि श्रूयमाणं न संसारिपक्षे घटत इत्याह तथा चाक्षुष इति ॥ ऋगधिदैवं पृथिव्यन्तरिक्षद्युनक्षत्रात्मिका अध्यात्मं च वाक्चक्षुश्श्रोत्राक्ष्णः शुक्लं भालक्षणा । सैव पुरुष एवेत्यर्थः । तत्साम अधिदैवमग्निर्वाय्वादित्यचन्द्रलक्षणम् अध्यात्मं च प्राणच्छायात्ममनःपरः कृष्णात्मकः पुरुषः । एवमुक्थं स्तोत्रविशेषः; यजुः स्वाहास्वधावषडादि; ब्रह्म त्रयो वेदाः । इतश्चेश्वरपरिग्रह एव युक्त इत्याह—पृथिव्यग्न्याद्यात्मके चेति ॥ "इयमेवर्गग्निः साम" इत्यादिनाध्यात्ममनुक्रम्य तथाविधे ऋक्सामे गेष्णौ पर्वणी इत्याह । किञ्च लौकिकेष्वपि गानेष्वक्ष्यादित्यपुरुषस्यैव गीयमानत्वं यद्दर्शयति तदपि

१ T and T[1] श्रूयमाणसंसारि.

२. T and T[1] omit न.

३. A. त्मकं च.

४. T and T[1]. Space is left out for writing लक्षणा सैव.

५. T and T[1]. Space is left out for writing ग्निर्वाय्वादित्य.

### भाष्यम्

इति । तच्च सर्वात्मन एवोपपद्यते । "तद्य इमे वीणायां गायन्त्येतं त्वेव ते गायन्ति तस्मात्ते धनसनयः" इति च लौकिकेष्वपि गानेष्वस्यैव गीयमानत्वं दर्शयति । तच्च परमेश्वरपरिग्रहे घटते,

"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥"

इति भगवद्गीतादर्शनात् । लोककामेशितृत्वमपि निरङ्कुशं श्रूयमाणं परमेश्वरं गमयति । यत्तूक्तं हिरण्यश्मश्रुत्वादिरूपश्रवणं परमेश्वरे नोपपद्यत इति, अत्र ब्रूमः—स्यात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम् ।

"माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि ॥"

### प्रकटार्थविवरणम्

सर्वात्मकेश्वरपरिग्रहे घटते इत्याह—तद्य इत्यादिना ॥ धनसनयः धनलाभवन्तः; श्रीमत् शोभायुक्तम्; ऊर्जितं बलवत्; लोककामेशित्वमप्यनन्याधीनं न संसारिणो घटत इत्यर्थः । रूपविशेषश्रवणं च नैकान्ततो जीवलिङ्गमित्याह—अत्र ब्रूम इति ॥

यदत्र भास्करो व्याजहार, "पारमार्थिकमेवेदं यथाभूतार्थज्ञापकत्वाच्छास्त्रस्य" इति तत् शास्त्रार्थानभिज्ञविजृम्भितम् । योषिदादेरग्न्यादिभावस्यापि तथात्वापातात् । स्वप्नसृष्टेरपि च पारमार्थिकत्वप्रसङ्गात् ॥

यदत्रामृतानन्दो जगाद "मायापि सत्यैव" इति तदप्यसत् । "नासदासीन्नो सदासीत्तम आसीत्" इति जगत्प्रागवस्थायां मायायाः सदसद्वैलक्षण्येनानिर्वाच्यतावगमादिति ॥

१. A. सर्वात्मेश्वर.
२. TM. ग्रन्थे A adds एव.
३. A. इत्याह.
४. T, $T^{1}$, TM. and A. विजृम्भितयो.

भाष्यम्

इति स्मरणात् । अपि च, यत्र तु निरस्तसर्वविशेषं पारमेश्वरं रूपमुपदिश्यते, भवति तत्र शास्त्रम् "अशब्दमस्पर्शमरूपमव्ययम्" इत्यादि । सर्वकारणत्वात्तु विकारधर्मैरपि कैश्चिद्विशिष्टः परमेश्वर उपास्यत्वेन निर्दिश्यते "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" इत्यादिना । तथा हिरण्यश्मश्रुत्वादिनिर्देशोऽपि भविष्यति । यदप्याधारश्रवणान्न परमेश्वर इति, अत्रोच्यते—स्वमहिमप्रतिष्ठस्याप्याधारविशेषोपदेश उपासनार्थो भविष्यति; सर्वगतत्वाद्ब्रह्मणो व्योमवत्सर्वान्तरत्वोपपत्तेः । ऐश्वर्यमर्यादाश्रवणमप्यध्यात्माधिदैवतविभागापेक्षमुपासनार्थमेव । तस्मात् परमेश्वर एवाक्ष्यादित्ययोरन्तरुपदिश्यते ॥

## भेदव्यपदेशाच्चान्यः ॥ १-१-२१ ॥

अस्ति चादित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्या-

प्रकटार्थविवरणम्

यच्चोक्तं शास्त्रमशब्दमित्यादि तन्निर्विशेषपरमित्याह— अपि चेति ॥ उपासनाभागेऽपि नात्यन्तासदारोप इत्याह—सर्वकारणत्वात्त्विति ॥ ननूपासनार्थः किमित्याधारोपदेशः साक्षादेव किं न भवतीत्याशङ्क्याह सर्वगतत्वादिति ॥ यदुक्तं मर्यादावदैश्वर्यमिति तत्राह —ऐश्वर्येति ॥ एकस्यैवेश्वरस्याध्यात्माधिदैवतावच्छेदेन यदैश्वर्यमर्यादाकरणं तत्पृथगनुचिन्तनार्थम्, न तु परिच्छेदप्राप्त्यर्थमित्यर्थः ॥

भेदव्यपदेशाच्चान्यः ॥

ननूपास्योद्देशेनोपासनविधानात् विधीयमानक्रियाकर्मकारकस्य व्रीह्यादिवत् अन्यतः सद्भावसिद्धिः वक्तव्येत्याशङ्क्याह भेदव्यपदेशाच्चान्य इति ॥

१. TM. नार्थं.
२. T, T[1], TM and P स्यात्माधिदैव.
३. T, T[1], P and TM. कारणं.
४. A. न तूपासनस्योपदेशो.
५. A omits विधानात्.

भाष्यम्

दित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः” इति श्रुत्यन्तरे भेदव्यपदेशात् । तत्र हि “आदित्यादन्तरो यमादित्यो न वेद” इति वेदितुरादित्याद्विज्ञानात्मनोऽन्योऽन्तर्यामी स्पष्टं निर्दिश्यते । स एवेहाप्यन्तरादित्ये पुरुषो भवितुमर्हति, श्रुतिसामान्यात् । तस्मात् परमेश्वर एवेहोपदिश्यत इति सिद्धम् ॥

## आकाशस्तल्लिङ्गात् ॥ १-१-२२ ॥

इदमामनन्ति “अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्” इति । तत्र संशयः—किमाकाशशब्देन परं ब्रह्माभिधीयत उत भूताकाशमिति । कुतः संशयः? उभयत्र प्रयोगदर्शनात् । भूतविशेषे तावत् सुप्रसिद्धो लोक-

प्रकटार्थविवरणम्

आदित्यक्षेत्रज्ञादन्तर्यामिणः श्रुत्यन्तरे भेदव्यपदेशात् सिद्धोऽन्य ईश्वर इत्यर्थः । ननु तत्रादित्यशब्देन तन्मण्डलमुच्यते, न तन्नियन्ता क्षेत्रज्ञ एवेत्याशङ्क्याह—तत्र हीति ॥ मण्डलस्याचेतनस्य वेदनप्राप्त्यभावात् प्रतिषेधायोगात् प्राप्तवेदनात् जीवादन्य ईश्वरस्तत्रोच्यत इत्यर्थः । ननु तथापि प्रत्यभिज्ञापकाभावान्न तस्योपासनमिह विधातुं शक्यमित्याशङ्क्याह—स एवेहापीति ॥ आदित्यान्तरत्वश्रुतिसाम्येन प्रत्यभिज्ञायमान ईश्वर उद्गीथ उपास्यत्वेनोपदिश्यत इत्युपसंहरति—तस्मादिति ॥

### आकाशस्तल्लिङ्गात् ॥

छान्दोग्यगतमेव विषयवाक्यं पठति—इदमामनन्तीत्यादिना ॥ संशयं तत्कारणं चाह—तत्रेत्यादिना ॥ असाधारणेनानन्देन सामानाधिकरण्यादाकाशो ब्रह्मेत्यर्थः । ते नामरूपे यदन्तरा यस्य मध्ये वर्तेते तन्नामरूपासंस्पृष्टं

१. A omits तत्.
२. A. एवेति । इहापीति.
३. A. यमानमीश्वरमीश्वरः.

भाष्यम्

वेदयोराकाशशब्दः। ब्रह्मण्यपि क्वचित्प्रयुज्यमानो दृश्यते, यत्र वाक्यशेषवशादसाधारणगुणश्रवणाद्वा निर्धारितं ब्रह्म भवति—यथा "यदेष आकाश आनन्दो न स्यात्" इति "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति चैवमादौ। अतः संशयः। किं पुनरत्र युक्तम्? भूताकाशमिति। कुतः? तद्धि प्रसिद्धतरेण प्रयोगेण शीघ्रं बुद्धिमारोहति। न चायमाकाशशब्द उभयोः साधारणः शक्यो विज्ञातुम्, अनेकार्थत्वप्रसङ्गात्। तस्माद्ब्रह्मणि गौण आकाशशब्दो भवितुमर्हति। विभुत्वादिभिर्हि बहुभिर्धर्मैः सदृशमाकाशेन ब्रह्म भवति। न च मुख्यसंभवे गौणोऽर्थो ग्रहणमर्हति। संभवति चेह मुख्यस्यैवाकाशस्य ग्रहणम्। ननु भूताकाशपरिग्रहे वाक्यशेषो नोपपद्यते "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिः। नैष दोषः, भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वोपपत्तेः। विज्ञायते हि "तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायो-

प्रकटार्थविवरणम्

ब्रह्मेति वाक्यशेषात् अत्रापि ब्रह्माकाशशब्दमित्याह—आकाशो वै नामेति॥ प्रसिद्धावद्योतकौ निपातौ[1]। संशयमुक्त्वा पूर्वपक्षं गृह्णाति–किं पुनरत्रेति॥ पूर्वत्र प्रथमश्रुताल्लिङ्गात् सप्रयोजनं चरमश्रुतं लिङ्गं बलीय इत्युक्तम्। इह त्वाकाश इति श्रुतिरियं प्रथमश्रुताचेतन[ति त]यैव चरमश्रुतं[2] ब्रह्मलिङ्गमवबाधनीयम्। अतो भूताकाशदृष्टिविशिष्टोद्गीथोपासनं विधीयत इति पूर्वः पक्षः। ननु नाकाशश्रुतिर्ब्रह्मलिङ्गबाधिका, ब्रह्मण्यपि साधारणत्वादाकाशशब्दस्येत्याशङ्क्याह—न चायमिति॥ एकस्यापि गोशब्दस्यानेकार्थत्वमनन्यथासिद्धप्रयोगप्रत्ययाभ्याम्; ब्रह्मणि नान्यथासिद्धिर्[1]गौण्यापि प्रयोगसंभवादित्याह—तस्मादिति॥ भवतु गौणः, ततः किमित्यत आह—न चेति॥ मुख्यासंभवमाशङ्क्य परिहरति—ननु भूताकाशस्येत्यादिना॥ तथापि[2] "आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इति वाक्यशेषः कथं भूताकाशे घटत इत्याशङ्क्याह—

१. A. द्योतकेन निपातेन
२. A omits चरमश्रुतं

१. A omits नान्यथासिद्धिः
२. T, $T^1$, P and TM. तथाहि

भाष्यम्

रभिः" इत्यादि । ज्यायस्त्वपरायणत्वे अपि भूतान्तरापेक्षयोपपद्येते भूताकाशस्यापि । तस्मादाकाशशब्देन भूताकाशस्य ग्रहणमित्येवं प्राप्ते ब्रूमः—

"आकाशस्तल्लिङ्गात्" । आकाशशब्देन ब्रह्मणो ग्रहणं युक्तम् । कुतः? तल्लिङ्गात् । परस्य हि ब्रह्मण इदं लिङ्गम् "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति । परस्माद्धि ब्रह्मणो भूतानामुत्पत्तिरिति वेदान्तेषु मर्यादा । ननु भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वं दर्शितम् । सत्यं दर्शितम्; तथापि मूलकारणस्य ब्रह्मणोऽपरिग्रहादाकाशादेवेत्यवधारणम्, सर्वाणीति च भूतविशेषणं नानुकूलं स्यात् । तथा "आकाशं प्रत्यस्तं यन्ति" इति ब्रह्मलिङ्गम् "आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इति च ज्यायस्त्वपरायणत्वे । ज्यायस्त्वं ह्यनापेक्षिकं परमात्मन्येवैकस्मिन्नाम्नातम्

प्रकटार्थविवरणम्

ज्यायस्त्वेति ॥ महत्त्वाश्रयत्वे वाय्वाद्यपेक्षया भूताकाशस्य सुप्रसिद्धे[1] इत्यर्थः । यस्मान्मुख्ये बाधकं नास्ति तस्मादित्युपसंहारः । सिद्धान्तत्वेन सूत्रं योजयति—आकाशशब्देनेति ॥ जन्मादिसूत्रे जगज्जन्मादिकारणत्वस्य ब्रह्मलक्षणत्वेनावधारितत्वादिहापि तद्दर्शनादाकाशस्य ब्रह्मत्वनिश्चय इति भावः। अन्यथासिद्धिं स्मारयति—नन्विति ॥ परिहरति—सत्यमिति ॥ आकाशशब्देन त्वया मूलकारणस्याङ्गीकृतत्वादवान्तरकारणत्वापेक्षयावधारणं न संभवति । वाय्वादीनामप्यवान्तरकारणत्वादाकाशस्यापि सर्वभूतान्तर्गतत्वात् स्वयमेव स्वस्य कारणत्वानुपपत्तेः । ततो व्यतिरिक्तानां ग्रहणे सर्वाणीति विशेषणं नानुकूलं स्यादित्यर्थः । तथा सर्वभूतप्रलयाधारत्वम्, निरतिशयमहत्त्वम्, स्थितावपि पराश्रयत्वमित्येतान्यपि ब्रह्मलिङ्गानि दृश्यन्त इत्याह—तथाकाशमित्यादिना ॥ दातेः कर्मफलस्य दातुरीश्वरशब्दवाच्यस्य मायायां चित्प्रतिबिम्बस्य परायणं

१. A. सिद्धिः

## भाष्यम्

"ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" इति । तथा परायणत्वमपि परमकारणत्वात्परमात्मन्येवोपपन्नतरम् । श्रुतिश्च भवति "विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्" इति । अपि चान्तवत्त्वदोषेण शालावत्यस्य पक्षं निन्दित्वा, अनन्तं किंचिद्वक्तुकामेन जैवलिना आकाशः परिगृहीतः ; तं चाकाशमुद्गीथे संपाद्योपसंहरति "स एष परोवरीयानुद्गीथः स एषोऽनन्तः" इति । तच्चानन्त्यं ब्रह्मलिङ्गम् । यत्पुनरुक्तं भूताकाशं प्रसिद्धिबलेन प्रथमतरं प्रतीयत इति, अत्र ब्रूमः—प्रथमतरं प्रतीतमपि सत् वाक्य-

## प्रकटार्थविवरणम्

विम्बस्थानीयं ब्रह्मेत्यर्थः । ब्रह्मणो लिङ्गान्तरमाह—अपि चेति ।। सिलकः शालावत्यः, चैकितायनो दाल्भ्यः, प्रवाहणो जैवलिः इत्येते त्रय उद्गीथविद्यायां निपुणा विचारमारेभिरे—'किं परायणमुद्गीथस्य' इति । तत्र स्वर्गलोक एव परायणमुद्गीथस्येति दाल्भ्यस्य पक्षं प्रतिक्षिप्य, अयं लोकः परायणमिति पक्षं शालावत्यो जग्राह । तमुवाच प्रवाहणः "अन्तवद्वै किल ते शालावत्य साम" इति । प्रकृतत्वादुद्गीथः। तदेतदाह-अन्तवत्त्वदोषेणेति।। परस्पर[?]परेभ्योऽतिशयेन वरः परोवरीयान् स एष आकाशाभिन्न उद्गीथ ओङ्कारः । स एषोऽनन्त इत्यानन्त्यमेवोपसंहराति। तच्चानन्त्यं देशतः कालतो वस्तुतश्चानवच्छिन्नत्वं न ब्रह्मणोऽन्यस्योपपद्यते । अस्यायमाशयः—प्रथमश्रुतायाः श्रुतेरपि चरमश्रुतं प्रतिपिपादयिषितं लिङ्गं तात्पर्याद्बलीयो भवति । अतः समस्तजगत्प्रकृतित्वावधारणाभ्यामुपबृंहितमन्तवत्त्वदोषपरिजिहीर्षया प्रतिपिपादयिषितमानन्त्यमाकाशश्रुतिमपोह्य ब्रह्म समर्पयतीति न्यायान्तरदिदर्शयिषया निरस्तमप्युद्भावयति—यत्पुनरुक्तमिति ।। "त्यजेदेकं कुलस्यार्थे" इति न्यायेन भूयसीनां ब्रह्मलिङ्गसमर्पकश्रुतीनामनुग्रहायाकाशश्रुतेरेकस्या भङ्गो युक्त इत्याह— अत्र ब्रूम इति।।

१. T and T[1]. Space is left out for त्रय उद्गीथविद्यायां

२. A omits पक्षं

३. A and TM. परम्परं

४. A omits उद्गीथः

५. A. पुरुषो

६. A. इत्यानन्त्यं देशतः

भाष्यम्

शेषगतान्ब्रह्मगुणान्दृष्ट्वा न परिगृह्यते । दर्शितश्च ब्रह्मण्यप्याकाशशब्दः— "आकाशो वै नाम नामरूपयोर्निर्वहिता" इत्यादौ । तथाकाशपर्यायवाचिनामपि ब्रह्मणि प्रयोगो दृश्यते "ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदुः" "सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता" "ॐ कं ब्रह्म खं ब्रह्म" "खं पुराणम्" इति चैवमादौ । वाक्योपक्रमेऽपि वर्तमानस्याकाशशब्दस्य वाक्यशेषवशाद्युक्ता ब्रह्मविषयत्वावधारणा । 'अग्निरधीतेऽनुवाकम्' इति हि वाक्योपक्रमगतोऽप्यग्निशब्दो माणवकविषयो दृश्यते । तस्मादाकाशशब्दं ब्रह्मेति सिद्धम् ॥

## अत एव प्राणः ॥ १-१-२३ ॥

उद्गीथे "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" इत्युपक्रम्य श्रूयते "कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि

प्रकटार्थविवरणम्

किं चाकाशशब्दस्य तत्पर्यायाणां च ब्रह्मणि प्रयोगप्राचुर्यदर्शनादत्यन्ताभ्यासेन गौणा प्रथमप्रतिपत्तिर्न विरुध्यत इत्याह—दर्शितश्चेत्यादिना ॥ व्योमन्निति ॥ व्योम्नि परमेऽक्षरे ब्रह्मणि ऋचो वर्तन्ते। यस्मिन् अक्षरे विश्वे देवा अधि निषेदुः अधिश्रिता इत्यर्थः। किञ्च तत्रैव प्रथमानुगुण्येनोत्तरं नीयते यत्र तदन्यथाकर्तुं शक्यम् । यत्र तु न शक्यं तत्रोत्तरानुगुण्येनैव प्रथमं नीयत इत्याह—वाक्योपक्रमेऽपीति ॥ यस्मादाकाशश्रुतिर्गौणी तस्मादित्युपसंहारः ॥

अत एव प्राणः ॥

उद्गीथोपासनप्रसङ्गेन प्रस्तावदेवताया उपासनमुक्तमिति वीक्षयाह—उद्गीथ इति ॥ उद्गीथप्रकरणे श्रूयत इत्यन्वयः । प्रस्तावं सामभक्तिविशेष-

१. TM. ब्रह्मण्यवचो.

२. T, T[1], P and TM. प्रथमागतान्

३. A omits यत्र तु न शक्यम्.

## भाष्यम्

भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता" इति । तत्र संशयनिर्णयौ पूर्ववदेव द्रष्टव्यौ । "प्राणबन्धनं हि सोम्य मनः" "प्राणस्य प्राणम्" इति चैवमादौ ब्रह्मविषयः प्राणशब्दो दृश्यते; वायुविकारे तु प्रसिद्धतरो लोकवेदयोः; अत इह प्राणशब्देन कतरस्योपादानं युक्तमिति भवति संशयः । किं पुनरत्र युक्तम्? वायुविकारस्य पञ्चवृत्तेः प्राणस्योपादानं युक्तम् । तत्र हि प्रसिद्धतरः प्राणशब्द इत्यवोचाम । ननु पूर्ववदिहापि तल्लिङ्गात् ब्रह्मण एव ग्रहणं युक्तम् । इहापि वाक्यशेषे भूतानां संवेशनोद्गमनं पारमेश्वरं कर्म प्रतीयते । न, मुख्येऽपि प्राणे भूतसंवेशनोद्गमनस्य दर्शनात् । एवं ह्याम्नायते—"यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते" इति । प्रत्यक्षं चैतत् स्वापकाले प्राणवृत्तावपरिलुप्यमानायामिन्द्रियवृत्तयः परिलुप्यन्ते, प्रबोधकाले च प्रादुर्भवन्तीति । इन्द्रियसारत्वाच्च भूतानामविरुद्धो मुख्ये प्राणेऽपि भूतसंवेशनोद्गमनवादी वाक्यशेषः । अपि चादित्योऽन्नं चोद्गीथप्रतिहारयोर्देवते प्रस्तावदेवतायाः

## प्रकटार्थविवरणम्

मन्वायत्ता अनुगतेत्यर्थः । प्राणमभ्याश्रित्योज्जिहते उद्गच्छतीत्यर्थः । अतिदेशाधिकरणत्वात् पूर्वाधिकरणवत् संशयनिर्णयौ । तर्हि पूर्वेणैव गतत्वान्न पृथगारम्भ इत्याह—ननु पूर्ववदिति ॥ अधिकाशङ्कानिरासाय पृथगारम्भ इत्यभिप्रेत्य अधिकाशङ्कामाह— न मुख्येऽपीति ॥ ननु तत्रेन्द्रियाणामेव लयोदयौ प्राणे श्रूयेते । अतो भूतानां लयोदयविषयो वाक्यशेषः प्राणे न घटत इत्याशङ्क्याह--इन्द्रियसारत्वाच्चेति ॥ भूतेष्विन्द्रियाणि साराणि सूक्ष्मतया भोक्तृसामीप्येन च, अतस्तेषां लयोदयाभिधानेनैव इतरेषां लयोदयौ प्रसिद्धावित्यर्थः । अब्रह्मसाहचर्याच्च प्राणो न ब्रह्मेत्याह--अपि चेति ॥ कतमा सा देवता उद्गीथमन्वायत्ता इत्युद्गात्रा पृष्टः चाक्रायण आदित्य इति होवाच; प्रति-

१. TM and A. उद्गच्छन्ती-　　　१. A omits भूतानां.

भाष्यम्

प्राणस्यानन्तरं निर्दिश्येते; न च तयोर्ब्रह्मत्वमस्ति, तत्सामान्याच्च प्राणस्यापि न ब्रह्मत्वमित्येवं प्राप्ते सूत्रकार आह—

"अत एव प्राणः" इति । "तल्लिङ्गात्" इति पूर्वसूत्रे निर्दिष्टम् । अत एव तल्लिङ्गात्प्राणशब्दमपि परं ब्रह्म भवितुमर्हति । प्राणस्यापि हि ब्रह्मलिङ्गसंबन्धः श्रूयते "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति । प्राणनिमित्तौ सर्वेषां भूतानामुत्पत्तिप्रलयावुच्यमानौ प्राणस्य ब्रह्मतां गमयतः । ननूक्तं मुख्यप्राणपरिग्रहेऽपि संवेशनोद्गमनदर्शनमविरुद्धम्, स्वापप्रबोधयोर्दर्शनादिति । अत्रोच्यते—स्वापप्रबोधयोरिन्द्रियाणामेव केवलानां प्राणाश्रयं संवेशनोद्गमनं दृश्यते, न सर्वेषां भूतानाम्; इह तु सेन्द्रियाणां सशरीराणां च जीवाविष्टानां भूतानाम्, "सर्वाणि ह वा इमानि भूतानि" इति श्रुतेः । यदापि भूतश्रुतिर्महाभूतविषया परिगृह्यते तदापि ब्रह्मलिङ्गत्वमविरुद्धम् । ननु सहापि विषयैरिन्द्रियाणां स्वापप्रबोधयोः प्राणेऽप्ययं प्राणाच्च प्रभवं शृणुमः— "यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति" इति । तत्रापि तल्लिङ्गात्प्राणशब्दं ब्रह्मैव । यत्पुनरन्नादित्यसंनिधानात्प्राणस्या-

प्रकटार्थविवरणम्

हर्त्रा पृष्टः अन्नमिति होवाच; इत्यादिना साम[1]भक्तिविशेषयोर्देवते निर्दिश्येते । अब्रह्मरूपान्नादित्यसान्निध्यानुगृहीतप्रथमश्रुतप्राणश्रुत्या वायुविकारः प्राण इति वायुविकारप्राणदृष्टिविशिष्टप्रस्तावोपासनं विधेयमित्यधिकाशङ्कानिरासाय प्रवृत्ते सूत्रकार इत्याह—एवं प्राप्त इत्यादिना ॥ भवन्ति इति[2] भूतानीति यौगिकवृत्त्या यत्किञ्चिद्भवनधर्मवत् तस्य सर्वस्य संवेशनोद्गमनं न मुख्ये प्राण उपपद्यत इत्युक्तम् । इदानीं प्रसिद्धिबलेन महाभूतपरिग्रहेऽपि न विरोध इत्याह—यदापीति ॥ प्राणस्य भौतिकत्वादेव महाभूतकारणत्वं न संभवतीत्यर्थः । केवलानामिन्द्रियाणां प्राणाधीनत्वमुक्तम् । तत्र विशेषं शङ्कते—ननु सहापीति ॥ वायुविकारः प्राणः तत्र नोच्यत इत्याह—तत्रापीति ॥

१. A omits भक्ति.  २. T, T¹, P and TM omit इति.

भाष्यम्

ब्रह्मत्वमिति, तदयुक्तम्; वाक्यशेषबलेन प्राणशब्दस्य ब्रह्मविषयतायां प्रतीयमानायां संनिधानस्याकिञ्चित्करत्वात्। यत्पुनः प्राणशब्दस्य पञ्चवृत्तौ प्रसिद्धतरत्वम्, तदाकाशशब्दस्येव प्रतिविधेयम्। तस्मात्सिद्धं प्रस्तावदेवतायाः प्राणस्य ब्रह्मत्वम्॥

अत्र केचिदुदाहरन्ति—"प्राणस्य प्राणम्", "प्राणबन्धनं हि सोम्य मनः" इति च। तदयुक्तम्, शब्दभेदात्प्रकरणाच्च संशयानुपपत्तेः। यथा पितुः पितेति प्रयोगे अन्यः पिता षष्ठीनिर्दिष्टात्, प्रथमानिर्दिष्टः, पितुः पितेति गम्यते, तद्वत् "प्राणस्य प्राणम्" इति शब्दभेदात् प्रसिद्धात्प्राणादन्यः प्राणस्य प्राण इति निश्चीयते। न हि स एव तस्येति भेदनिर्देशार्हो भवति। यस्य च प्रकरणे यो निर्दिश्यते नामान्तरेणापि स एव तत्र प्रकरणी निर्दिष्ट इति गम्यते; यथा ज्योतिष्टोमाधिकारे "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यत्र ज्योतिःशब्दो ज्योतिष्टोमविषयो भवति, तथा परस्य ब्रह्मणः प्रकरणे "प्राणबन्धनं हि सोम्य मनः" इति श्रुतः प्राणशब्दो वायुविकारमात्रं कथमवगमयेत्? अतः संशयाविषयत्वान्नैतदुदाहरणं युक्तम्। प्रस्तावदेवतायां तु प्राणे संशयपूर्वपक्षनिर्णया उपपादिताः॥

प्रकटार्थविवरणम्

सन्निधेः स्ववाक्यगतं ब्रह्मलिङ्गं बलीय इत्याह—अकिञ्चित्करत्वादिति॥ जगत्प्रकृतित्वावधारणोपबृंहितं प्रति[प्रतिपर्यायं] देवताशब्दाभिहितं चेतनत्वं प्राणश्रुतिमपबाध्य ब्रह्म लक्षयतीत्याह—तदाकाशशब्दस्येवेति॥ यस्मात् प्राणकारणं ब्रह्म प्राणशब्देन लक्ष्यते तस्मात् सर्वजगत्कारणब्रह्मदृष्ट्या प्रस्तावोपासनं सिद्धमित्याह—तस्मादिति॥

वृत्तिकृतामुदाहरणमनूद्य दूषयति—अत्र केचिदिति॥ संशयविषयभूतं हि वाक्यं सर्वत्रोदाहृत्य निर्णीयते। संशयाविषयत्वान्नेदमुदाहरणमित्यर्थः। प्राणस्य पञ्चधा व्यापरहेतुः तत्साक्षी तस्य प्राण इत्युच्यते। शब्दभेदः प्रपञ्चितः; प्रकरणमिदानीं प्रपञ्चयति—यस्य चेत्यादिना॥ प्राणः परमात्मा बन्धनमाश्रयो यस्येति विग्रहः॥

१. T, T¹, TM and A. अवबाध्य.
२. TM adds च.
३. A omits पञ्चधा.

भाष्यम्

## ज्योतिश्चरणाभिधानात् ॥ १-१-२४ ॥

इदमामनन्ति "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इति। तत्र संशयः—किमिह ज्योतिःशब्देनादित्यादिज्योतिरभिधीयते किं वा परमात्मेति । अर्थान्तरविषयस्यापि शब्दस्य तल्लिङ्गाद्ब्रह्मविषयत्वमुक्तम् । इह तु तल्लिङ्गमेवास्ति नास्तीति विचार्यते । किं प्राप्तम्? आदित्यादिकमेव ज्योतिःशब्देन परिगृह्यत इति। कुतः? प्रसिद्धेः । 'तमो ज्योतिः' इति ह्येमौ शब्दौ परस्परप्रतिद्वन्द्विविषयौ प्रसिद्धौ । चक्षुर्वृत्तेर्निरोधकं शार्वरादि तम उच्यते । तस्या एवानुग्राहकमादित्यादिकं ज्योतिः । तथा 'दीप्यते' इतीयमपि

प्रकटार्थविवरणम्

ज्योतिश्चरणाभिधानात् ॥

छान्दोग्यगतं विषयवाक्यं पठति—इदमामानन्तीति ॥ अतो दिवो द्युलोकात्परतः यज्ज्योतिर्दीप्यते प्रकाशते तदिति जाठरेऽध्यस्यते । विश्वतः पृष्ठेष्विति प्राणिनिकायादुपरि ; सर्वतः पृष्ठेष्विति भूरादिलोकादुपरि ; उत्तमा न विद्यन्ते येभ्यस्तेऽनुत्तमाः तेषु; तथापि तेषामुत्तमत्वं न सिद्ध्यतीत्यत आह—उत्तमेष्विति ॥ ज्योतिश्शब्दस्य लोके जाठरज्योतिषि प्रयोगात् "आत्मैवास्य ज्योतिः" इति चात्मनि प्रयोगात् संशयमाह—तत्रेति ॥ नन्वाकाशशब्दस्यार्थान्तरे रूढस्यापि ब्रह्मविषयत्वं निरणायि; तेनैवैतद्गतमिति न पृथगारम्भणीयमित्याशङ्क्याह—अर्थान्तरेति ॥ स्ववाक्ये ज्योतिषो ब्रह्मलिङ्गभावात् पूर्वन्यायाविषयत्वात् पृथगारम्भणीयमित्यर्थः । अधिकरणारम्भमुपपाद्य पूर्वपक्षमाह—किं प्राप्तमित्यादिना ॥ चक्षुर्वृत्तेर्निरोधकमिति भावरूपत्वमाह । तमो भावः, आवरणत्वात्, कुड्यवदिति प्रयोगः । शार्वरादीति पूर्व[रूप]विशेषं लक्षयति । तमो द्रव्यम्, रूपवत्त्वात्, मेघवदिति । न च तमसोऽप्रामाणिकत्वा-

१. T and T[1]. तमामनन्ति.
२. A. प्रकाशयते.
३. TM. भूतादि.

## प्रकटार्थविवरणम्

द्याश्रयासिद्धिः, [1]विप्रतिपत्त्यालम्बना[श्रमत्वादा]श्रयत्वोपपत्तौ प्रमाणविशेषवैयर्थ्यात् । तमसश्च रूपवत्त्वेन नित्यानुभवसिद्धत्वात् न स्वरूपासिद्धिः । हेतुत्वं च व्याप्तत्वेन, न तु प्रामाणिकत्वेन ; अन्यथा कनकेनापि वह्न्यनुमानप्रसङ्गात् ॥

अन्ये त्वाहुः—चक्षुषो रूपग्रहणशक्तिरौत्सर्गिकी ; तमःप्रतिबन्धात्तु क्वचित्कार्यानुदयः ; तत्र प्रतिबन्धध्वंसायालोकापेक्षास्तु यत्र प्रतिबन्धो विद्यते ; तमसस्तु विनाप्यालोकमालोकस्येवालोचनं चक्षुः ; अतः प्रामाणिकत्वान्नाश्रयासिद्ध्याद्याशङ्का—इति । न चान्वयव्यतिरेकाभ्यां तमसोऽभावत्वावगमात् कालात्ययापदिष्टतेति वाच्यम् । एकाश्रयत्वविरोधेनाप्यन्वयव्यतिरेकोपपत्तौ प्रकृताप्रतिपक्षत्वात् ; अन्यथा प्रकाशोऽपि तमोऽभाव इत्यापद्येत । किं च प्रकाशविशेषयस्य तमोविरोधित्वेऽपि मन्दप्रदीपे वेश्मन्यस्पष्टरूपदर्शनानुपपत्त्या तमसोऽप्यनुवृत्तिदर्शनाद्व्यतिरेकासिद्धिः । न च तत्र प्रकाशान्तराभावादस्पष्टरूपदर्शनम्, बहुलालोकविततेऽपि प्रसङ्गात् ; अतो नान्वयव्यतिरेकबाधः । तमो न रूपवत् स्पर्शहीनत्वात्, आत्मवदित्यनुमानबाध इति चेन्न, अम्भस्सम्भारगम्भीरप्रावृडम्भोदस्येव रूपवत्त्वोपलम्भाविरोधात् ; तमसोऽप्यनुद्भूतस्पर्शत्वाभ्युपगमेन हेत्वसिद्धेः । महत्त्वे सति स्पर्शोपलम्भशून्यत्वेनारूपत्वसाधने रश्मिजालगतत्रसरेणुषु व्यभिचारः । तत्र कार्यवशादनुमेयः स्पर्श इति चेत् इहापि प्रत्यक्षोपलब्धरूपत्वादनुमेयो भविष्यति । ननु कार्यद्रव्यं अनेकद्रव्यारब्धं दृष्टम् ; इह तदनुपलम्भाद्व्यापकानुपलब्धिबाधान्न द्रव्यं तमः । तन्न, कार्यदर्शनादेव विद्युदादिकारणवत्तत्सिद्धेः । सूक्ष्मतेजोऽवयवद्वारको मूलकारणस्यैव विधर्त इति रहस्यम् । प्रभावाच्च प्रतिघातः, विनाशादूर्ध्वं च लब्धावयव्युपलम्भः ; तस्माद्व्यापकानुपलब्धिबाधभावात् न द्रव्यं तमः । किं च सर्वप्रकाशप्रागभावत्वे सर्वप्रकाशोदये निवर्तेत । एकप्रागभावत्वे सवितृकिरणसन्ततेऽपि देशे प्रदीपप्रागभावात् तमोभावबुद्धिप्रसङ्गः । प्रध्वंसत्वे च नित्यत्वप्रसङ्गः । संसर्गाभावत्वे किम् इह प्रकाशो नास्तीति बुद्धिगोचरोऽगोचरो वा ? नाद्यः, प्रकाशाभावे सति इह प्रकाशो नास्तीति बुद्धेरेवासंभवात् , संयुक्तविशेषणविशेष्य-

१. A. प्रतिपत्त्या.

२. A. पपद्येः.

३. A omits विशेष.

४. TM. काकेनापि.

५. T, T[1], P and TM. एकैकप्राग-

भाष्यम्

श्रुतिरादित्यादिविषया प्रसिद्धा । न हि रूपादिहीनं ब्रह्म 'दीप्यते' इति मुख्यां श्रुतिमर्हति । द्युमर्यादत्वश्रुतेश्च । न हि चराचरबीजस्य ब्रह्मणः सर्वात्मकस्य द्यौर्मर्यादा युक्ता ; कार्यस्य तु ज्योतिषः परिच्छिन्नस्य द्यौर्मर्यादा स्यात् । "परो दिवो ज्योतिः" इति च ब्राह्मणम् । ननु कार्यस्यापि ज्योतिषः सर्वत्र गम्यमानत्वात् द्युमर्यादावत्त्वमसमञ्जसम् ; अस्तु तर्ह्यत्रिवृत्कृतं तेजः प्रथमजम् । न ; अत्रिवृत्कृतस्य तेजसः प्रयोजनाभावादिति । इदमेव प्रयोजनं यदुपास्यत्वमिति चेत्, न ; प्रयोजनान्तरप्रयुक्तस्यैवादित्यादेरुपास्यत्वदर्शनात् ; "तासां

प्रकटार्थविवरणम्

भावेनाभावः प्रत्यक्ष इति तार्किकस्थितेः । विरोधिदर्शनो[1]र्थेन तु तेमसा संविद्गोचरत्वे कुतः संसर्गाभावत्वसिद्धिः? तस्माद्यत्किञ्चिदेतदित्यलं प्रसक्तेनागतेन ॥

बहुतरब्रह्मलिङ्गावगमेन पूर्वमाकाशादिश्रुतिः स्वार्थात् प्राच्यावि । अत्र त्वब्रह्मलिङ्गान्येव बहूनि विद्यन्ते इत्याह—द्युमर्यादत्वेत्यादिना ॥ ननु द्यौर्मर्यादा न घटते चेन्मा घटिष्ट ; ततः किमित्याशङ्क्याह—परो दिव इति ॥ यथा ब्रह्मणो मर्यादा [2]न घटते तथा कार्यस्यापि न घटत इत्यनर्थकमेवेदं वाक्यमिति कश्चिदाक्षिपति—नन्विति ॥ एकदेशी समाधत्ते—अस्तु तर्हीति ॥ यद्यपि त्रिवृत्कृतं ज्योतिर्दिवोऽर्वागपि विद्यते, तथाप्यध्ययनास्पृष्टं यत्तेजस्तद्दिवःपरस्तान्नृषिध्यत्यदोषस्य वेदस्यानर्थक्यायोगादित्यर्थः । [3]अध्ययनविधिपरिगृहीतस्य सप्रयोजने प्रामाण्यं वक्तव्यम् ; न चेदानीमत्रिवृत्कृतस्य तस्मिन् [?] प्रयोजनमस्तीत्याह—नेति ॥ एकदेशी प्रयोजनमाह—इदमेवेति ॥ निष्प्रयोजनस्योपासनापि न संभवतीत्याह—नेति ॥ अत्रिवृत्कृतं तेजोऽभ्युपगम्य निष्प्रयोजनत्वमुक्तम् । इदानीं तदेव नास्तीत्याह— तासामिति ॥ तासां देवतानां तेजोऽबन्नलक्षणा[4]नामेकैकां देवतां द्विधा विभज्य पुनश्चैकैकं भागं द्विधा कृत्वा तदितरयोः निक्षिप्य त्रिगुणरज्जुवतां त्रिवृतं करवाणीत्यविशेष-

१. T and T¹. दर्शनार्थौ.
P and TM. दर्शनोत्थौ.

२. T, T¹, P and TM. मम सा.

३. T and T¹. अध्यापन.

४. A omits लक्षणानां

## भाष्यम्

त्रिवृतं त्रिवृतमेकैकां करवाणि" इति चाविशेषश्रुतेः । न चात्रिवृत्कृतस्यापि तेजसो द्युमर्यादत्वं प्रसिद्धम् । अस्तु तर्हि त्रिवृत्कृतमेव तत्तेजो ज्योतिःशब्दम् । ननूक्तमर्वागपि दिवोऽवगम्यतेऽग्न्यादिकं ज्योतिरिति । नैष दोषः । सर्वत्रापि गम्यमानस्य ज्योतिषः "परो दिवः" इत्युपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते ; न तु निष्प्रदेशस्यापि ब्रह्मणः प्रदेशविशेषकल्पना भागिनी । "सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु" इति चाधारबहुत्वश्रुतिः कार्ये ज्योतिष्युपपद्यतेतराम् । "इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इति च कौक्षेये ज्योतिषि परं ज्योतिरध्यस्यमानं दृश्यते । सारूप्यनिमित्ताश्चाध्यासा भवन्ति । यथा "तस्य भूरिति शिर एकं शिर एकमेतदक्षरम्" इति । कौक्षेयस्य तु ज्योतिषः प्रसिद्धमब्रह्मत्वम् । "तस्यैषा दृष्टिः" "तस्यैषा श्रुतिः" इति चौष्ण्यघोषविशिष्टत्वस्य श्रवणात् । "तदेतद्दृष्टं च श्रुतं चेत्युपासीत" इति च श्रुतेः । "चक्षुष्यः श्रुतो भवति य एवं वेद" इति

## प्रकटार्थविवरणम्

श्रुतेः नास्त्यत्रिवृत्कृतं तेज इत्यर्थः । किञ्च यच्छब्दोपबन्धात्सिद्धवत्परामर्शनादन्यतः सिद्धिर्वक्तव्या ; सा च नास्तीत्याह— न चेति ॥ एकदेशिमतेऽपाकृते साक्षात्पूर्वबाध्याह—अस्तु तर्हीति ॥ तर्हि ब्रह्मण एवोपासनार्थः प्रदेशविशेषपरिग्रहोऽस्त्वित्याशङ्क्याह— न तु निष्प्रदेशस्येति ॥ प्रदेशं परिकल्प्योपाध्यवच्छेदकल्पनायां गौरवप्रसङ्गान्न सा कल्पना भागिनी युक्तेत्यर्थः । यद्यप्यवच्छेदकल्पनया ब्रह्मणोऽप्याधारश्रुतिः कथञ्चिद्घटते तथापि न मुख्येत्यभिप्रेत्याह—सर्वत इति ॥ अब्रह्मत्वसारूप्येणाध्यासाच्च दिवःपरं ज्योतिरब्रह्मेत्याह—इदं वाव तदित्यादिना ॥ एकत्वसाम्येन भूरित्येतस्मिन्नक्षरे प्रजापतेः शिरोदृष्टिर्यथेत्यर्थः । तस्यैषा दृष्टिर्यदेतत् संस्पर्शेनोष्णिमानं विजानाति । तस्यैषा श्रुतिः यत्कर्णावपि गृह्य निनदमिव शृणोति । चक्षुष्यः

१. A. मुख्येतेत्याह.

२. A. साम्ये.

३. A adds साक्षी

४. T, $T^1$ and P. वपि.

भाष्यम्

चाल्पफलश्रवणादब्रह्मत्वम् । महते हि फलाय ब्रह्मोपासनमिष्यते । न चान्यदपि किंचित् स्ववाक्ये प्राणाकाशवज्ज्योतिषोऽस्ति ब्रह्मलिङ्गम् । न च पूर्वस्मिन्नपि वाक्ये ब्रह्म निर्दिष्टमस्ति, "गायत्री वा इद९ सर्वं भूतम्" इति छन्दोनिर्देशात् । अथापि कथंचित् पूर्वस्मिन्वाक्ये ब्रह्म निर्दिष्टं स्यात्, एवमपि न तस्येह प्रत्यभिज्ञानमस्ति । तत्र हि "त्रिपादस्यामृतं दिवि" इति द्यौरधिकरणत्वेन श्रूयते ; अत्र पुनः "परो दिवो ज्योतिः" इति द्यौर्मर्यादात्वेन । तस्मात् प्राकृतं ज्योतिरिह ग्राह्यमित्येवं प्राप्ते ब्रूमः—

ज्योतिरिह ब्रह्म ग्राह्यम् । कुतः? चरणाभिधानात्, पादाभिधानादित्यर्थः । पूर्वस्मिन्हि वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टम् "तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इत्यनेन मन्त्रेण । तत्र यच्चतुष्पदो ब्रह्मणस्त्रिपादमृतं द्युसंबन्धि रूपं निर्दिष्टं तदेवेह द्युसंबन्धान्निर्दिष्टमिति प्रत्यभिज्ञायते । तत्परित्यज्य प्राकृतं ज्योतिः कल्पयतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्ये-

प्रकटार्थविवरणम्

दर्शनीयः[1] श्रुतो[2] विख्यातः। एवं बहून्यब्रह्मलिङ्गान्युक्त्वा इदानीं ब्रह्मलिङ्गं किमपि नास्तीत्याह—न चान्यदपीति ॥ ननु स्ववाक्ये ब्रह्मलिङ्गाभावेऽपि पूर्वत्र ब्रह्मणः प्रस्तुतत्वात् प्रकृतं ब्रह्म ज्योतिश्शब्देनाभिधीयत इत्याशङ्क्याह—न च पूर्वस्मिन्नपीति ॥ ननु "तावानस्य महिमा" इति ब्रह्मविषयस्य मन्त्रस्य पूर्वत्रोदाहृतत्वात् प्रकृतं ब्रह्मेत्याशङ्क्याह—अथापि कथंचिदिति[4] ॥ सप्तम्यन्तपञ्चम्यन्तनिर्देशवैलक्षण्यान्न[5] तत्प्रत्यभिज्ञोदेतीत्यर्थः । प्रकृतेर्जातं प्राकृतं कार्यमित्यर्थः ॥

तावान् तत्परिमाणः पूर्वं व्याख्यातो भूतपृथिव्यादिः अस्य[6] प्रकृतस्य गायत्र्याख्यस्य ब्रह्मणो महिमा विभूतिमात्रम् । ततो ज्यायान् पुरुष एव ब्रह्मैव

१. T, T[1], P and TM. दर्शनीय

२. TM. श्रुते.

३. TM. चक्षो.

४. A. किञ्चिदिति.

५. T and T[1]. क्षण्यं

६. A omits अस्य.

## भाष्यम्

यातांम् । न केवलं पूर्ववाक्याज्ज्योतिर्वाक्य एव ब्रह्मानुवृत्तिः, परस्यामपि शाण्डिल्यविद्यायामनुवर्तिष्यते ब्रह्म । तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम् । यत्तूक्तम् 'ज्योतिः दीप्यते' इति चैतौ शब्दौ कार्ये ज्योतिषि प्रसिद्धाविति, नायं दोषः, प्रकरणाद्ब्रह्मावगमे सत्यनयोः शब्दयोरविशेषकत्वात्; दीप्यमानकार्यज्योतिरुपलक्षिते ब्रह्मण्यपि प्रयोगसंभवात्; "येन सूर्यस्तपति तेजसेद्धः" इति च मन्त्रवर्णात् । यद्वा नायं ज्योतिःशब्दश्चक्षुर्वृत्तेरेवानुग्राहके तेजसि वर्तते, अन्यत्रापि प्रयोगदर्शनात्; "वाचैवायं ज्योतिषास्ते" "मनो ज्योतिर्जुषताम्" इति च । तस्माद्यद्यत्कस्यचिदवभासकं तत्तज्ज्योतिःशब्देनाभिधीयते । तथा सति ब्रह्मणोऽपि चैतन्यरूपस्य समस्तजगदवभासहेतुत्वादुपपन्नो ज्योतिःशब्दः; "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इत्यादिश्रुतिभ्यश्च । यदप्युक्तं द्युमर्यादत्वं सर्वगतस्य ब्रह्मणो नोपपद्यत

## प्रकटार्थविवरणम्

महत्तरमित्यर्थः । तदेवाह पाद एव सर्वाणि भूतानि । यथा पादचतुष्टयापेक्षया चतुर्थो भागोऽल्पः, तथा सर्वो विकारो वाचारम्भणत्वादत्यल्पः त्रिपादिवापरिमितं रूपम् अमृतं दिवि सूर्यमण्डले वर्तत इत्युपासनायोपदेशः । पूर्वत्र ब्रह्मणः प्रकृतत्वात् प्रकृतविषय एवायं ज्योतिश्शब्दो ज्योतिष्टोम इवेत्युक्तम् । इदानीम् "सर्वं खल्विदं ब्रह्म" इत्युपरितनेऽपि वाक्ये ब्रह्मणोऽनुवृत्तिदर्शनान्मध्यगतमपि ज्योतिर्वाक्यं ब्रह्मपरमेवेत्याह— न केवलमिति।। 'ज्योतिः दीप्यते' इत्यनयोः शब्दयोर्ब्रह्मनिवर्तकत्वं न संभाव्यते ब्रह्मप्रकरणे समाम्नातत्वेन तदानुगुण्यादित्याह–अविशेषकृतत्वा[कत्वा]दिति।। कया तर्हि वृत्त्या ब्रह्मणि ज्योतिश्शब्दः प्रयुज्यत इत्याशङ्क्याह—दीप्यमानेति ।। कार्ये रूढिमभ्युपगम्य तत्कारणे लक्षणया वर्तत इत्युक्तम् । इदानीं ब्रह्मण्यपि मुख्य एवेत्याह—यद्वेत्यादिना ।। यानि चाब्रह्मलिङ्गान्युद्भावितानि, ब्रह्मपक्षेऽपि तानि योजयितुं शक्यन्त इत्याह—यदप्युक्तमित्यादिना ।।

भाष्यम्

इति, अत्रोच्यते—सर्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते। ननूक्तं निष्प्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना नोपपद्यत इति; नायं दोषः; निष्प्रदेशस्यापि ब्रह्मण उपाधिविशेषसंबन्धात् प्रदेशविशेषकल्पनोपपत्तेः। तथा हि—आदित्ये, चक्षुषि, हृदये इति प्रदेशविशेषसंबद्धानि ब्रह्मण उपासनानि श्रूयन्ते। एतेन "विश्वतः पृष्ठेषु" इत्याधारबहुत्वमुपपादितम्। यदप्येतदुक्तम्, औष्ण्यघोषाभ्यामनुमिते कौक्षेये कार्ये ज्योतिष्यध्यस्यमानत्वात्परमपि दिवः कार्यं ज्योतिरेवेति, तदप्ययुक्तम्; परस्यापि ब्रह्मणो नामादिप्रतीकत्ववत् कौक्षेयज्योतिष्प्रतीकत्वोपपत्तेः। "दृष्टं च श्रुतं चेत्युपासीत" इति तु प्रतीकद्वारकं दृष्टत्वं श्रुतत्वं च भविष्यति। यदप्यल्पफलश्रवणान्न ब्रह्मेति, तदप्यनुपपन्नम्; न हीयते फलाय ब्रह्माश्रयणीयम्, इयते नेति नियमहेतुरस्ति। यत्र हि निरस्तसर्वविशेषसंबन्धं परं ब्रह्मात्मत्वेनोपदिश्यते, तत्रैकरूपमेव फलं मोक्ष इत्यवगम्यते। यत्र तु गुणविशेषसंबद्धं प्रतीकविशेषसंबद्धं वा ब्रह्मोपदिश्यते, तत्र संसारगोचराण्येवोच्चावचानि फलानि दृश्यन्ते "अन्नादो वसुदानो विदन्ते वसु य एवं वेद" इत्याद्यासु श्रुतिषु। यद्यपि न स्ववाक्ये किंचिज्ज्योतिषो ब्रह्मलिङ्गमस्ति तथापि पूर्वस्मिन् वाक्ये दृश्यमानं ग्रहीतव्यं भवति। तदुक्तं सूत्रकारेण—"ज्योतिश्चरणाभिधानात्" इति। कथं पुनर्वाक्यान्तरगतेन ब्रह्मसन्नि-

प्रकटार्थविवरणम्

साहश्यमन्तरेणाप्यध्यासो दृष्ट इत्याह—नामादिप्रतीकत्ववदिति ॥ प्रतीकं प्रतिमा उपासनस्थानं जाठरं ज्योतिः, तस्य दृष्टत्वश्रुतत्वनिबन्धनं तत्रोपास्यस्य ब्रह्मणोऽपि[१] दृष्टत्वं श्रुतत्वं च भविष्यतीत्यर्थः। "तं यथा यथोपासते तदेव भवति" इति वाजिनामग्निरहस्ये श्रवणात् नैकरूपं फलमित्याह—न हीयत इति ॥ इयते एतावत्परिमाणाय। अन्नादो जीवरूपेण; वसु हिरण्यम्, कर्मफलमित्यर्थः। यच्चोक्तं स्ववाक्ये ज्योतिषो न ब्रह्मलिङ्गं किञ्चिदस्तीति तत्राह—यद्यपीति ॥ सन्निधानाच्छ्रुतेर्बलीयस्त्वं मत्वा आह— कथं पुनरिति ॥ न वयमपि सन्निधानात् श्रुतेः भङ्गं ब्रूमः। किन्तु प्रकृतप्रत्यभिज्ञात् ब्रह्मपरामर्शियच्छ्रुतिसामानाधिकरण्याज्ज्योतिश्श्रुतिरपि तद्विषयैवेति ब्रूम इत्याह—

१. A omits ज्योतिः.

भाष्यम्

धानेन ज्योतिःश्रुतिः स्वविषयाच्छक्या प्रच्यावयितुम् । नैष दोषः । "यदतः परो दिवो ज्योतिः" इति प्रथमतरपठितेन यच्छब्देन सर्वनाम्ना द्युसंबन्धात् प्रत्यभिज्ञायमाने पूर्ववाक्यनिर्दिष्टे ब्रह्मणि स्वसामर्थ्येन परामृष्टे सत्यर्थाज्ज्योतिःशब्दस्यापि ब्रह्मविषयत्वोपपत्तेः । तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम् ॥

## छन्दोऽभिधानान्नेतिचेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ १-१-२५ ॥

अथ यदुक्तं पूर्वस्मिन्नपि वाक्ये न ब्रह्माभिहितमस्ति, "गायत्री वा इदं सर्वं भूतं यदिदं किं च" इति गायत्र्याख्यस्य छन्दसोऽभिहितत्वादिति, तत्परिहर्तव्यम् । कथं पुनश्छन्दोऽभिधानान्न ब्रह्माभिहितमिति शक्यते वक्तुम्, यावता "तावानस्य महिमा" इत्येतस्यामृचि चतुष्पाद् ब्रह्म दर्शितम् । नैतदस्ति । "गायत्री वा इदं सर्वम्" इति गायत्रीमुपक्रम्य तामेव भूतपृथिवीशरीरहृदयवाक्प्राणप्रभेदैर्व्याख्याय "सैषा

प्रकटार्थविवरणम्

नैष दोष इति ॥ यच्छब्दपरामृष्टे सतीत्यन्वयः ॥

छन्दोऽभिधानान्नेतिचेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥

पूर्वोक्तमनुभाषते अथ यदुक्तमिति ॥ नेदं परिहारयोग्यं चोद्यम्, किन्तूपेक्षणीयमेव, छन्दोऽभिधानादिति हेतोरसिद्धत्वादित्याह—कथं पुनरिति ॥ हेतुं साधयति—नैतदित्यादिना ॥ "गायत्री वा इदं सर्वं भूतम्" इत्युपक्रम्य "वागेव गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च" इत्यादिना सैषा षडक्षरैः पादैः चतुष्पादा सती छन्दोरूपा गायत्री वाग्भूतपृथिवीशरीरप्राणहृदयभेदैः षट्प्रकारा भवतीत्युपसंहृत्य तस्यामेवावतारितो मन्त्रः कथं ब्रह्माभिदध्यात्? न कथञ्चित् : अतो नासिद्धो हेतुरित्यर्थः । ननु मन्त्रानन्त-

१. T and T[1]. यच्छन्दो.

भाष्यम्

चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तं तावानस्य महिमा" इति तस्यामेव व्याख्यातरूपायां गायत्र्यामुदाहृतो मन्त्रः कथमकस्माद्ब्रह्म चतुष्पादभिदध्यात् । योऽपि तत्र "यद्वै तद्ब्रह्म" इति ब्रह्मशब्दः सोऽपि छन्दसः प्रकृतत्वाच्छन्दोविषय एव । "य एतामेवं ब्रह्मोपनिषदं वेद" इत्यत्र हि वेदोपनिषदमिति व्याचक्षते, तस्माच्छन्दोऽभिधानान्न ब्रह्मणः प्रकृतत्वमिति चेत् , नैष दोषः ; "तथा चेतोऽर्पणनिगदात्" तथा गायत्र्याख्यच्छन्दोद्वारेण तदनुगते ब्रह्मणि चेतसोऽर्पणं चित्तसमाधानमनेन ब्राह्मणवाक्येन निगद्यते "गायत्री वा इदं सर्वम्" इति । न ह्यक्षरसंनिवेशमात्राया गायत्र्याः सर्वात्मकत्वं संभवति । तस्माद्यद्गायत्र्याख्यविकारेऽनुगतं जगत्कारणं ब्रह्म तदिह सर्वमित्युच्यते, यथा "सर्वं खल्विदं ब्रह्म" इति । कार्यं च कारणादव्यतिरिक्तमिति वक्ष्यामः "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र । तथान्यत्रापि विकारद्वारेण ब्रह्मण उपासनं दृश्यते "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त

प्रकटार्थविवरणम्

त्यमेव "यद्वैतद्ब्रह्म" इति ब्रह्मपरामर्शान्मन्त्रेऽपि ब्रह्मोक्तमित्याशङ्क्याह—योऽपि तत्रेति ॥ ननूपनिषदि ब्रह्मशब्दः सर्वत्र परमात्मपर एवेत्याशङ्क्याह—य एतामेवमिति ॥ यस्माद्गायत्र्याख्यस्य छन्दसो भूताद्यध्यासेनोपास्यस्य[1] निर्देशको मन्त्रः तस्मादित्युपसंहारः । सिद्धान्तत्वेन सूत्रभागमवतारयति—नैष दोष इत्यादिना ॥ गायत्रीशब्देन छन्दोमात्राभिधाने सर्वभूतादिरूपत्वस्यासदारोपत्वप्रसङ्गात् । ब्रह्मपरिग्रहे तु कार्यकारणयोः तादात्म्येन सदारोपसंभवात् गायत्रीशब्देन तदनुगतं ब्रह्मोपलक्ष्य तदुपासनं विधीयत इति भावः । ननु कार्यकारणयोरत्यन्तभेदात्तत्राप्यसदारोपः समान इत्याशङ्क्याह—कार्यं चेति ॥ "तथा हि दर्शनम्" इत्यस्यार्थमाह—तथान्यत्रापीति ॥ एतं परमात्मानं बह्वृचा ऋग्वेदिनो महति प्रधाने महाव्रताख्ये क्रतौ उक्थे शस्त्रे अनुगतमुपासते अग्निरहस्ये यजुर्वेदिनःइत्यैतरेयके दृश्यत इत्यर्थः । सिद्धान्तभागं[2]

१. A. सेनोपस्यस्य २. A omits भागं

### भाष्यम्

एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः" इति। तस्मादस्ति छन्दोऽभिधानेऽपि पूर्वस्मिन् वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टम्। तदेव ज्योतिर्वाक्येऽपि परामृश्यते उपासनान्तरविधानाय। अपर आह—साक्षादेव गायत्रीशब्देन ब्रह्म प्रतिपाद्यते, संख्यासामान्यात्। यथा गायत्री चतुष्पदा षडक्षरैः पादैस्तथा ब्रह्म चतुष्पात्। तथान्यत्रापि छन्दोऽभिधायी शब्दोऽर्थान्तरे संख्यासामान्यात्प्रयुज्यमानो दृश्यते। तद्यथा "ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्" इत्युपक्रम्याह "सैषा विराडन्नादी" इति। अस्मिन्पक्षे ब्रह्मैवाभिहितमिति न छन्दोऽभिधानम्। सर्वथाप्यस्ति पूर्वस्मिन्वाक्ये प्रकृतं ब्रह्म॥

### प्रकटार्थविवरणम्

प्रकारान्तरेण व्याचष्टे—अपर आहेति॥ ब्रह्मणि चेतः समर्प्यते येन गायत्रीशब्देन स चेतोऽर्पणः तेन। तथेति गायत्रीवच्चतुष्पात्त्वसाम्येन ब्रह्मण एव निगदादभिधानान्न पूर्वत्र छन्दः प्रकृतमित्यर्थः। साक्षादिति विकारानवच्छेदेनेत्यर्थः। पूर्वव्याख्याने कार्योपासनम्; अत्र सगुणब्रह्मोपासनमिति विभागः। "तथा हि दर्शनम्" इत्यस्यार्थमाह—तथान्यत्रापीति॥ पञ्चान्ये अधिदैवं वायुरग्निः सूर्यश्चन्द्रमा आप इति। पञ्चान्ये त्वध्यात्मं प्राणो वाक् चक्षुः श्रोत्रं मन इति। ते वा एते दशसङ्ख्यावच्छिन्नाः सन्तः तत्कृतं द्यूतम् चतुरयके हि द्यूते कश्चिदयश्चतुरङ्कः कश्चित्त्र्यङ्कः कश्चिद्द्व्यङ्कः कश्चिदेकाङ्कः। एवं दशसङ्ख्यावत्त्वात्कृतस्य संवर्गविद्यायां कृतत्वं सम्पादितम्; तत्सम्पादनेन चान्नादित्वं सम्पादितम्; कृतस्यान्नादित्वेन प्रसिद्धेरित्यन्नादित्वं प्रक्रम्याह—सैषान्नादनी विराट्छन्दवाच्या; सैषेति विधेयलिङ्गभजनम्; ते दश पदार्थाः। कृतत्वेनान्नादित्वविशिष्टाः सङ्ख्यासामान्यात् विराट्छन्दवाच्याः। दशाक्षरा हि विराट् प्रसिद्धेति भावः। द्वितीयं व्याख्यानमनुजानाति—अस्मिन्पक्ष इति॥

१. T and T[1]. समाप्यते.

२. A omits तत्.

३. T and T[1]. यते.

४. A adds चतुरः.

५. T and T[1]. क्व.

६. T. त्वकृत.

७. A. चादित्वेन.

८. T, T[1], P and TM. जानामीत्यस्मिन्.

भाष्यम्

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १-१-२६ ॥

इतश्चैवमभ्युपगन्तव्यम्—अस्ति पूर्वस्मिन्वाक्ये प्रकृतं ब्रह्मेति, यतो भूतादीन् पादान् व्यपदिशति । भूतपृथिवीशरीरहृदयानि हि निर्दिश्याह "सैषा चतुष्पदा षड्विधा गायत्री" इति । न हि ब्रह्मानाश्रयणे केवलस्य छन्दसो भूतादयः पादा उपपद्यन्ते । अपि च ब्रह्मानाश्रयणे नेयमृक्संबध्येत "तावानस्य" इति । अनया हि ऋचा स्वरसेन ब्रह्मैवाभिधीयते, "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इति सर्वात्मत्वोपपत्तेः । पुरुषसूक्तेऽपीयमृग्ब्रह्मपरतयैव समाम्नायते । स्मृतिश्च ब्रह्मण एवंरूपतां दर्शयति "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति । "यद्वै तद्ब्रह्म" इति च निर्देश एवं सति मुख्यार्थ उपपद्यते । "पञ्च ब्रह्मपुरुषाः" इति च हृदयसुषिषु ब्रह्मपुरुषश्रुतिर्ब्रह्मसंबन्धितायां विवक्षितायां संभवति । तस्मादस्ति पूर्वस्मिन्वाक्ये ब्रह्म प्रकृतम् । तदेव ब्रह्म ज्योतिर्वाक्ये द्युसंबन्धात्प्रत्यभिज्ञायमानं परामृश्यत इति स्थितम् ॥

प्रकटार्थविवरणम्

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥

श्रुत्यादिषु प्रथमैकप्रमाणादुत्तरानेकप्रमाणं बलवत्, प्रत्ययसंवादस्य तात्पर्यनिमित्तत्वात् इति न्यायेनापि गायत्रीशब्दो ब्रह्मपर इत्याह—इतश्चैवमित्यादिना ॥ न केवलम् "पादोऽस्य सर्वा भूतानि" इत्युक्तस्य सर्वात्मत्वस्य ब्रह्मण्येवोपपत्तेः ब्रह्मपरत्वम्, शाखान्तरे ब्रह्मविषयत्वेन प्रसिद्धत्वाच्चेत्याह—पुरुषसूक्तेऽपीति ॥ यच्चोक्तं ब्रह्मशब्दः छन्दोविषय इति तत्राह—यद्वै तदिति ॥ "तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ्सुषिः स प्राणः" इत्युपक्रम्य "ते वा एते पञ्च ब्रह्मपुरुषाः" इति प्राच्यादिहृदयच्छिद्रेषु ब्रह्मणो हार्दस्य[२] संबन्धाद्ब्रह्मपुरुषश्रुतिः ॥

१. T, T[1] and P. तात्पर्य.

२. T and T[1]. हृद्स्य. TM. हा-स्य. P, गर्भस्य

भाष्यम्

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्य-विरोधात् ॥ १-१-२७ ॥

यदप्येतदुक्तम्—पूर्वत्र "त्रिपादस्यामृतं दिवि" इति सप्तम्या द्यौराधारत्वेनोपदिष्टा ; इह पुनः "अथ यदतः परो दिवः" इति पञ्चम्या मर्यादात्वेन, तस्मादुपदेशभेदान्न तस्येह प्रत्यभिज्ञानमस्तीति, तत्परिहर्तव्यम् । अत्रोच्यते—नायं दोषः, उभयस्मिन्नप्यविरोधात् । उभयस्मिन्नपि सप्तम्यन्ते पञ्चम्यन्ते चोपदेशे न प्रत्यभिज्ञानं विरुध्यते । यथा लोके वृक्षाग्रसंबद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते, वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति च, एवं दिव्येव सद्ब्रह्म दिवः परमित्युपदिश्यते । अपर आह—यथा लोके वृक्षाग्रेणासंबद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते, वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति च, एवं च दिवः परमपि सद्ब्रह्म दिवीत्युपदिश्यते—तस्मादस्ति पूर्वनिर्दिष्टस्य ब्रह्मण इह प्रत्यभिज्ञानम् । अतः परमेव ब्रह्म ज्योतिःशब्दमिति सिद्धम् ॥

## प्राणस्तथानुगमात् ॥ १-१-२८ ॥

अस्ति कौषीतकिब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिका "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च"

प्रकटार्थविवरणम्

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥

अप्रत्यभिज्ञाकारणमुद्भाव्य दूषयति—उपदेशेति ॥ औपश्लेषाधिकरणं व्याख्याय सामीपिकाभिप्रायेण व्याचष्टे—अपर आहेति ॥ यस्मात् गायत्रीवाक्ये ब्रह्मनिर्दिष्टम्, प्रत्यभिज्ञायां च नास्ति कारणं तस्मादित्युपसंहारः ॥

प्राणस्तथानुगमात् ॥

विषयं दर्शयितुमुपक्रममाह—अस्तीत्यादिना ॥ दिवोदासस्यापत्यं दैवोदासिः ; धाम गृहम् ; उपगतो युद्धकरणेन पुरुषकारप्रदर्शनेन चेत्यर्थः । विषयं

१. TM. कारणं. २. TM. समीपिकं. ३. TM. वास्ति.

### भाष्यम्

इत्यारभ्याम्नाता । तस्यां श्रूयते "स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति । तथोत्तरत्रापि "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति; तथा "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादि; अन्ते च "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः" इत्यादि । तत्र संशयः—किमिह प्राणशब्देन वायुमात्रमभिधीयत उत देवतात्मेति, जीवोऽथवा परं ब्रह्मेति । ननु "अत एव प्राणः" इत्यत्र वर्णितं प्राणशब्दस्य ब्रह्मपरत्वम् । इहापि च ब्रह्मलिङ्गमस्ति "आनन्दोऽजरोऽमृतः" इत्यादि । कथमिह पुनः संशयः संभवति? अनेकलिङ्गदर्शनादिति ब्रूमः । न केवलमिह ब्रह्मलिङ्गमेवोपलभ्यते; सन्ति हीतरलिङ्गान्यपि । "मामेव विजानीहि" इतीन्द्रस्य वचनं देवतात्मलिङ्गम्; इदं शरीरं परिगृह्योत्थापयतीति प्राणलिङ्गम्; "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादि जीवलिङ्गम्; अत उपपन्नः संशयः । तत्र प्रसिद्धेर्वायुः प्राण इति प्राप्ते, उच्यते—

### प्रकटार्थविवरणम्

संशयं चाह—तस्यामित्यादिना ॥ पूर्वन्यायेन गतत्वात् संशयो नोपपद्यत इत्याह—ननु अत एवेति ॥ समाधत्ते—अनेकेति ॥ अनेकलिङ्गदर्शने हि कतमं लिङ्गं तदाभासं वा कतमदिति भवति संशयः । तदपाकरणाय युक्तः पृथगारम्भ इत्यर्थः । पूर्वत्र त्रिपात्प्रकृतब्रह्मपरामर्शकयच्छब्दसामानाधिकरण्याज्ज्योतिःश्रुतिरपि तद्विषयैवेति प्रत्यपादि । नेह तथाविधं किञ्चिदसाधारणं प्राणस्य ब्रह्मत्वे दृश्यते । ततः प्रसिध्यतिक्रमे कारणाभावात् वायुरेव प्राण इत्याह—तत्र प्रसिद्धेरिति ॥

तथेति, ब्रह्मप्रतिपादनपरत्वेनैवानुगमात् पदानामन्वयदर्शनादित्यर्थः । यमर्थं त्वं मनुष्यायातिशयेन हितं मन्यसे तं परमाभिलषितं मह्यं त्वमेव

१. A. कतमल्लिङ्गा सा भवति.

२. TM and A add ततः.

३. T, T[1], P and TM. प्रत्यपादि.

## भाष्यम्

प्राणशब्दं ब्रह्म विज्ञेयम् । कुतः ? तथानुगमात् । तथा हि— पौर्वापर्येण पर्यालोच्यमाने वाक्ये पदार्थानां समन्वयो ब्रह्मप्रतिपादनपर उपलभ्यते । उपक्रमे तावत् "वरं वृणीष्व" इतीन्द्रेणोक्तः प्रतर्दनः परमं पुरुषार्थं वरमुपचिक्षेप "त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति । तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात् ? न ह्यन्यत्र परमात्मज्ञानाद्धिततमप्राप्तिरस्ति "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिश्रुतिभ्यः । तथा "स यो मां वेद न ह वै तस्य केनचन कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया" इत्यादि च ब्रह्मपरिग्रहे घटते । ब्रह्मविज्ञानेन हि सर्वकर्मक्षयः प्रसिद्धः "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इत्याद्यासु श्रुतिषु । प्रज्ञात्मत्वं च ब्रह्मपक्ष एवोपपद्यते । न ह्यचेतनस्य वायोः प्रज्ञात्मत्वं संभवति । तथोपसंहारेऽपि—"आनन्दोऽजरोऽमृतः" इत्यानन्दत्वादीनि न ब्रह्मणोऽन्यत्र सम्यक् संभवन्ति । "स न साधुना कर्मणा भूयान्भवति नो एवासाधुना कर्मणा कनीयानेष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते" इति, "एष लोकाधिपतिरेष लोकेशः" इति च । सर्वमेतत्परस्मिन्ब्रह्मण्याश्रीयमाणे अनुगन्तुं शक्यते न मुख्ये प्राणे ; तस्मात्प्राणो ब्रह्म ॥

## प्रकटार्थविवरणम्

प्रयच्छेति प्रतर्दनेनोक्ते कथं तस्मै वायुरुपदिश्येत । विकारज्ञानात् परमश्रेयोऽनुपपत्तेरित्यर्थः । सर्वकर्मप्रदाहोऽपि ब्रह्मपरिग्रहेऽनुगुणो भवतीत्याह—तथा स यो मामिति ॥ स यो मां ब्रह्मरूपं वेद साक्षादनुभवति, तस्य विदुषो लोकः फलभूतो मोक्षः केनापि कर्मणा महापातकेनापि न मीयते, न हिंस्यते, न प्रतिबध्यते ; ज्ञानमाहात्म्येन सर्वं दग्धं भवतीत्यर्थः । चेतनत्वमपि क्रियाशक्तिमति प्राणे न संभवतीत्याह—प्रज्ञात्मत्वं चेति ॥ लिङ्गान्तराण्याह—तथेत्यादिना ॥ साधुना कर्मणाग्निहोत्रादिना भूयान् बहुतरः पुण्याद्यसंस्पृष्ट इत्यर्थः ॥

भाष्यम्

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ १.१-२९ ॥

यदुक्तं प्राणो ब्रह्मेति, तदाक्षिप्यते । न परं ब्रह्म प्राणशब्दम् । कस्मात्? वक्तुरात्मोपदेशात् । वक्ता हीन्द्रो नाम कश्चिद्विग्रहवान्देवताविशेषः स्वमात्मानं प्रतर्दनायाचचक्षे "मामेव विजानीहि" इत्युपक्रम्य "प्राणोऽस्मि प्रज्ञात्मा" इत्यहंकारवादेन । स एव वक्तुरात्मत्वेनोपदिश्यमानः प्राणः कथं ब्रह्म स्यात् । न हि ब्रह्मणो वक्तृत्वं संभवति "अवागमनाः" इत्यादिश्रुतिभ्यः । तथा विग्रहसंबन्धिभिरेव ब्रह्मण्यसंभवद्भिर्धर्मैरात्मानं तुष्टाव "त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छम्" इत्येवमादिभिः । प्राणत्वं चेन्द्रस्य बलवत्त्वादुपपद्यते । "प्राणो वै बलम्" इति हि विज्ञायते। बलस्य चेन्द्रो देवता प्रसिद्धा । या च काचिद्बलकृतिरिन्द्रकर्मैव तत् इति हि वदन्ति । प्रज्ञात्मत्वमप्यप्रतिहतज्ञानत्वाद्देवतात्मनः संभवति । अप्रति-

प्रकटार्थविवरणम्

न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥

यद्यप्युक्तरीत्या न वायुः प्राणः, तथापि न ब्रह्मेत्याह—यदुक्तमित्यादिना ॥ ब्रह्मणो वक्तृत्वाभावात्, इह च वक्ता स्वस्यैव ज्ञेयत्वेनोपदिष्टत्वादिन्द्रोपसनापरमिदं वाक्यमित्यर्थः । किञ्चेन्द्रस्य स्तूयमानत्वात्तस्यैवोपास्यत्वमित्याह—तथा विग्रहेति ॥ त्रीणि शीर्षाणि यस्य स त्रीशीर्षा ; तं त्वष्टुरपत्यं वृत्रं हतवानस्मि । रौति यथार्थं शब्दयतीति रुत् वेदवाक्यम्; तत्र मुखं येषां ते रुन्मुखाः ; ततोऽन्ये अरुन्मुखाः वेदोक्ताननुष्ठायिन इत्यर्थः । सालावृकेभ्योऽरण्यश्वभ्यः प्रत्तवानस्मि । तर्हीन्द्रे प्राणशब्दः कथमित्याशङ्क्याह—प्राणत्वं चेति ॥ बलवाचिना प्राणशब्देन बलवानिन्द्रो लक्ष्यत इत्यर्थः । बलदैवतत्वाद्वा तत्र प्राणशब्द उपचर्यत इत्याह—बलस्य चेति ॥ कथं तर्हि प्रज्ञात्मशब्द इत्याशङ्क्याह—प्रज्ञात्मत्वमपीति ॥ तथापि हिततमादिवचनं

१. TM omits प्राणः

२. TM. वक्ष्यते.

भाष्यम्

हतज्ञाना देवता इति हि वदन्ति । निश्चिते चैवमपि देवतात्मोपदेशे हिततमत्वादिवचनानि यथासंभवं तद्विषयाण्येव योजयितव्यानि । तस्माद्वक्तुरिन्द्रस्यात्मोपदेशात् न प्राणो ब्रह्मेत्याक्षिप्य प्रतिसमाधीयते "अध्यात्मसंबन्धभूमा ह्यस्मिन्" इति । अध्यात्मसंबन्धः प्रत्यगात्मसंबन्धः, तस्य भूमा बाहुल्यम्, अस्मिन्नध्याये, उपलभ्यते । "यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः" इति प्राणस्यैव प्रज्ञात्मनः प्रत्यग्भूतस्यायुष्प्रदानोपसंहारयोः स्वातन्त्र्यं दर्शयति, न देवताविशेषस्य पराचीनस्य । तथास्तित्वे च प्राणानां निःश्रेयसमित्यध्यात्ममेवेन्द्रियाश्रयं प्राणं दर्शयति । तथा "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति । "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इति चोपक्रम्य "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा-

प्रकटार्थविवरणम्

नेन्द्रे संभवतीत्याशङ्क्याह—निश्चिते चैवमपीति ॥ "विद्यया देवलोकः" इति श्रुतेः इन्द्रोपासनात् स्वर्गो भवतीति हिततमत्वाभिधानम् । अजरामृतत्वादिकं त्वापेक्षिकम् "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इति भावः । तत्र इन्द्रशब्देन सहस्राक्षाद्युपलक्षितश्चिद्धातुरभिप्रेतः, किं वा सचितिकः सहस्राक्षत्वादिविशिष्टो देहः? प्रथमे ब्रह्मण्येव समन्वयः । चरमं प्रत्याह—अध्यात्मसंबन्धेति ॥ अस्तित्वे प्राणस्थितौ स्थितिरिति । "अथातो निःश्रेयसादानम्" इत्याद्यर्थतो गृहीत्वा तदर्थमाह—अस्तित्व इति ॥ प्राणानामिन्द्रियाणामस्तित्वे आश्रये संप्रतिष्ठितमित्यर्थः । नेमिः चक्रोपान्तः । नाभिश्चक्रपिण्डिका । भूतान्येव मीयन्त इति मात्राः । प्रज्ञामात्राः संस्थाविषयेषु चार्पिताः तदधीनत्वाद्विषयव्यवहारस्य प्राणे ब्रह्मणि । स च प्राणो ब्रह्म तल्लिङ्गात् इत्याह—

१. T, T[1], P and TM omit अस्तित्वे...अस्तित्व इति.

२. T, T[1], P and A. सुख-

३. T, T[1], P and TM omit प्राणे...विषयेति ॥ स.

भाष्यम्

नन्दोऽजरोऽमृतः" इति विषयेन्द्रियव्यवहारारनाभिभूतं प्रत्यगात्मानमेवोपसंहरति । "स म आत्मेति विद्यात्" इति चोपसंहारः प्रत्यगात्मपरिग्रहे साधुः, न पराचीनपरिग्रहे । "अयमात्मा ब्रह्म सर्वानुभूः" इति च श्रुत्यन्तरम् । तस्मादध्यात्मसंबन्धबाहुल्याद्ब्रह्मोपदेश एवायम्, न देवतात्मोपदेशः ॥

कथं तर्हि वक्तुरात्मोपदेशः?

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ १-१-३० ॥

इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेन 'अहमेव परं ब्रह्म' इत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म "मामेव विजानीहि" इति; यथा "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च" इति, तद्वत्; "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" इति श्रुतेः। यत्पुनरुक्तम् "मामेव विजानीहि" इत्युक्त्वा विग्रहधर्मैरिन्द्र आत्मानं तुष्टाव त्वाष्ट्रवधादिभिरिति, तत्परिहर्तव्यम्; अत्रोच्यते—न तावत् त्वाष्ट्रवधादीनां विज्ञेयेन्द्रस्तुत्यर्थत्वेनोपन्यासः, यस्मात् 'एवंकर्माहं तस्मान्मां विजानीहि' इति; कथं तर्हि? विज्ञानस्तुत्यर्थत्वेन; यत्कारणं त्वाष्ट्रवधादीनि साहसान्युपन्यस्य परेण विज्ञानस्तुतिमनुसंदधाति "तस्य मे तत्र लोम च न मीयते स यो मां वेद न ह वै

प्रकटार्थविवरणम्

स इति ॥ वाक्यता[त्पर्यमाह—विषयेति ॥] स प्राणः 'ममात्मा' इत्यात्मशब्दसामानाधिकरण्याच्च न बाह्यदेवतापरत्वमित्याह—स म आत्मेति ॥

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥

अस्तु प्रत्यागात्मसंस्पर्शो[1] वाक्ये; तथापि ब्रह्मणि समन्वयस्य किमायातमित्याशङ्क्याह–तद्यो य इति ॥ पूर्वपक्षबीजान्तरमुद्भाव्य पराकरोति—यत्पुन-

१. TM. स्पर्शे.

भाष्यम्

तस्य केन च कर्मणा लोको मीयते" इत्यादिना । एतदुक्तं भवति— यस्मादीदृशान्यपि क्रूराणि कर्माणि कृतवतो मम ब्रह्मभूतस्य लोमापि न हिंस्यते, स योऽन्योऽपि मां वेद, न तस्य केनचिदपि कर्मणा लोको हिंस्यत इति । विज्ञेयं तु ब्रह्मैव "प्राणोऽस्मि प्रज्ञात्मा" इति वक्ष्यमाणम् । तस्माद्ब्रह्मवाक्यमेतत् ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ १-१-३१ ॥

यद्यप्यध्यात्मसंबन्धभूमदर्शनान्न पराचीनस्य देवतात्मन उपदेशः, तथापि न ब्रह्मवाक्यं भवितुमर्हति । कुतः? जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च । जीवस्य तावदस्मिन्वाक्ये विस्पष्टं लिङ्गमुपलभ्यते "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादि । अत्र हि वागादिभिः करणैर्व्यापृतस्य कार्यकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते । तथा मुख्यप्राणलिङ्गमपि "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति । शरीरधारणं च मुख्यप्राणस्य धर्मः, प्राणसंवादे वागा-

प्रकटार्थविवरणम्

रुक्तमित्यादिना ॥ अस्तु विज्ञानस्तुतिः । तेन विज्ञानेन ज्ञेयं देवतातत्त्वमेवेत्याशङ्क्याह—विज्ञेयं तु ब्रह्मैवेति ॥

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥

प्रकारान्तरेण ब्रह्मपरतामाक्षिप्य समाधत्ते—जीवमुख्यप्राणेत्यादिना ॥ ननु शरीरोत्थापनमपि जीवलिङ्गं किं न स्यादित्याशङ्क्याह—शरीरधारणं चेति ॥ सर्वे किल प्राणाः स्वस्य श्रेष्ठतां मन्यमानाः तन्निर्दिधारयिषया प्रजापतिमुपजग्मुः । प्रजापतिना च[१] यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव भवति

१. TM omits च

## भाष्यम्

दीन्प्राणान्प्रकृत्य "तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि" इति श्रवणात् । ये तु "इमं शरीरं परिगृह्य" इति पठन्ति तेषामिमं जीवमिन्द्रियग्रामं वा परिगृह्य शरीरमुत्थापयतीति व्याख्येयम् । प्रज्ञात्मत्वमपि जीवे तावच्चेतनत्वादुपपन्नम् । मुख्येऽपि प्राणे प्रज्ञासाधनप्राणान्तराश्रयत्वादुपपन्नमेव । जीवमुख्यप्राणपरिग्रहे च प्राणप्रज्ञात्मनोः सहवृत्तित्वेनाभेदनिर्देशः, -स्वरूपेण च भेदनिर्देशः, इत्युभयथा निर्देश उपपद्यते "यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः सह ह्येतावस्मिञ्शरीरे वसतः सहोत्क्रामतः" इति । ब्रह्मपरिग्रहे तु किं कस्माद्भिद्येत ? तस्मादिह जीवमुख्यप्राणयोरन्यतर उभौ वा प्रतीयेयातां न ब्रह्मेति चेत्,

## प्रकटार्थविवरणम्

स वः श्रेष्ठ इत्युक्ते क्रमेण वागादिषूत्क्रान्तेष्वपि मूकादिभावेन स्वस्थमस्थाच्छरीरम्; मुख्यस्य तु प्राणस्योत्क्रमिषामात्रेण सर्वेषां व्याकुलत्वप्रसङ्गे तान्प्रति श्रेष्ठः प्राण उवाच 'मा मोहमापद्यध्वम्, यतोऽहमेवैतत्करोमि' किं पञ्चधा प्राणापानादिभेदेनात्मानं प्रविभज्यैतद्बाणं शरीरं अवष्टभ्य विधारयामीति श्रवणादित्यर्थः । पाठान्तरस्याप्यर्थमाह—ये त्विममिति ॥ प्रज्ञासाधनानामिन्द्रियाणामाश्रयत्वान्मुख्येऽपि प्राणे प्रज्ञात्मत्वमुपचारादुपपन्नमित्यर्थः । जीवमुख्यप्राणपरिग्रहे लाभान्तरमाह— जीवमुख्यप्राणेति ॥ "यो वै प्राणः सा प्रज्ञा" इत्यभेदनिर्देशः सहवर्तमानत्वादुपचर्यते । सहोक्त्या च भेदनिर्देशः स्वरूपभेदादेवोपपद्यते । निर्भेदे तु नैष उपपद्यत इति भावः । यस्माज्जीवमुख्यप्राणलिङ्गानि स्पष्टानि दृश्यन्ते, अतः तदनुसारेण ब्रह्मलिङ्गानि नेतुं शक्यन्ते । तस्मात् जीवाद्युपासनापरं वाक्यमित्याह —तस्मादिहेति ॥ परिहारस्तेन सूत्र-

१. TM. स्वश्रेष्ठ-
२. TM. सूक्तादिषु.
३. TM. शरीरमु-
४. A. इति स्तुमः
५. A. तस्यालम्बं चेति तृतीये शरीर-
६. A adds शरीरधारणं
७. A adds मुख्येऽपि प्राण इत्यस्य ग्रन्थस्य.
८. A. नैष दोष इति
९. A. सनपरवाक्यं.

## भाष्यम्

नैतदेवम्, उपासात्रैविध्यात् । एवं सति त्रिविधमुपासनं प्रसज्येत— जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति । न चैतदेकस्मिन्वाक्ये अभ्युपगन्तुं युक्तम् । उपक्रमोपसंहाराभ्यां हि वाक्यैकत्वमवगम्यते । "मामेव विजानीहि" इत्युपक्रम्य "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इत्युक्त्वा अन्ते "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः" इत्येकरूपावुपक्रमोपसंहारौ दृश्येते । तत्रार्थैकत्वं युक्तमाश्रयितुम् । न च ब्रह्मलिङ्गमन्यपरत्वेन परिणेतुं शक्यम्; दशानां भूतमात्राणां प्रज्ञामात्राणां च ब्रह्मणोऽन्यत्रार्पणानुपपत्तेः । आश्रितत्वाच्चान्यत्रापि ब्रह्मलिङ्गवशात् प्राणशब्दस्य ब्रह्मणि वृत्तेः, इहापि च हिततमोपन्यासादिब्रह्मलिङ्गयोगाद्ब्रह्मोपदेश एवायमिति गम्यते । यत्तु मुख्यप्राणलिङ्गं दर्शितम् "इदं शरीरं परिगृह्योत्थापयति" इति, तदसत्; प्राणव्यापारस्यापि परमात्मायत्तत्वात्परमात्मन्युपचरितुं शक्यत्वात् ।

"न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥"

इति श्रुतेः । यदपि "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादि जीवलिङ्गं दर्शितम्, तदपि न ब्रह्मपक्षं निवारयति । न हि जीवो नामात्यन्तभिन्नो ब्रह्मणः, "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादिश्रुतिभ्यः । बुद्ध्याद्युपाधिकृतं तु विशेषमाश्रित्य ब्रह्मैव सन् जीवः कर्ता भोक्ता चेत्युच्यते । तस्योपाधिकृतविशेषपरित्या-

## प्रकटार्थविवरणम्

भागमवतारयति— नैतदेवमित्यादिना ॥ यदि जीवमुख्यप्राणलिङ्गदर्शनात्तदुपासनमङ्गीक्रियते एवं सति ब्रह्मलिङ्गस्यापि दर्शनात् तस्यापि उपासनं वक्तव्यमिति त्रिविधमुपासनं प्रसज्येत; तच्चायुक्तम्, संभवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वादित्यर्थः । यच्चोक्तं ब्रह्मलिङ्गानि जीवादिपक्षे योजयितुं शक्यन्त इति तत्राह—न च ब्रह्मलिङ्गमिति ॥ सूत्रावयवं विभजते—आश्रितत्वाच्चेति॥ अब्रह्मलिङ्गानि तु ब्रह्मपक्षे नेतुं शक्यन्ते सर्वात्मकत्वात्तस्येत्यभिप्रेत्याह—यत्तु

### भाष्यम्

गेन स्वरूपं ब्रह्म दर्शयितुम् "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादिना प्रत्यगात्माभिमुखीकरणार्थ उपदेशो न विरुध्यते।

"यद्वाचानभ्युदितं येन वागभ्युद्यते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥"

इत्यादि च श्रुत्यन्तरं वचनादिक्रियाव्यापृतस्यैवात्मनो ब्रह्मत्वं दर्शयति। यत्पुनरेतदुक्तम् "सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः" इति प्राणप्रज्ञात्मनोर्भेददर्शनं ब्रह्मवादे नोपपद्यत इति, नैष दोषः; ज्ञानक्रियाशक्तिद्वयाश्रययोर्बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोर्भेदनिर्देशोपपत्तेः। उपाधिद्वयोपहितस्य तु प्रत्यगात्मनः स्वरूपेणाभेद इत्यतः "प्राण एव प्रज्ञात्मा" इत्येकीकरणमविरुद्धम्॥

अथवा "नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" इत्यस्यायमन्योऽर्थः—न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते। कथम्? उपासात्रैविध्यात्। त्रिविधमिह ब्रह्मण उपासनं विवक्षितं प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण च। तत्र "आयुरमृतमुपास्स्व आयुः प्राणः" इति, "इदं शरीरं परिगृह्योत्थापयति" इति, "तस्मादेतदेवोक्थमुपासीत"

### प्रकटार्थविवरणम्

इत्यादिना॥ "वक्तारं विद्यात्" इत्यत्र न वक्तुर्ज्ञानं विधेयम्, तस्य प्रत्यक्षत्वात्; किन्तु प्रसिद्धोद्देशेनाप्रसिद्धब्रह्मभावो विधेयः। तदभिमुखीकरणार्थास्तु लिङ्गादय इत्युक्तम्। तत्रैव श्रुत्यन्तरं संवादकमाह—यद्वाचेति॥ येन चैतन्येन वागभ्युद्यते प्रेर्यते वदनव्यापारसमर्थोपाद्यत इत्यर्थः। प्राणप्रज्ञाशब्दवाच्ययोर्भेदाद्भेदव्यपदेशः; उपलक्ष्यस्य तु स्वरूपस्यैक्यादेकत्वनिर्देशोऽप्यविरुद्ध इत्याह—नैष दोष इत्यादिना॥

एवं स्वमतेन व्याख्याय वृत्तिकारमतेन व्याचष्टे—अथवेत्यादिना॥ स्वतन्त्राणां हि त्रयाणामुपासने वाक्यभेदः स्यात्, न त्वेकस्यैवं ब्रह्मण इत्याभिप्रायः। एतदेव प्राणाख्यमुत्थापनादुक्थम्। आयुष्ट्वादिः प्राणधर्म इत्यर्थः। इदानीं

१. A omits प्रज्ञा.
२. A omits एव
३. $T$, $T^1$, and P. उत्तमा-

## भाष्यम्

इति च प्राणधर्मः । "अथ यथास्यै प्रज्ञायै सर्वाणि भूतान्येकीभवन्ति तद्व्याख्यास्यामः" इत्युपक्रम्य "वागेवास्या एकमङ्गमदूदुहत्तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति" इत्यादिः प्रज्ञाधर्मः । "ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतम् । यदि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युः । यदि प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः । न ह्यन्यतरतो

## प्रकटार्थविवरणम्

प्रज्ञाधर्ममाह— अथ यथेति ॥ बुद्धेः स्वरूपेण निष्पन्नाया अपि विषयित्वं नाम रूपं करणादिसमुदायसाध्यं भवति । तत्र कर्मेन्द्रियेषु मध्ये वागेवैतस्याः प्रज्ञाया एकमङ्गं शरीरादुद्धृत्यमदूदुहत् पूरयामास । नामरूपात्मको हि प्रपञ्चो विषयः ; तत्र नामप्रपञ्चे वाग्द्वारेण प्रविष्टा सती बुद्धिः तं प्रति विषयित्वं लिङ्गन[लभते] इत्यर्थः । तस्यै प्रज्ञायै नाम किल परस्तादपरस्मिन्भागे चक्षुरादिना प्रतिविहिता समुपस्थापिता भूतमात्रा रूपादिलक्षणा । चक्षुरादिना हि रूपादिसमर्पणेन बुद्धेरपरमङ्गं रूपप्रपञ्चं प्रति विषयित्वं निर्वर्त्यत इत्यर्थः । एवंविषयिण्या बुद्धेः जीवप्रमातृत्वे हेतुत्वमाह । प्रज्ञयोपाधिभूतया जीवो वाचं समारुह्य वक्तास्मीत्यभिमानाद्वागिन्द्रियद्वारेण सर्वाणि नामानि वक्तव्यत्वेनाप्नोति । चक्षुषा सर्वाणि रूपाणि प्रतिपद्यत इत्येवं प्रमातृत्वमनुभवतीत्यर्थः । सर्वभूतशेषत्वं जीवगतप्रमातृत्वादिहेतुत्वं च जीवधर्म इत्यर्थः । सर्वाधारत्वानन्दाजरादिमत्वं ब्रह्मधर्ममाह— ता वा एता इत्यादिना ॥ पृथिव्यादीनि पञ्च, शब्दस्पर्शादयः पञ्चेति दशभूतमात्राः; श्रोत्रादीनि पञ्च, ज्ञानेन्द्रियाणि तज्जनिताश्च पञ्च बुद्धय इति दश प्रज्ञामात्राः; विषयविषयिणां परस्परसापेक्षत्वादन्योऽन्यमधिकृत्य वर्तनमुच्यत इत्याह— यदि भूतमात्रा इति ॥ परस्परसापेक्षमप्येतद्विषयविषयिद्वयं न द्वैतपक्षवज्ञाना परमार्थत एव भिन्नम्; किन्त्वेकस्मिन्नेव समारोपितमित्याह—

१. T, T¹ and TM. धर्म इत्याह.
२. TM. साध्यं.
३. T, T¹ and TM. तस्यैव
४. T, T¹, P and TM. add च.
५. A. चक्षुषा.
६. TM. omits रूपाणि.

भाष्यम्

रूपं किंचन सिद्ध्येत् । नो एतन्नाना । तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा" इत्यादिर्ब्रह्मधर्मः । तस्मात् ब्रह्मण एवैतदुपाधिद्वयधर्मेण स्वधर्मेण चैकमुपासनं त्रिविधं विवक्षितम् । अन्यत्रापि "मनोमयः प्राणशरीरः" इत्यादावुपाधिधर्मेण ब्रह्मण उपासनमाश्रितम् ; इहापि तद्युज्यते वाक्यस्योपक्रमोपसंहाराभ्यामेकार्थत्वावगमात् प्राणप्रज्ञाब्रह्मलिङ्गावगमाच्च । तस्माद्ब्रह्मवाक्यमेवैतदिति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छङ्करभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
प्रथमाध्यायस्य प्रथमः पादः ॥

प्रकटार्थविवरणम्

नो एतन्नानेति ॥ "आश्रितत्वादिह तद्योगात्" इति सूत्रावयवं वृत्तिकारमतेन व्याचष्टे—अन्यत्रापीत्यादिना ॥ तदेतद्वाचस्पतेर्न रोचते । कथम्? "सोमेन यजेत" इत्यादौ युक्तं विशिष्टविधानमपूर्वार्थत्वात् । इह तु ब्रह्मणः सिद्धतया विधानानर्हत्वात्तदुद्देशेनोपासनत्रयं विधातव्यमिति स्फुटो वाक्यभेद इति । वार्तिककृताप्युक्तम्—

"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥" इति ।

तस्माद्यथाजामित्वदोषोपक्रमादजामित्वोपसंहारादेकस्मिन्नुपांशुयाजपरे वाक्ये श्रूयमाणाः "विष्णुरुपांशु यष्टव्यः" इत्यादयो न विधयः किं त्वर्थवादाः, तथेहापि श्रूयमाणा लिङ्गादयोऽर्थवादाः । तस्माद्वाक्यं ब्रह्मपरमेवेति सिद्धम् ॥

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे
प्रथमाध्याये प्रथमः पादः

---

१. TM. प्रत्ययं.

# अथ द्वितीयः पादः ।

भाष्यम्

प्रथमे पादे "जन्माद्यस्य यतः" इत्याकाशादेः समस्तस्य जगतो जन्मादिकारणं ब्रह्मेत्युक्तम् । तस्य समस्तजगत्कारणस्य ब्रह्मणो व्यापित्वं नित्यत्वं सर्वज्ञत्वं सर्वशक्तित्वं सर्वात्मत्वमित्येवंजातीयका धर्मा उक्ता एव भवन्ति । अर्थान्तरप्रसिद्धानां च केषांचिच्छब्दानां ब्रह्मविषयत्वहेतुप्रतिपादनेन कानिचिद्वाक्यानि स्पष्टब्रह्मलिङ्गानि संदिह्यमानानि ब्रह्मपरतया निर्णीतानि । पुनरप्यन्यानि वाक्यान्यस्पष्टब्रह्मलिङ्गानि संदिह्यन्ते—किं परं ब्रह्म प्रतिपादयन्ति, आहोस्विदर्थान्तरं किंचिदिति । तन्निर्णयाय द्वितीयतृतीयौ पादावारभ्येते ॥

प्रकटार्थविवरणम्

प्रथमे पादे जगत्कारणत्वाभिधानेनार्थादुक्तं व्यापित्वादिधर्मजातमुपजीव्योत्तरं पादद्वयं प्रवर्तत इति हेतुहेतुमद्भावलक्षणं संबन्धमाह—प्रथमे पाद इति ॥ कथं पादभेद इत्याशङ्क्याह—अर्थान्तरेति ॥ भूताकाशादिषु प्रसिद्धानामाकाशादिशब्दानां ब्रह्मपरत्वे तल्लिङ्गादिहेतूपन्यासेन स्पष्टब्रह्मलिङ्गानि वाक्यानि पूर्वत्र निर्णीतानि । परत्र तु अस्पष्टलिङ्गानि वाक्यन्यर्थान्तरपरतया आशङ्क्यमानानि तत्तदाशङ्कानिराकरणेन ब्रह्मपरतयैव निर्णीयन्त इति पादभेदः । [तत्राप्यवान्तरभेदः] प्रायः सविशेषनिर्विशेषपरतया बहुलरूढिविषयतया वा द्रष्टव्यः ॥

१. T and T¹. Space is left out for writing तमुपजीव्यो.

२. T, T¹, P and TM. हेतुहेतुमल्लक्षणं-

३. TM. हेतुत्वोप

४. All mss. omit the words within brackets.

५. T, T¹, P and TM. बहुलविषय.

भाष्यम्

# सर्वत्र प्रसिद्धोपदेशात् ॥ १-२-१ ॥

इदमाम्नायते "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत" "मनोमयः प्राणशरीरो भारूपः" इत्यादि। तत्र संशयः—किमिह मनोमयत्वादिभिर्धर्मैः शारीर आत्मोपास्यत्वेनोपदिश्यते, आहोस्वित्परं ब्रह्मेति । किं तावत्प्राप्तम्? शारीर इति । कुतः? तस्य हि कार्यकरणाधिपतेः प्रसिद्धो मनआदिभिः

प्रकटार्थविवरणम्

सर्वत्र प्रसिद्धोपदेशात् ॥

"सर्वं खल्विदं ब्रह्म" इति प्रतिजानीते। हेतुमाह—तज्जलानिति ॥ तस्माज्जायत इति तज्जम्; तस्मिन्लीयत इति तल्लम्, तस्मिन्ननिति चेष्टत इति तदनम्¹। तज्जं च तत् तल्लं² च तदनश्च इति तज्जलान्। समानाधिकरणे शाकपार्थिवन्यायेन मध्यमपदलोपः, छान्दसो वाऽवयवलोपः। इतिशब्दो हेतौ । यस्मात्तज्जलानत्वात्³ सर्वं जगद्ब्रह्मैव, अतः शान्तो भवेत्, रागादिविषयाभावादित्यर्थः ॥ एवं शमगुणं विधाय गुण्युपासनविधित्सया पुरुषप्रयत्नस्य तावत् साफल्यमाह—अथ खल्विति ॥ पुरुषोऽधिकृतः क्रतुमयः सङ्कल्पप्रधानो भवति। कथम्? यतो यथा ज्ञानं कर्म चानुष्ठेयं सङ्कल्पयतेऽस्मिँल्लोके तदनुसारमेव फलं परलोके प्रतिपद्यते; अतः सोऽधिकृतः⁴ क्रतुं ध्यानं कुर्वीत। किं ध्यायेदित्यपेक्षायां विभक्तिविपरिणामेन मनोमय इत्यादि संबध्यते; मनोमयं प्राणशरीरं ध्यायेदित्यर्थः। अत्र ब्रह्मप्रकरणाज्जीवलिङ्गाच्च संशयमाह—तत्रेति ॥ पूर्वत्रावगतयोः ब्रह्माब्रह्मलिङ्गयोः ब्रह्मलिङ्गानुसारेणाब्रह्मलिङ्गं⁵ निनाय। इह तु ब्रह्मविषयं प्रकरणम्; ततो जीवलिङ्गमेव बलीय इति जीव एव मनोमयत्वादिगुणविशिष्ट उपास्य इत्याह—किं तावदित्यादिना ॥ उपास्यब्रह्माभिधा-

१. T, T¹, P and TM. तदन्
२. T, T¹, and P omit तल्लं च
३. T and T¹. जलान्त्वात्
४. TM. कृतं क्रतुध्यानं
५. T, T¹, P and TM. ब्रह्माब्रह्मलिङ्गानु-
६. T, T¹, P and TM. हेतु

## भाष्यम्

संबन्धः, न परस्य ब्रह्मणः; "अप्राणो ह्यमनाः शुभ्रः" इत्यादिश्रुतिभ्यः। ननु "सर्वं खल्विदं ब्रह्म" इति स्वशब्देनैव ब्रह्मोपात्तम्, कथमिह शारीर आत्मोपास्य आशङ्क्यते? नैष दोषः; नेदं वाक्यं ब्रह्मोपासनाविधिपरम्; किं तर्हि? शमविधिपरम्; यत्कारणम् "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्याह। एतदुक्तं भवति—यस्मात्सर्वमिदं विकारजातं ब्रह्मैव, तज्जत्वात्तल्लत्वात्तदनत्वाच्च, न च सर्वस्यैकात्मत्वे रागादयः संभवन्ति, तस्माच्छान्त उपासीतेति। न च शमविधिपरत्वे सत्यनेन वाक्येन ब्रह्मोपासनं नियन्तुं शक्यते। उपासनं तु "स क्रतुं कुर्वीत" इत्यनेन विधीयते। क्रतुः संकल्पो ध्यानमित्यर्थः। तस्य च विषयत्वेन श्रूयते "मनोमयः प्राणशरीरः" इति जीवलिङ्गम्। अतो ब्रूमो जीवविषयमेतदुपासनमिति। "सर्वकर्मा सर्वकामः" इत्याद्यपि श्रूयमाणं पर्यायेण जीवविषयमुपपद्यते। "एष म आत्मान्तर्हृदये अणीयान्व्रीहेर्वा यवाद्वा" इति च हृदयायतनत्वमणीयस्त्वं चाराग्रमात्रस्य जीवस्यावकल्पते नापरिच्छिन्नस्य ब्रह्मणः। ननु "ज्यायान्पृथिव्याः" इत्याद्यपि न परिच्छिन्नेऽवकल्पत इति। अत्र ब्रूमः—न

## प्रकटार्थविवरणम्

थिनी श्रुतिरेवास्तीत्याह—ननु सर्वमिति॥ मात्र ब्रह्मोपास्यम्, येन श्रुत्या लिङ्गं बाध्येतेत्याह—नैष दोष इति॥ यत्कारणं यस्मात्कारणात्; यदेव[1] शमविधिशेषभूतं ब्रह्म तदेव[2] तर्ह्युपासनाविषयो भवत्वित्याशङ्क्याह—तस्य च[3] विषयत्वेनेति॥ यथा 'राजपुरुषः समागतः, तं भोजय' इत्यत्र राजा पुरुषस्योपसर्जनीभूतो न भोजने संबध्यते, तथा शमविधिशेषभूतं ब्रह्म नोपासनसंबन्धमर्हतीति भावः। कथं तर्हि जीवे सर्वकामादिव्यपदेशः? क्रमेणेत्याह—सर्वकर्मेति॥ जीवलिङ्गान्तरमाह—एष म आत्मेति॥ जीवपक्षे ज्यायस्त्वमाक्षिप्य समाधत्ते—नन्वित्यादिना॥ कथं तर्ह्यन्ते ब्रह्मसंकीर्तन-

१. TM adds इति
२. A omits तदेव
३. TM omits च

भाष्यम्

तावदणीयस्त्वं ज्यायस्त्वं चोभयमेकस्मिन्समाश्रयितुं शक्यम्, विरोधात्, अन्यतराश्रयणे च प्रथमश्रुतत्वादणीयस्त्वं युक्तमाश्रयितुम्; ज्यायस्त्वं तु ब्रह्मभावापेक्षया भविष्यतीति । निश्चिते च जीवविषयत्वे यदन्ते ब्रह्मसंकीर्तनम् "एतद्ब्रह्म" इति, तदपि प्रकृतपरामर्शार्थत्वाज्जीवविषयमेव । तस्मान्मनोमयत्वादिभिर्धर्मैर्जीव उपास्य इति । एवं प्राप्ते ब्रूमः—

परमेव ब्रह्म मनोमयत्वादिभिर्धर्मैरुपास्यम् । कुतः? सर्वत्र प्रसिद्धोपदेशात् । यत्सर्वेषु वेदान्तेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कारणम्, इह च "सर्वं खल्विदं ब्रह्म" इति वाक्योपक्रमे श्रुतम्, तदेव मनोमयत्वादिधर्मैर्विशिष्टमुपदिश्यत इति युक्तम् । एवं च प्रकृतहानाप्रकृतप्रक्रिये न भविष्यतः । ननु वाक्योपक्रमे शमविधिविवक्षया ब्रह्म निर्दिष्टं न स्वविधक्षयेत्युक्तम्; अत्रोच्यते—यद्यपि शमविधिविवक्षया

प्रकटार्थविवरणम्

मित्याशङ्क्याह—निश्चिते चेति ॥

सिद्धान्तत्वेन सूत्रमवतारयति—परमेवेत्यादिना ॥ सर्वत्र प्रसिद्धस्य ब्रह्मणो वाक्योपक्रमे श्रवणादित्यर्थः । अस्तूपक्रमे श्रवणम्; किमित्येतावतोत्तरत्राप्युपास्यं तत्? एवं जीवलिङ्गात्स एवोपास्योऽस्त्वित्याशङ्क्याह—यत् सर्वेष्विति ॥ निष्प्रयोजनाज्जीवलिङ्गात् प्रयोजनवत्प्रकरणमेकवाक्यतासमर्थं तात्पर्यवत्त्वाद्बलीय इति सर्वैरभिलषितत्वेन प्रयोजनवत् ब्रह्म मनोमयत्वादिविशिष्टमुपास्यमिति भावः । जीवलिङ्गं हि न जीवोपलक्षणत्वेन सप्रयोजनम्, एकेनोपलक्षिते अन्यस्य वैयर्थ्यात्; नापि धर्मद्वयविशिष्टस्योपासनाय, मानान्तरेणैव धर्मद्वयवतस्तस्य सिद्धत्वात् इति निष्प्रयोजनता द्रष्टव्या । पूर्ववादी स्वोक्तं स्मारयति—नन्विति ॥ न तावदन्यशेषस्यान्यत्रासंबन्धः, यतः "स्योनं ते सदनं करोमि" इति संस्कारशेषस्यापि सदनस्य "तस्मिन्सीद" इति संबन्धदर्शनादित्याह—अत्रोच्यत इति ॥ यदि तच्छब्देन तत्र संबन्धः, तर्हि इहापि तद्धतादिनेत्याह—यद्यपीति ॥ मन उपाधिरस्येति

१. A. जनं जीव-

२. A. समर्थ-

३. T and T¹. वैयर्थ्यम्.

४. TM. नान्तरेणैव

भाष्यम्

ब्रह्म निर्दिष्टम्, तथापि मनोमयत्वादिषूपदिश्यमानेषु तदेव ब्रह्म संनिहितं भवति, जीवस्तु न संनिहितः, न च स्वशब्देनोपात्त इति वैषम्यम् ॥

## विवक्षितगुणोपपत्तेश्च ॥ १-२-२ ॥

वक्तुमिष्टा विवक्षिताः । यद्यप्यपौरुषेये वेदे वक्तुरभावादिच्छार्थः संभवति, तथाप्युपादानेन फलेनोपचर्यते । लोके हि यत् शब्दाभिहितमुपादेयं भवति तद्विवक्षितमित्युच्यते, यदनुपादेयं तदविवक्षितमिति । तद्वद्वेदेऽप्युपादेयत्वेनाभिहितं विवक्षितं भवति, इतरदविवक्षितम् । उपादानानुपादाने तु वेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते । तदिह ये विवक्षिता गुणा उपासनायामुपादेयत्वेनोपदिष्टाः सत्यसंकल्पप्रभृतयः, ते परस्मिन्ब्रह्मण्युपपद्यन्ते । सत्यसंकल्पत्वं हि सृष्टिस्थितिसंहारेष्वप्रति-

प्रकटार्थविवरणम्

तद्धितः सन्निहितमवलम्बते । प्राणः शरीरमस्येति समासोऽपि सन्निहितावलम्बि[1]क्रियायाः[2] कर्म चाकाङ्क्षितं योग्यं चोपासनायां ब्रह्म । अतः तदेव संबध्यत इत्यर्थः ॥

विवक्षितगुणोपपत्तेश्च ॥

इतश्च ब्रह्मैवोपास्यमित्याह—विवक्षितेति ॥ ननु नायं विग्रहो घटते, वक्तुरभावादित्याशङ्क्याह—यद्यपीति ॥ यदाप्तेन विवक्षितम् एतदुपादेयं दृष्टम्; एते च गुणा उपासनायामुपादेयाः; अत उपचर्यते विवक्षेत्यर्थः । किञ्च लोके यत् ग्रहणयोग्यं तद्विवक्षितम्, तद्विपरीतं[3] त्वविवक्षितमित्यपि[4] प्रसिद्धिरस्तीत्याह—लोके हीति ॥ तर्हीदं ग्राह्यमिदमग्राह्यमित्येतदेव कथं वेदे ज्ञायते इत्याशङ्क्याह—उपादानानुपादाने[5] त्विति ॥ यथा[6] "ग्रहं संमार्ष्टि" इति । अस्य ग्रहोद्देशेन संमार्जनविधाने तात्पर्यात् प्रातिपदिकेनोद्देश्ये लब्धे यदधिकमेकत्वं तदविवक्षितमित्यर्थः । प्रकृतमाह—तदिहेति ॥ सर्वात्मत्वे प्रमाणमाह—

१. T, T[1], P and TM. तालम्बि
२. TM and A. क्रियायां
३. TM and A omit तत्
४. A. चा-
५. A omits अनुपादान.
६. T and T[1]. तथा

भाष्यम्

सद्ब्रह्मत्वात्परमात्मन एवावकल्पते । परमात्मगुणत्वेन च "य आत्मापहतपाप्मा" इत्यत्र "सत्यकामः सत्यसंकल्पः" इति श्रुतम् ; "आकाशात्मा" इति च । आकाशवदात्मा अस्येत्यर्थः । सर्वगतत्वादिभिर्धर्मैः संभवत्याकाशेन साम्यं ब्रह्मणः । "ज्यायान्पृथिव्याः" इत्यादिना चैतदेव दर्शयति । यदाप्याकाश आत्मा यस्येति व्याख्यायते, तदापि संभवति सर्वजगत्कारणस्य सर्वात्मनो ब्रह्मण आकाशात्मत्वम् । अत एव "सर्वकर्मा" इत्यादि । एवमिहोपास्यतया विवक्षिता गुणा ब्रह्मण्युपपद्यन्ते । यत्तूक्तम् "मनोमयः प्राणशरीरः" इति जीवलिङ्गम्, न तद्ब्रह्मण्युपपद्यत इति, तदपि ब्रह्मण्युपपद्यत इति ब्रूमः । सर्वात्मत्वाद्धि ब्रह्मणो जीवसंबन्धीनि मनोमयत्वादीनि ब्रह्मसंबन्धीनि भवन्ति । तथा च ब्रह्मविषये श्रुतिस्मृती भवतः—

"त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥" इति,

"सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥" इति च ।

"अप्राणो ह्यमनाः शुभ्रः" इति श्रुतिः शुद्धब्रह्मविषया, इयं तु "मनोमयः प्राणशरीरः" इति सगुणब्रह्मविषयेति विशेषः । अतो विवक्षितगुणोपपत्तेः परमेव ब्रह्मेहोपास्यत्वेनोपदिष्टमिति गम्यते ॥

प्रकटार्थविवरणम्

तथा चेति ॥ जीर्णो यः स्थविरो दण्डेन साधनेन वञ्चति गच्छति सोऽपि त्वमेवेत्यर्थः । सर्वतः सर्वासु दिक्षु ; श्रुतयः श्रोत्राणि यानि तान्यस्यैवेति सर्वतःश्रुतिमत् । या तु श्रुतिरुदाहृता सा व्यवस्थितविषयेत्याह—अप्राणो हीति ॥

१. TM. सर्वत      २. T and T[1] add चाक्षुः श्रुतिमत्

भाष्यम्

## अनुपपत्तेस्तु न शारीरः ॥ १-२-३ ॥

पूर्वेण सूत्रेण ब्रह्मणि विवक्षितानां गुणानामुपपत्तिरुक्ता । अनेन शारीरे तेषामनुपपत्तिरुच्यते । तुशब्दोऽवधारणार्थः । ब्रह्मैवोक्तेन न्यायेन मनोमयत्वादिगुणम्, न तु शारीरो जीवो मनोमयत्वादिगुणः । यत्कारणम्, "सत्यसंकल्पः" "आकाशात्मा" "अवाकी" "अनादरः" ' ज्यायान्पृथिव्याः" इति चैवंजातीयका गुणा न शारीरे आञ्जस्येनोपपद्यन्ते । शारीर इति शरीरे भव इत्यर्थः । नन्वीश्वरोऽपि शरीरे भवति; सत्यम्, शरीरे भवति न तु शरीर एव भवति, "ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्" "आकाशवत्सर्वगतश्च नित्यः" इति च व्यापित्वश्रवणात् । जीवस्तु शरीर एव भवति, तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात् ॥

## कर्मकर्तृव्यपदेशाच्च ॥ १-२-४ ॥

इतश्च न शारीरो मनोमयत्वादिगुणः, यस्मात्कर्मकर्तृव्यपदेशो भवति "एतमितः प्रेत्याभिसंभवितास्मि" इति । एतमिति प्रकृतं मनो-

प्रकटार्थविवरणम्

### अनुपपत्तेस्तु न शारीरः ॥

यथा तर्हि[1] जीवगतं मनोमयत्वादि ब्रह्मणो[2] भवत्यभेदात्, एवं ब्रह्मगतं सत्यसङ्कल्पत्वादि जीवेऽप्यस्त्विति आशङ्कां नुदन् सङ्गतिमाह— पूर्वेणेति ॥ सत्यप्यभेदेऽनुपपत्तिरुच्यते, तस्य परिच्छिन्नत्वेनासदारोपप्रसङ्गादिति भावः । वागेव वाकः, वाकोऽस्यास्तीति वाकी, न वाकी अवाकी । आप्तकामत्वादेव कस्मिंश्चिदपि शोभने विषये नास्त्यस्य[3]ादर इत्यर्थः ॥

### कर्मकर्तृव्यपदेशाच्च ॥

प्राप्यप्रापकभावेन कर्मकर्तृव्यपदेशो व्याख्यातः । इदानीं प्रकारान्तरे-

१. T. Space is left out for writing तर्हि जीव-

२. T, T[1], P and TM. ब्रह्मणे

३. A omits अस्य.

भाष्यम्

मयत्वादिगुणमुपास्यमात्मानं कर्मत्वेन प्राप्यत्वेन व्यपदिशति; अभिसंभवितास्मीति शारीरमुपासकं कर्तृत्वेन प्रापकत्वेन । अभिसंभवितास्मीति प्राप्तास्मीत्यर्थः । न च सत्यां गतावेकस्य कर्मकर्तृव्यपदेशो युक्तः। तथोपास्योपासकभावोऽपि भेदाधिष्ठान एव । तस्मादपि न शारीरो मनोमयत्वादिविशिष्टः ॥

## शब्दविशेषात् ॥ १-२-५ ॥

इतश्च शारीरादन्यो मनोमयत्वादिगुणः; यस्माच्छब्दविशेषो भवति समानप्रकरणे श्रुत्यन्तरे "यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयः" इति । शारीरस्यात्मनो यः शब्दोऽभिधायकः सप्तम्यन्तः "अन्तरात्मन्" इति, तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः । तस्मात्तयोर्भेदोऽधिगम्यते ॥

## स्मृतेश्च ॥ १-२-६ ॥

स्मृतिश्च शारीरपरमात्मनोर्भेदं दर्शयति—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" ॥ इत्याद्या ।

प्रकटार्थविवरणम्

णाह—उपास्योपासकभावोऽपीति ॥

शब्दविशेषात् ॥

अन्तरात्मन्निति ॥ विभक्तिलोपश्छान्दसः । देहाद्यन्तरात्मनीत्यर्थः ॥

स्मृतेश्च ॥

हृदिति ॥ यस्य शारीराद्भेदोऽभिधीयते स्मृत्या । ततो मनोमयत्वादिविशिष्टोऽपि हृदि स्थितः शारीरादन्य इति भावः । कर्मकर्तृभावेन वाक्य एव भेदः

भाष्यम्

अत्राह—कः पुनरयं शारीरो नाम परमात्मनोऽन्यः, यः प्रतिषिध्यते "अनुपपत्तेस्तु न शारीरः" इत्यादिना ? श्रुतिस्तु "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" इत्येवंजातीयका परमात्मनोऽन्यमात्मानं वारयति । तथा स्मृतिरपि "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" इत्येवंजातीयका—इति ॥

अत्रोच्यते—सत्यमेवैतत् । पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते ; यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते, तद्वत् । तदपेक्षया च कर्मकर्तृत्वादिभेदव्यवहारो न विरुध्यते प्राक् "तत्त्वमसि" इत्यात्मैकत्वोपदेशग्रहणात् । गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्वव्यवहारपरिसमाप्तिरेव स्यात् ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ १-२-७ ॥

अर्भकमल्पमोको नीडम् , "एष म आत्मान्तर्हृदये" इति परिच्छिन्नायतनत्वात् , स्वशब्देन च "अणीयान्व्रीहेर्वा यवाद्वा" इत्यणीयस्त्वव्यपदेशात्, शारीर एवाराग्रमात्रो जीव इहोपदिश्यते, न सर्वगतः परमात्मा—इति यदुक्तं तत्परिहर्तव्यम् । अत्रोच्यते—नायं दोषः ।

प्रकटार्थविवरणम्

सूत्रकृतोऽभिमत इति केषाञ्चिदभिमानापनयनाय निरस्तमप्युद्भावयति—अत्राहेत्यादिना ॥

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्ननिचाय्यत्वादेवं व्योमवच्च ॥

परिशिष्टं जीवलिङ्गान्तरं उद्भाव्यापाकरोति—अर्भकेति ॥ अर्भकं ओकः यस्य सोऽर्भकौकाः तस्य भावः तत्त्वम्, तस्मात्, अर्भकौकस्त्वादित्यर्थः । ज्यायस्त्वस्याप्युपदेशान्नात्र जीवलिङ्गमेवैकान्तिकमुपदिष्टमित्याह—अत्रोच्यत इति ॥ ब्रह्मप्राप्त्यपेक्षं तन्नविष्यतीत्युक्तमित्याह पूर्ववादी—नायं दोष इति ॥

भाष्यम्

न तावत्परिच्छिन्नदेशस्य सर्वगतत्वव्यपदेशः कथमप्युपपद्यते । सर्वगतस्य तु सर्वदेशेषु विद्यमानत्वात्परिच्छिन्नदेशव्यपदेशोऽपि कयाचिदपेक्षया संभवति । यथा समस्तवसुधाधिपतिरपि हि सन् अयोध्याधिपतिरिति व्यपदिश्यते । कया पुनरपेक्षया सर्वगतः सन्नीश्वरोऽर्भकौका अणीयांश्च व्यपदिश्यत इति । निचाय्यत्वादेवमिति ब्रूमः । एवमणीयस्त्वादिगुणगणोपेत ईश्वरः तत्र हृदयपुण्डरीके निचाय्यो द्रष्टव्य उपदिश्यते, यथा सालग्रामे हरिः । तत्रास्य बुद्धिविज्ञानं ग्राहकम् ; सर्वगतोऽपीश्वरस्तत्रोपास्यमानः प्रसीदति । व्योमवच्चैतद्द्रष्टव्यम् । यथा सर्वगतमपि सद्व्योम सूचीपाशाद्यपेक्षयार्भकौकोऽणीयश्चेति व्यपदिश्यते, एवं ब्रह्मापि । तदेवं निचाय्यत्वापेक्षं ब्रह्मणोऽर्भकौकस्त्वमणीयस्त्वं च न पारमार्थिकम् । तत्र यदाशङ्क्यते—हृदयायतनत्वाद्ब्रह्मणो हृदयानां च प्रतिशरीरं भिन्नत्वाद्भिन्नायतनानां च शुकादीनामनेकत्वसावयवत्वानित्यत्वादिदोषदर्शनाद्ब्रह्मणोऽपि तत्प्रसङ्ग इति, तदपि परिहृतं भवति ॥

प्रकटार्थविवरणम्

अणुपरिमाणे स्थिते न[१] जीवानां ब्रह्मभावो घटते ; नेष्टे वा नाब्रह्मभावोऽपि घटत इत्याह सिद्धान्ती—न तावदिति ॥ तर्हि महत्परिमाणे स्थिते नष्टे वा सर्वगतस्यापि नाणुत्वं भवतीत्याशङ्क्याह—सर्वगतस्यत्विति ॥ तत्त्वतोऽसंभवेऽपि परापेक्षया उपपद्यत इत्यर्थः ॥ ननु विकारान्तराण्यनादृत्य हृदये किमित्युपदिश्यत इत्याशङ्क्याह—तत्रेति ॥ तत्र[२] हृदयेऽस्य परमात्मनो बुद्धिपरिणामरूपं विज्ञानं व्यञ्जकं भवति । अतः पराभिव्यक्तियोग्यस्थानत्वात् तत्रोपदिश्यत इत्यर्थः । "व्योमवच्च" इति सूत्रभागं व्याचष्टे—यथेति ॥ व्योमदृष्टान्तेन चोद्यान्तरं च चूर्णितमित्याह—तत्र यदाशङ्क्यत इति ॥ व्योम्नः परोपाधिपरिच्छेदादिना स्वरूपा[३]नित्यताद्यदर्शनादिति भावः ॥

१. T, T¹, TM and P omit न जीवानां...घटते.　　३. A. स्वरूपता
२. A. अत्र

भाष्यम्

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ १-२-८ ॥

व्योमवत्सर्वगतस्य ब्रह्मणः सर्वप्राणिहृदयसंबन्धात्, चिद्रूपतया च शारीरादविशिष्टत्वात्, सुखदुःखादिसंभोगोऽप्यविशिष्टः प्रसज्येत; एकत्वाच्च । न हि परस्मादात्मनोऽन्यः कश्चिदात्मा संसारी विद्यते, "नान्योऽतोऽस्ति विज्ञाता" इत्यादिश्रुतिभ्यः । तस्मात्परस्यैव ब्रह्मणः संभोगप्राप्तिरिति चेत्, न; वैशेष्यात् । न तावत्सर्वप्राणिहृदयसंबन्धात् चिद्रूपतया च शारीरवद्ब्रह्मणः संभोगप्रसङ्गः, वैशेष्यात् । विशेषो हि भवति शारीरपरमेश्वरयोः । एकः कर्ता भोक्ता धर्माधर्मादिसाधनः सुखदुःखादिमांश्च । एकस्तद्विपरीतोऽपहतपाप्मत्वादिगुणः । एतस्मादनयोर्विशेषादेकस्य भोगः, नेतरस्य । यदि च संनिधानमात्रेण वस्तुशक्तिमनाश्रित्य

प्रकटार्थविवरणम्

संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥

ब्रह्मणो हृदयायतनत्वेऽनिष्टसंभोगप्रसङ्गात् जीव एव हृदयायतन उपास्य इत्याह—व्योमवदिति ॥ ब्रह्मापि भोक्तृ हृदयायतनत्वे सति चेतनत्वात् संसारिवदिति प्रयोगः । ब्रह्म भोक्तृ भोक्त्रभिन्नत्वात् जीववदिति प्रयोगान्तरमाह—एकत्वाच्चेति ॥ प्रथमप्रयोगे तावदप्रयोजको हेतुः, धर्माधर्मवश्यत्वस्यैव प्रयोजकत्वात् इत्यभिप्रेत्य वैलक्षण्यमाह—न वैशेष्यादिति ॥ इतश्च न ब्रह्मणो भोग इत्याह—यदि चेति ॥ किञ्च सर्वगता बहवो जीवा इति येषां मतम्, तेषामप्येकस्मिन्नेव देहदेशे सर्वेषां सन्निधानात् सम एव भोगः प्रसज्येत, नं चैकस्यापि । यदि स्वकर्मोपार्जिते शरीरे भोग इत्यभिदध्युः तथा वयमप्यभिदधीमहीत्याह—

१. TM. विष्ट

T, T¹, and P, अनिष्टत्वं

२. TM. हि

३. TM. न चैक-

भाष्यम्

कार्यसंबन्धोऽभ्युपगम्यते, आकाशादीनामपि दाहादिप्रसङ्गः । सर्वगतानेकात्मवादिनामपि समावेतौ चोद्यपरिहारौ । यदप्येकत्वाद्ब्रह्मण आत्मान्तराभावाच्छारीरस्य भोगेन ब्रह्मणो भोगप्रसङ्ग इति, अत्र वदामः—इदं तावद्देवानांप्रियः प्रष्टव्यः—कथमयं त्वयात्मान्तराभावोऽध्यवसित इति । "तत्त्वमसि" "अहं ब्रह्मास्मि" "नान्योऽतोऽस्ति विज्ञाता" इत्यादिशास्त्रेभ्य इति चेत्, यथाशास्त्रं तर्हि शास्त्रीयोऽर्थः प्रतिपत्तव्यः, न तत्रार्धजरतीयं लभ्यम् । शास्त्रं च "तत्त्वमसि" इत्यपहतपाप्मत्वादिविशेषणं ब्रह्म शारीरस्यात्मत्वेनोपदिशच्छारीरस्यैव तावदुपभोक्तृत्वं वारयति । कुतस्तदुपभोगेन ब्रह्मण उपभोगप्रसङ्गः? अथागृहीतं शारीरस्य ब्रह्मणैकत्वम्, तदा मिथ्याज्ञाननिमित्तः शारीरस्योपभोगः; न तेन परमार्थरूपस्य ब्रह्मणः संस्पर्शः । न हि बालैस्तलमलिनतादिभिर्व्योम्नि विकल्प्यमाने तलमलिनतादिविशिष्टमेव परमार्थतो व्योम भवति । तदाह—न, वैशेष्यादिति । नैकत्वेऽपि शारीरस्योपभोगेन ब्रह्मण उपभोगप्रसङ्गः, वैशेष्यात् । विशेषो हि भवति मिथ्याज्ञानसम्यग्ज्ञानयोः । मिथ्याज्ञानकल्पित उपभोगः, सम्यग्ज्ञानदृष्टमेकत्वम् । न च मिथ्याज्ञानकल्पितेनोपभोगेन सम्यग्ज्ञानदृष्टं वस्तु संस्पृश्यते । तस्मान्नोपभोगगन्धोऽपि शक्य ईश्वरस्य कल्पयितुम् ॥

प्रकटार्थविवरणम्

सर्वगतानेकेति ॥ ब्रह्म भोक्तृ इति प्रतिज्ञैव नाङ्गं धारयत्यागमविरोधादिति मत्वाह—अत्र वदाम इत्यादिना ॥ शास्त्रादेकत्वं नाद्यापि यदि बुद्धं त्वया तदा भेदप्रसिद्धिबाधिता प्रतिज्ञा भविष्यतीत्याह—अथागृहीतमित्यादिना ॥ तस्मादीश्वरस्य हृदयायतनत्वेऽप्युपभोगाप्राप्तेः मनोमयत्वादिविशिष्ट ईश्वर एवोपास्य इति स्थितम् ॥

१. T¹. किं
A. यदिति

२. A. तया

३. TM. हृदु-

भाष्यम्

## अत्ता चराचरग्रहणात् ॥ १-२-९ ॥

कठवल्लीषु पठ्यते

"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" ॥ इति ।

अत्र कश्चिदोदनोपसेचनसूचितोऽत्ता प्रतीयते । तत्र किमग्निरत्ता स्यात्, उत जीवः, अथवा परमात्मा इति संशयः; विशेषानवधारणात्, त्रयाणां चाग्निजीवपरमात्मनामस्मिन्ग्रन्थे प्रश्नोपन्यासोपलब्धेः । किं तावत्प्राप्तम्? अग्निरत्तेति । कुतः? "अग्निरन्नादः" इति श्रुतिप्रसिद्धिभ्याम् । जीवो वात्ता स्यात् "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति दर्शनात्; न परमात्मा, "अनश्नन्नन्यो अभिचाकशीति" इति दर्शनादित्येवं प्राप्ते ब्रूमः—

अत्तात्र परमात्मा भवितुमर्हति । कुतः? चराचरग्रहणात् । चराचरं हि स्थावरजङ्गमं मृत्यूपसेचनमिहाद्यत्वेन प्रतीयते, तादृशस्य चाद्यस्य न परमात्मनोऽन्यः कार्त्स्न्येनात्ता संभवति । परमात्मा तु

प्रकटार्थविवरणम्

### अत्ता चराचरग्रहणात् ॥

यस्योभे ब्रह्मक्षत्रे ओदनो भवतः, मृत्युर्मारको यस्योपसेचनं अन्नव्यापकमुपकरणं क इत्थंभूतं वेद यत्र येन स्वरूपेण सोऽत्ता वर्तत इत्यर्थः । आपातप्रतिपन्नं संशयविषयमाह—अत्र चेति ॥ सबीजं संशयमाह—तत्र किमिति ॥ "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तम्" इत्यग्निविषयः प्रश्नः । "येयं प्रेते विचिकित्सा" इति जीवविषयः । "अन्यत्र धर्मात्" इति ब्रह्मविषयः प्रश्नः ॥

पूर्वाधिकरणान्ते परमात्मनो भोक्तृत्वप्रतिषेधादग्निर्जीवो वा स्यादिति पूर्वः पक्षः । यदि कर्मफलभोक्तृत्वमत्तृत्वं स्यात् तर्हि तत्परमात्मनो न स्यात्; इह तु तद्ग्रहणकारणाभावात् सर्वोपसंहर्तृतां परमात्मात्ताभिधीयत इत्याह—अत्तात्र

१. A. आपाततः
२. TM omits येयं......प्रश्नः
३. A. पुनः
४. A omits अत्ता.

भाष्यम्

विकारजातमुपसंहरन्सर्वमत्तीत्युपपद्यते । नन्विह चराचरग्रहणं नोपलभ्यते, कथं सिद्धवच्चराचरग्रहणं हेतुत्वेनोपादीयते ? नैष दोषः, मृत्यूपसेचनत्वेनेहाद्यत्वेन सर्वस्य प्राणिनिकायस्य प्रतीयमानत्वात्, ब्रह्मक्षत्रयोश्च प्राधान्यात्प्रदर्शनार्थत्वोपपत्तेः । यत्तु परमात्मनोऽपि नात्तृत्वं संभवति "अनश्नन्नन्योऽभिचाकशीति" इति दर्शनादिति, अत्रोच्यते—कर्मफलभोगस्य प्रतिषेधकमेतद्दर्शनम्, तस्य संनिहितत्वात्; न विकारसंहारस्य प्रतिषेधकम्, सर्ववेदान्तेषु सृष्टिस्थितिसंहारकारणत्वेन ब्रह्मणः प्रसिद्धत्वात् । तस्मात्परमात्मैवेहात्ता भवितुमर्हति ॥

## प्रकरणाच्च ॥ १-२-१० ॥

इतश्च परमात्मैवेहात्ता भवितुमर्हति, यत्कारणं प्रकरणमिदं परमात्मनः, "न जायते म्रियते वा विपश्चित्" इत्यादि प्रकृतग्रहणं च न्याय्यम् । "क इत्था वेद यत्र सः" इति च दुर्विज्ञानत्वं परमात्मलिङ्गम् ॥

प्रकटार्थविवरणम्

परमात्मेत्यादिना ॥ सर्वसंहर्तृग्रहणेऽपि कारणं नास्तीत्याह—नन्विहेति ॥ यत्रार्थान्तरे प्रसिद्धः शब्दोऽर्थान्तरे गुणयोगात्प्रयुज्यते तत्र सन्निहितपदार्थानुसारेणैवेति मृत्युसन्निधानाज्जगतं विनाश्यत्वगुणमादाय ब्राह्मणादिजात्युपलक्षितं सर्वमेव विनाश्यमोदनपदेनोपलक्ष्यते। अस्य सर्वस्य संहर्ता प्रतीयत इत्याह—नैष दोष इति ॥ श्रुतेः गतिं वक्तुमुद्भावयति—यत्त्विति ॥

प्रकरणाच्च ॥

लिङ्गात्परमात्मानमुपपाद्य इदानीं प्रकरणमाह—प्रकरणाच्चेति ॥ यत्कारणं यस्मात्कारणादित्यर्थः । न जायते न म्रियते चेत्याद्यन्तयोः भावविकारयोः प्रतिषेधेन मध्यवर्तिनोऽपि भावविकाराः प्रतिषिद्धा भवन्ति । कूटस्थनित्य इत्यर्थः । विपश्चित् मेधावी सर्वज्ञ इत्यर्थः । किञ्च अग्निजीवयोः प्रत्यक्षत्वान्न दुर्ज्ञेयत्वं घटत इत्याह—क इत्था वेदेति ॥

१. A omits जाति  २. A omits न
३. T, T¹, P and TM. अस्य तस्य सर्वं  ४. T, T¹, and P omit अपि

भाष्यम्

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ १-२-११ ॥

कठवल्लीष्वेव पठ्यते

"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।

छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" ॥ इति। तत्र संशयः—किमिह बुद्धिजीवौ निर्दिष्टावुत जीवपरमात्मानाविति । यदि बुद्धिजीवौ, ततो बुद्धिप्रधानात्कार्यकरणसंघाताद्विलक्षणो जीवः प्रतिपादितो भवति । तदपीह प्रतिपादयितव्यम्,

"येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः" ॥

इति पृष्टत्वात् । अथ जीवपरमात्मानौ, ततो जीवाद्विलक्षणः परमात्मा प्रतिपादितो भवति । तदपीह प्रतिपादयितव्यम्,

"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥"

प्रकटार्थविवरणम्

### गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥

ऋतं सत्यमवश्यंभावि कर्मफलम् ; पिबन्तौ भुञ्जानौ ; सुकृतस्य लोके शरीरे; परस्य ब्रह्मणोऽर्धं स्थानं परार्धम् ; तस्मिन् परमे प्रकृष्टे हृदये; गुहां बुद्धिम्; प्रविष्टौ छायातपवद्विरुद्धौ ब्रह्मविदो वदन्ति । तथा पञ्चाग्निविदः । तथा त्रिर्नाचिकेतोऽग्निश्चितो यैस्ते त्रिणाचिकेताः । बुद्ध्यवच्छिन्नस्य जीवस्य परमात्मनश्च प्रकृतत्वात् संशयमाह—तत्रेति ॥ संदिग्धं सप्रयोजनं च विचारमर्हतीत्युभयत्र प्रयोजनमाह—यदीत्यादिना ॥ मनुष्ये प्रेते मृते येयं विचिकित्सा संशयः परलोकभोक्तास्तीत्येके, नास्तीति चान्ये, त्वयोपदिष्टोऽहमेतद्विद्यां ज्ञातु-

१. A सम्यगार्जितस्य...कृत्स्नशरीरेषु वर्तमानो अस्य परस्य    २. A. स्थाने अर्हति

भाष्यम्

इति पृष्टत्वात् । अत्राहाक्षेप्ता—उभावप्येतौ पक्षौ न संभवतः । कस्मात्? ऋतपानं कर्मफलोपभोगः, "सुकृतस्य लोके" इति लिङ्गात् । तच्चेतनस्य क्षेत्रज्ञस्य संभवति, नाचेतनाया बुद्धेः । "पिबन्तौ" इति च द्विवचनेन द्वयोः पानं दर्शयति श्रुतिः । अतो बुद्धिक्षेत्रज्ञपक्षस्तावन्न संभवति । अत एव क्षेत्रज्ञपरमात्मपक्षोऽपि न संभवति; चेतनेऽपि परमात्मनि ऋतपानासंभवात्, "अनश्नन्नन्यो अभिचाकशीति" इति मन्त्रवर्णादिति । अत्रोच्यते—नैष दोषः । 'छत्रिणो गच्छन्ति' इत्येकेनापि छत्रिणा बहूनां छत्रित्वोपचारदर्शनात् । एवमेकेनापि पिबता द्वौ पिबन्तावुच्येयाताम् । यद्वा जीवस्तावत्पिबति, ईश्वरस्तु पाययति; पाययन्नपि पिबतीत्युच्यते, पाचयितर्यपि पक्तृत्वप्रसिद्धिदर्शनात् । बुद्धिक्षेत्रज्ञपरिग्रहोऽपि संभवति; करणे कर्तृत्वोपचारात्, 'एधांसि पचन्ति' इति प्रयोगदर्शनात् । न चाध्यात्माधिकारेऽन्यौ कौचिद्द्वावृतं पिबन्तौ संभवतः । तस्माद्बुद्धिजीवौ स्यातां जीवपरमात्मानौ वेति संशयः ॥

किं तावत्प्राप्तम्? बुद्धिक्षेत्रज्ञाविति । कुतः? "गुहां प्रविष्टौ" इति विशेषणात् । यदि शरीरं गुहा, यदि वा हृदयम्, उभयथापि बुद्धिक्षेत्रज्ञौ गुहां प्रविष्टावुपपद्येते । न च सति संभवे सर्वगतस्य ब्रह्मणो

प्रकटार्थविवरणम्

मिच्छामीत्यर्थः । उभयोर्भोक्तृत्वासंभवेन कश्चित्संशयमाक्षिपति—अत्राहेति ॥ मुख्यासंभवेऽप्येकस्यौपचारिकं भविष्यतीत्याह—नैष दोष इति ॥ मुख्यसंभवे ह्युपचारकल्पना दोषः; न चेहान्यस्य मुख्यस्य संभव इत्याह—न चाध्यात्मेति ॥ पूर्वाधिकरणे मृत्युसन्निधानादोदनशब्दो विनाश्ये वर्तत इत्युक्तम् । एवमिहापि मुख्यगुहाप्रवेशसुकृतलोकवर्त्मादिसन्निधानात् जीवस्य द्वितीय ऋतपाता मुख्य एवेत्याह— किं तावदित्यादिना ॥ सङ्ख्याश्रवणे लोके सजातीये प्रथमप्रतीतिदर्शनात् बुद्धेश्च कारकत्वेन समानत्वेऽपि कारकत्वस्य बहिरङ्गत्वात् चेतनत्वस्य स्वभावतयान्तरङ्गत्वाच्चेतनः परमात्मैव द्वितीय इति ॥

## भाष्यम्

विशिष्टदेशत्वं युक्तं कल्पयितुम् । "सुकृतस्य लोके" इति च कर्मगोचरानतिक्रमं दर्शयति । परमात्मा तु न सुकृतस्य वा दुष्कृतस्य वा गोचरे वर्तते, "न कर्मणा वर्धते नो कनीयान्" इति श्रुतेः । "छायातपौ" इति च चेतनाचेतनयोर्निर्देश उपपद्यते, छायातपवत्परस्परविलक्षणत्वात् । तस्माद्बुद्धिक्षेत्रज्ञाविहोच्येयातामित्येवं प्राप्ते ब्रूमः—

विज्ञानात्मपरमात्मानाविहोच्येयाताम् । कस्मात्? आत्मानौ हि तावुभावपि चेतनौ समानस्वभावौ । संख्याश्रवणे च समानस्वभावेष्वेव लोके प्रतीतिर्दृश्यते । 'अस्य गोर्द्वितीयोऽन्वेष्टव्यः' इत्युक्ते गौरेव द्वितीयोऽन्विष्यते, नाश्वः पुरुषो वा । तदिह ऋतपानेन लिङ्गेन निश्चिते विज्ञानात्मनि द्वितीयान्वेषणायां समानस्वभावश्चेतनः परमात्मैव प्रतीयते । ननूक्तं गुहाहितत्वदर्शनान्न परमात्मा प्रत्येतव्य इति; गुहाहितत्वदर्शनादेव परमात्मा प्रत्येतव्य इति वदामः । गुहाहितत्वं तु श्रुतिस्मृतिष्वसकृत्परमात्मन एव दृश्यते "गुहाहितं गह्वरेष्ठं पुराणम्" "यो वेद निहितं गुहायां परमे व्योमन्" "आत्मानमन्विच्छ गुहां प्रविष्टम्" इत्याद्यासु । सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थो देशविशेषोपदेशो न विरुध्यत इत्येतदप्युक्तमेव । सुकृतलोकवर्तित्वं तु छत्रित्ववदे-

## प्रकटार्थविवरणम्

तद्दर्शनादित्यस्यार्थमाह—सङ्ख्याश्रवणे चेति ॥ प्रथमप्रतिपन्नचेतनत्वानुरोधेन चरमप्रतिपन्नं गुहाहितत्वं नेतव्यमित्यभिप्रेत्याह—गुहाहितत्वदर्शनादेवेति ॥ गुहायां बुद्धौ; आहितं निक्षिप्तम्; गह्वरे हृदये स्थितम्; पुराणं चिरन्तनम्; परमे व्योमनि हृदयाधारभूताकाशे । सुकृतलोकवर्तित्वं सफ-

१. A. णाचेति

### भाष्यम्

कस्मिन्नपि वर्तमानमुभयोरविरुद्धम् । "छायातपौ" इत्यप्यविरुद्धम्; छायातपवत् परस्परविलक्षणत्वात्संसारित्वासंसारित्वयोः, अविद्याकृतत्वात्संसारित्वस्य पारमार्थिकत्वाच्चासंसारित्वस्य । तस्माद्विज्ञानात्मपरमात्मानौ गुहां प्रविष्टौ गृह्येते ॥

कुतश्च विज्ञानात्मपरमात्मानौ गृह्येते ?

## विशेषणाच्च ॥ १-२-१२ ॥

विशेषणं च विज्ञानात्मपरमात्मनोरेव भवति । "आत्मानं रथिनं विद्धि शरीरं रथमेव तु" इत्यादिना परेण ग्रन्थेन रथिरथादिरूपककल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति । "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति च परमात्मानं गन्तव्यम् कल्पयति । तथा—

"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" ॥ इति

### प्रकटार्थविवरणम्

र्मोपार्जितशरीरे वृत्तिलाभः । यदुक्तं जडाजडप्रकाशत्वेन बुद्धिजीवयोश्छायातपत्वमिति तत्राह—छायेति ॥

### विशेषणाच्च ॥

किं च वाक्यशेषे गन्तव्येन ब्रह्मणा जीवो विशेषितो न बुद्ध्या । अतोऽपि पूर्वं बुद्धिजीवौ नोक्तावित्याह—विशेषणाच्चेति ॥ अध्वनः संसारमार्गस्य पारं संसारधर्मास्पृष्टमित्यर्थः । किं च पूर्वतनवाक्यपर्यालोचनयापि जीवेश्वरावेव ऋतपावुक्तावित्याह—तथा तमिति ॥ दुर्दर्शं सूक्ष्मत्वात् दुर्ज्ञानम्; तत एव गूढ-

१. A. रावर्तपा इत्यर्थः । इह TM. रावर्त वावृत्तावित्याह—तथात्वपीति.

२ A. शुद्ध-

भाष्यम्

पूर्वस्मिन्नपि ग्रन्थे मन्तृमन्तव्यत्वेनैतावेव विशेषितौ । प्रकरणं चेदं परमात्मनः । "ब्रह्मविदो वदन्ति" इति च वक्तृविशेषोपादानं परमात्मपरिग्रहे घटते । तस्मादिह जीवपरमात्मानावुच्येयाताम् ॥

एष एव न्यायः "द्वा सुपर्णा सयुजा सखाया" इत्येवमादिष्वपि । तत्रापि ह्यध्यात्माधिकारान्न प्राकृतौ सुपर्णावुच्येते । "तयोरन्यः पिप्पलं स्वाद्वत्ति" इत्यदनलिङ्गाद्विज्ञानात्मा भवति । "अनश्नन्नन्यो अभिचाकशीति" इत्यनशनचेतनत्वाभ्यां परमात्मा । अनन्तरे च मन्त्रे तावेव द्रष्टृद्रष्टव्यभावेन विशिनष्टि—

प्रकटार्थविवरणम्

मनुप्रविष्टं गहनतां गतम्; अध्यात्मयोगः प्रत्यगात्मविषयश्चित्तनिरोधः तत्सहकृताद्वाक्यादधिगमो ब्रह्मात्मैक्यव्यञ्जिका चित्तवृत्तिः । चकारसूचितमाह—प्रकरणं चेदमित्यादिना ॥

"ऋतं पिबन्तौ" इत्यत्र जीवानुवादने ततोऽतिरिक्तः परमात्मा प्रतिपाद्यते वाक्यार्थान्वयितत्पदार्थपरिशोधनायेत्यधिकरणार्थमुपसंहृत्य तमेवान्यत्रातिदिशति—एष एव न्याय इति ॥ द्वा द्वौ, छान्दसो द्विवचनस्याकारः; सुपर्णाविव सहैव युज्येते नियम्यनियामकभावेनेति सयुजौ; सखायौ चेतनत्वेन समानस्वभावौ । नियम्यत्वेन समानं तुल्यं वृक्षं परिषस्वजाते आश्रितौ । ननु नेयमृगत्रोदाहरणीया, यतः सुपर्णौ कौचित् पक्षिणौ प्रतीयेते इत्याशङ्क्याह—तत्रापीति ॥ आद्यसूत्रं योजयति—तयोरन्य इति ॥ उभयलिङ्गदर्शनादेहं समाश्रितौ सुपर्णौ जीवपरमात्मानावित्यर्थः । "विशेषणाच्च" इति द्वितीयसूत्रं योजयति—अनन्तरे चेति ॥ अनीशया अविद्यया सोपाधिभूतया मुह्यमानः तत्त्वमजानन् शोचति । विपरीतं संसारमनुभवतीत्यर्थः । जुष्टं ध्यानादिना सेवितं यदा पश्यत्यन्यं बिम्बभूतमीशं तत्पदलक्ष्यम्, तदास्यात्मत्वेन दृष्टस्य महिमानं स्वरूपभूतम् एति प्राप्नोति । वीतशोको विगतसंसारो भवति, आगामिसकलसंसारकारणस्याविद्यादेः ज्ञानेन दग्धत्वादित्यर्थः ॥

१. A. गतश्चाध्यात्म-
२. A. तत्राप्यध्यात्माधिकारादिति.
३. A. समवानं
४. T, $T^1$, P and TM. अन्यः

## भाष्यम्

“समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः” ॥ इति ॥

अपर आह— “द्वा सुपर्णा” इति नेयमृगस्याधिकरणस्य सिद्धान्तं भजते, पैङ्गिरहस्यब्राह्मणेनान्यथा व्याख्यातत्वात् “तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्; अनश्नन्नन्योऽभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञः तावेतौ सत्त्वक्षेत्रज्ञौ” इति । सत्त्वशब्दो जीवः, क्षेत्रज्ञशब्दः परमात्मेति यदुच्यते, तन्न ; सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणशारीरपरतया प्रसिद्धत्वात् । तत्रैव च व्याख्यातत्वात् “तदेतत्सत्त्वं येन स्वप्नं पश्यति, अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ” इति । नाप्यस्याधिकरणस्य पूर्वपक्षभावं भजते । न ह्यत्र शारीरः क्षेत्रज्ञः कर्तृत्वभोक्तृत्वादिना संसारधर्मेणोपेतो विवक्ष्यते । कथं तर्हि ? सर्वसंसारधर्मातीतो ब्रह्म-

## प्रकटार्थविवरणम्

“द्वा सुपर्णा” इतीयमृक् मुण्डके परप्रकरणे पठिता ; लिङ्गं च तत्रास्ति ; अतो जीवानुवादेन तत्पदार्थं समर्पयतीत्युदाहृता अस्मिन्नधिकरणे न्यायसा-म्यात्[१] ; न पैङ्गिरहस्यानुसारेण तूदाहर्तव्या, अस्य न्यायस्याविषयत्वादित्याह— अपर आहेत्यादिना ॥ तावेतौ सत्त्वक्षेत्रज्ञौ सुपर्णपदोक्ताविति; ब्राह्मणमप्येत-दधिकरणानुसारेण व्याख्यायतामित्याह—सत्त्वशब्दो जीव इति ॥ “सत्त्वा-त्संजायते ज्ञानम्” “क्षेत्रज्ञं चापि मां विद्धि” इत्यादौ बुद्धिजीवयोः प्रसिद्ध-त्वात् ब्राह्मणविरोधाच्च नान्यथा व्याख्यातुं शक्यमित्याह—तन्नेति ॥ ननु पूर्वपक्षोपयोगितया तदुदाह्रियतामित्याशङ्क्याह—नाप्यस्येति ॥ अनश्नन् भोक्तृ-त्वाभिमानरहितः अन्यो लक्ष्यत्वंपदार्थ[२]ज्ञानात् बुद्ध्यादिभ्यो व्युत्थितस्सन्नभि-पश्यति ब्रह्मज्ञो विवेकीत्ययमर्थोऽत्र प्रतीयते; अतो न पूर्वपक्षेऽप्युपयुज्यत इत्यर्थः । न चायं वाक्यार्थोऽसंभाव्यः, सर्वत्र[३] श्रुतिस्मृतिभ्यः प्रसिद्धत्वादित्याह-

१. A सामान्यात्

२. A. विलक्षणपदार्थ-

३. T, T[1], P and TM. सर्वश्रुति

भाष्यम्

स्वभावश्चैतन्यमात्रस्वरूपः, "अनश्नन्नन्योऽभिचाकशीति", "अनश्नन्नन्योऽभिपश्यति ज्ञः" इति वचनात्, "तत्त्वमसि" "क्षेत्रज्ञं चापि मां विद्धि" इत्यादिश्रुतिस्मृतिभ्यश्च । तावता च विद्योपसंहारदर्शनमेवमेवावकल्पते, "तावेतौ सत्त्वक्षेत्रज्ञौ न ह वा एवंविदि किंचन रज आध्वंसते" इत्यादि । कथं पुनरस्मिन्पक्षे "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्" इत्यचेतने सत्त्वे भोक्तृत्ववचनमिति, उच्यते—नेयं श्रुतिरचेतनस्य सत्त्वस्य भोक्तृत्वं वक्ष्यामीति प्रवृत्ता ; किं तर्हि ? चेतनस्य क्षेत्रज्ञस्याभोक्तृत्वं ब्रह्मस्वभावतां च वक्ष्यामीति । तदर्थं सुखादिविक्रियावति सत्त्वे भोक्तृत्वमध्यारोपयति । इदं हि कर्तृत्वं भोक्तृत्वं च सत्त्वक्षेत्रज्ञयोरितरेतरस्वभावाविवेककृतं कल्प्यते । परमार्थतस्तु नान्यतर-

प्रकटार्थविवरणम्

तत्त्वमसीति ॥ इतश्च जीवस्य ब्रह्मात्मतादर्शनं विवक्षितमित्याह—तावता चेति ॥ तत्र व्याख्यानमात्रेण विद्योपसंहारदर्शनं जीवस्य ब्रह्मात्मतोपदेश एव घटते, न सत्त्वक्षेत्रज्ञविवेकमात्रेण भेदज्ञानस्य मिथ्याज्ञानत्वादिति भावः । अविद्यानिवृत्तिफलोपदेशोऽपि न ब्रह्मात्मताज्ञानं विनोपपद्यत इत्याह—न ह वा एवंविदीति ॥ जीवस्य ब्रह्मात्मतोपदेशपरमिदं वाक्यम् ; अस्मिन्पक्षे कथमन्तःकरणे भोक्तृत्वाभिधानमुपपद्यते, नासाक्षिकासत्त्ववृत्तिः जानातिनाभिधीयत इति ईक्षत्यधिकरणे प्रतिपादनात् । भोक्तृत्वं नामोपलब्धृत्वम्, नाचेतने घटत इत्याह—कथं पुनरिति ॥ बुद्धेर्भोक्तृत्वप्रतिपादने तात्पर्याभावाच्च तत्रोपपत्त्यन्वेषणे मनः खेदनीयमित्याह—उच्यत इत्यादिना ॥ जीवस्य ब्रह्मात्मतां वक्ष्यामीति प्रवृत्ता श्रुतिर्भोक्तृत्वादिप्रत्ययविरोधमाशङ्क्य तदपनीयोपाधिमस्तके निक्षिपतीति भावः । ननु जीवस्य तत्त्वतोऽभोक्तृत्वे कथं दृश्यमानं भोक्तृत्वं संगच्छत इत्याशङ्क्याह—इदं हीति ॥ बुद्धिक्षेत्रज्ञयोरितरेतरता-

१. A adds न

२. A omits इदम्

३. T. Space is left out for writing तत्त्वतोऽभोक्तृत्वे

भाष्यम्

स्यापि संभवति, अचेतनत्वात्सत्त्वस्य, अविक्रियत्वाच्च क्षेत्रज्ञस्य। अविद्याप्रत्युपस्थापितस्वभावत्वाच्च सत्त्वस्य सुतरां न संभवति। तथा च श्रुतिः "यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्" इत्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवदविद्याविषय एव कर्तृत्वादिव्यवहारं दर्शयति। "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिना च विवेकिनः कर्तृत्वादिव्यवहारं निवारयति॥

## अन्तर उपपत्तेः॥ १-२-१३॥

"य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति। तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति" इत्यादि श्रूयते। तत्र संशयः। किमयं प्रतिबिम्बात्माक्ष्यधिकरणो निर्दिश्यते, अथवा विज्ञानात्मा, उत देवतात्मेन्द्रियस्याधिष्ठाता, अथ-

प्रकटार्थविवरणम्

दात्म्याध्यासात् बुद्धिपरिणामे सुखे प्रतिबिम्बितं जीवचैतन्यं प्रकाशाभासोदयहेतुर्भवति। तदेतत्सुखोपलब्धृत्वं भोक्तृत्वमित्यर्थः। मिथ्याभोक्तृत्वे प्रमाणमाह—तथा च श्रुतिरिति॥ यत्र यस्यामविद्यावस्थायाम्; वै निश्चितमेतत्; अविद्याप्रतिबिम्बितचैतन्यं ब्रह्मणोऽन्यदिव मिथ्यैव भिन्नं स्यात्, तत्राविद्याकृतान्तःकरणादिसंबन्धात् अन्योऽन्यत्पश्येत् इत्यादिर्व्यवहारः प्रवर्तेत इत्यर्थः। यत्र तु विद्यावस्थायाम् अस्य विदुषः सर्वं परिपूर्णं बिम्बस्थानीयं ब्रह्मात्मैवाभूत् अविद्याक्षये भेदभ्रमो व्यावृत्तः, तत् प्रारब्धकर्मदोषात् कार्यकारणसंघाते व्याप्रियमाणेऽपि स्वगतव्यापारानाभिमानात् केन कं पश्येदित्यर्थः। तस्माज्जीवगतभोक्तृत्वस्य मिथ्यात्वात्सदपोहेन जीवस्य ब्रह्मतामुपदिशति पैङ्गिब्राह्मणमिति तदभिप्रायेण नेयमृगत्रोदाहरणीयेति सूत्रकारः "गुहां प्रविष्टौ" इत्युदाहरणं जग्राह॥

अन्तर उपपत्तेः॥

उपकोसलविद्यागतं वाक्यमाह—य एष इति॥ दर्शनस्य लौकिकत्वशास्त्रीयत्वाभ्यां संशयमाह—तत्रेति॥ पूर्वाधिकरणे चेतनस्य जीवस्य द्विती-

१. A. भ्यप्रकाशः

भाष्यम्

वेश्वर इति । किं तावत्प्राप्तम्? छायात्मा पुरुषप्रतिरूप इति। कुतः? तस्य दृश्यमानत्वप्रसिद्धेः, "य एषोऽक्षिणि पुरुषो दृश्यते" इति च प्रसिद्धवदुपदेशात् । विज्ञानात्मनो वायं निर्देश इति युक्तम् । स हि चक्षुषा रूपं पश्यंश्चक्षुषि संनिहितो भवति। आत्मशब्दश्चास्मिन्पक्षेऽनुकूलो भवति । आदित्यपुरुषो वा चक्षुषोऽनुग्राहकः प्रतीयते "रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः" इति श्रुतेः, अमृतत्वादीनां च देवतात्मन्यपि कथंचित्संभवात् । नेश्वरः, स्थानविशेषनिर्देशात्—इत्येवं प्राप्ते, ब्रूमः—

परमेश्वर एवाक्षिण्यभ्यन्तरः पुरुष इहोपदिष्ट इति । कस्मात्? उपपत्तेः। उपपद्यते हि परमेश्वरे गुणजातमिहोपदिश्यमानम्। आत्मत्वं तावन्मुख्यया वृत्त्या परमेश्वर उपपद्यते, "स आत्मा तत्त्वमसि" इति श्रुतेः। अमृतत्वाभयत्वे च तस्मिन्नसकृच्छ्रूयेते। तथा परमेश्वरानुरूपमेतदक्षिस्थानम् । यथा हि परमेश्वरः सर्वदोषैरलिप्तः, अपहतपाप्मत्वादिश्रवणात्; तथाक्षिस्थानं सर्वलेपरहितमुपदिष्टम्, "तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति" इति श्रुतेः । संयद्वामत्वादिगुणोपदेशश्च तस्मिन्नवकल्पते । "एतं संयद्वाम इत्याचक्षते

प्रकटार्थविवरणम्

यान्वेषणे समानस्वभावे चेतने या प्रथमप्रतीतिः तदनुसारेण परं प्रतिपन्नम्; गुहाप्रवेशादिकं गौणं निरणायि । तथेहापि दृश्यत इति प्रसिद्धानुवादिप्रथमश्रुतबलेन छायात्मनि गृहीते चरमश्रुतममृताभयादि तत्रैवोपासनाय भविष्यतीत्याह—किं तावदित्यादिना ॥ संभावनामात्रेण पूर्वपक्षाभासमाह—विज्ञानात्मनो वेति ॥ गत्यन्तरे संभवति न सर्वगतेश्वरस्य स्थाननियमः कल्पयितुं युक्त इत्याह—नेश्वर इति ॥ चरमश्रुतबहुतरलिङ्गानुगृहीताभ्यामात्मब्रह्मश्रुतिभ्यां प्रथमप्रतिपन्नैका दृश्यत इति श्रुतिर्नेतव्येति सिद्धान्तयति—परमेश्वर एवेत्यादिना ॥ तत्तत्र लोके यद्यप्यस्मिन्नक्षिणि सर्पिर्घृतमुदकं वा सिञ्चति वर्त्मनी पक्ष्मस्थाने एव गच्छति। तेन न लिप्यत चक्षुः इत्यर्थः । वामानि कर्मफलान्येत-

१. T, P and TM. चक्षुः  २. TM omits तेन

भाष्यम्

एतं हि सर्वाणि वामान्यभिसंयन्ति" "एष उ एव वामनीरेष हि सर्वाणि वामानि नयति । एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति" इति च । अत उपपत्तेरन्तरः परमेश्वरः ॥

## स्थानादिव्यपदेशाच्च ॥ १-२-१४ ॥

कथं पुनराकाशवत्सर्वगतस्य ब्रह्मणोऽक्ष्यल्पस्थानमुपपद्यत इति, अत्रोच्यते—भवेदेषानवक्लृप्तिः, यद्येतदेवैकं स्थानमस्य निर्दिष्टं भवेत् । सन्ति ह्यन्यान्यपि पृथिव्यादीनि स्थानान्यस्य निर्दिष्टानि "यः पृथिव्यां तिष्ठन्" इत्यादिना । तेषु हि चक्षुरपि निर्दिष्टम् "यश्चक्षुषि तिष्ठन्" इति । "स्थानादिव्यपदेशात्" इत्यादिग्रहणेनैतद्दर्शयति—न केवलं स्थानमेवैकमनुचितं ब्रह्मणो निर्दिश्यते ; किं तर्हि नाम रूपमित्येवंजातीयकमप्यनामरूपस्य ब्रह्मणोऽनुचितं निर्दिश्यमानं दृश्यते—"तस्योदिति नाम" "हिरण्यश्मश्रुः" इत्यादि । निर्गुणमपि सद्ब्रह्म नामरूपगतैर्गुणैः सगुणमुपासनार्थं तत्र तत्रोपदिश्यत इत्येतदप्युक्तमेव । सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यते, सालग्राम इव विष्णोरित्येतदप्युक्तमेव ॥

प्रकटार्थविवरणम्

मक्षिपुरुषं कारणमाश्रित्याभिसंयन्ति उत्पद्यन्ते । सकलफलोदयहेतुरित्यर्थः । वामानि शोभनानि लोकं प्रापयतीत्यर्थः । भानं प्रकाशम् ; सर्वत्र प्रतिबिम्बद्वारा प्रापयतीति भामनीः ॥

स्थानादिव्यपदेशाच्च ॥

पूर्वपक्षोक्तं शङ्कते सूत्रेण निरासाय—कथं पुनरित्यादिना ॥ अनवक्लृप्तिर्घटमानता । ननु किमयमेव परिहारो यद्वहुतराघटमानप्रकटनमिति, नेत्याह—निर्गुणमपीति ॥

१. A. प्रापयन्ती-
२. A omits सर्वत्र
३. T¹. पक्षिणोक्तं
४. TM. अस्फुट-
५. A. यं एकत्वाघट-

भाष्यम्

## सुखविशिष्टाभिधानादेव च ॥ १-२-१५ ॥

अपि च नैवात्र विवदितव्यम्—किं ब्रह्मास्मिन्वाक्येऽभिधीयते, न वेति । सुखविशिष्टाभिधानादेव ब्रह्मत्वं सिद्धम् । सुखविशिष्टं हि ब्रह्म यद्वाक्योपक्रमे प्रक्रान्तम् "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति, तदेवेहाभिहितम्; प्रकृतपरिग्रहस्य न्याय्यत्वात्, "आचार्यस्तु ते गतिं वक्ता" इति च गतिमात्राभिधानप्रतिज्ञानात् । कथं पुनर्वाक्योपक्रमे सुखविशिष्टं ब्रह्म विज्ञायत इति, उच्यते—"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इत्येतदग्नीनां वचनं श्रुत्वोपकोसल उवाच "विजानाम्यहं यत्प्राणो ब्रह्म कं च खं च तु न विजानामि" इति । तत्रेदं प्रतिवचनम् "यद्वाव कं तदेव खं यदेव खं तदेव कम्" इति । तत्र खंशब्दो भूताकाशे निरूढो लोके । यदि तस्य विशेषणत्वेन कंशब्दः सुखवाची नोपादीयेत, तथा सति केवले भूताकाशे ब्रह्मशब्दो नामादिष्विव प्रती-

प्रकटार्थविवरणम्

### सुखविशिष्टाभिधानादेव च ॥

इदानीं प्रकृतानुसारेणापि ब्रह्मोपदेश एवायमुपगन्तव्य इत्याह—सुखविशिष्टेति ॥ ननु पूर्वमग्निभिरुपदिष्टं यद्यपि ब्रह्म तथाप्याचार्येणापि तदेवोपदिष्टमित्येतत् कुत इति आह—आचार्यस्त्विति ॥ अग्नीनामेव वचनात् पूर्वोत्तरयोरेकवाक्यतेत्यर्थः । प्राणः सूत्रात्मा[1] बृहत्त्वाद्ब्रह्मेति जानाम्येवाहम् । कं विषयेन्द्रियसंयोगजं सुखम् तथा खं भूताकाशम् कथं ब्रह्मेति न जानामीति कंखंशब्दयोरितरेतरविशेषणविशेष्यभावस्य साफल्यं व्यतिरेकमुखेनाह-तत्र खंशब्द इति ॥ खं कथंभूतं कं सुखं इत्येवं सुखेनाकाशस्याविशेषितत्वे यथा "नाम ब्रह्मेत्युपासीत" इत्यादावब्रह्मणि ब्रह्मदृष्टिक्षेपः तथा स्यात्तदा चात्मविद्याप्रसिद्धिर्न स्यादित्यर्थः । आकाशस्य सुखेन विशेषितत्वाभावे दोषमुक्त्वा सुखस्याकाशेन

१. TM. तथात्मा

### भाष्यम्

काभिप्रायेण प्रयुक्त इति प्रतीतिः स्यात् । तथा कंशब्दस्य विषयेन्द्रियसंपर्कजनिते सामये सुखे प्रसिद्धत्वात्, यदि तस्य खंशब्दो विशेषणत्वेन नोपादीयेत लौकिकं सुखं ब्रह्मेति प्रतीतिः स्यात् । इतरेतरविशेषितौ तु कंखंशब्दौ सुखात्मकं ब्रह्म गमयतः । तत्र द्वितीये ब्रह्मशब्देऽनुपादीयमाने 'कं खं ब्रह्म' इत्येवोच्यमाने कंशब्दस्य विशेषणत्वेनैवोपयुक्तत्वात् सुखस्य गुणस्याध्येयत्वं स्यात् ; तन्मा भूदित्युभयोः कंखंशब्दयोर्ब्रह्मशब्दशिरस्त्वं "कं ब्रह्म खं ब्रह्म" इति । इष्टं हि सुखस्यापि गुणस्य गुणिवद्ध्येयत्वम् । तदेवं वाक्योपक्रमे सुखविशिष्टं ब्रह्मोपदिष्टम् । प्रत्येकं च गार्हपत्यादयोऽग्नयः स्वं स्वं महिमानमुपदिश्य "एषा सोम्य तेऽस्मद्विद्यात्मविद्या च" इत्युपसंहरन्तः पूर्वत्र ब्रह्म निर्दिष्टमिति ज्ञाप-

### प्रकटार्थविवरणम्

विशेषितत्वाभावे दोषमाह—तथा कंशब्दस्येति ॥ सामये क्षयिष्णुत्वसाधनपारतन्त्र्यादिदोषदुष्टे[1] । एवमेकैकविशेषितत्वे[2] लाभमाह — हेतावतवेति [इतरेतरेति ॥ ] नित्यत्वविभुत्वादिधर्मकाकाशपदार्थेन सुखस्य विशेषितत्वे तस्य साध्यतादिव्यावृत्तिः । परमाह्लादरूपेण सुखपदार्थेनाकाशस्य विशेषणे तस्य भूतत्वव्यावृत्तिरित्यर्थयोः विशेषणविशेष्यभावेन शब्दावपीतरेतरविशेषितौ सुखरूपं ब्रह्म गमयत इत्यर्थः । नन्वेवं चेद्ब्रह्म प्रतिपाद्यं किं द्वितीयेन ब्रह्मशब्देनेत्याशङ्क्याह—तत्र द्वितीय इति ॥ खं ब्रह्मेत्युक्ते भूताकाशस्य ब्रह्मत्वप्रसङ्गे तन्निवारणाय कमिति विशेषणस्योपयोगात् सुखस्य ध्येयत्वतात्पर्याभावादध्येयत्वं प्रसज्येत ; तत्परिहारायोभयत्र ब्रह्मशब्दप्रयोग इत्यर्थः । अध्येयत्वमेवास्तु को दोष इत्याशङ्क्याह—इष्टं हीति ॥ मार्गोपदेशेन सगुणविद्यात्वावगमादित्यर्थः । फलितमाह —तदेवमिति ॥ इतश्च ब्रह्मोपक्रान्तमित्याह—प्रत्येकं चेति ॥ "अथैहैनं गार्हपत्योऽनुशशास पृथिव्यन्नमग्निरादित्यः" इत्यादिना पृथिव्यादिलक्षणं स्वकीयं विभूतिं विस्तारमुपदिश्यैषा सोम्यप्रिय ते तुभ्यं प्रत्येकमुपदिष्टाग्नि-

१. A. ष्टः-

२. $T$, $T^1$, P and TM. विशेषितत्वे दोषमुक्त्वा परस्परविशेषितत्वे तस्य

भाष्यम्

यन्ति । "आचार्यस्तु ते गतिं वक्ता" इति च गतिमात्राभिधानप्रतिज्ञानमर्थान्तरविवक्षां वारयति । "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इति चाक्षिस्थानं पुरुषं विजानतः पाप्मनानुपघातं ब्रुवन्नक्षिस्थानस्य पुरुषस्य ब्रह्मत्वं दर्शयति । तस्मात् प्रकृतस्यैव ब्रह्मणोऽक्षिस्थानतां संयद्वामत्वादिगुणतां चोक्त्वा अर्चिरादिकां तद्विदो गतिं वक्ष्यामीत्युपक्रमते "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच" इति ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १-२-१६ ॥

इतश्चाक्षिस्थानः पुरुषः परमेश्वरः, यस्माच्छ्रुतोपनिषत्कस्य श्रुतरहस्यविज्ञानस्य ब्रह्मविदो या गतिर्देवयानाख्या प्रसिद्धा श्रुतौ— "अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्य-

प्रकटार्थविवरणम्

विद्या पूर्वं च संभूय "प्राणो ब्रह्म" इत्यादिना आत्मविद्योपदिष्टा अस्माभिरित्युपसंहरन्तो भूयो ब्रह्मोपक्रमं दर्शयन्तीत्यर्थः । ननु कुण्डपायिनामयने "मासमग्निहोत्रं जुहोति" इत्यत्रोपसत्सोमक्रयणादिप्रक्रियाभेदात् प्रसिद्धाग्निहोत्राद् कर्मान्तरत्वं तथेहाप्यक्षिस्थानत्वादिविलक्षणप्रक्रियादर्शनात् विद्यान्तरत्वमित्याशङ्क्याह—आचार्यस्त्विति ॥ पूर्वतनविद्यानुवादेन तत्रैवाक्षिस्थानत्वादिविशेषविधानात् प्रक्रियाभेदोपपत्तौ न स्वतन्त्रा विद्या कल्पयितुं शक्यते, अग्निवचनविरोधादिति भावः । फलवचनबलादप्यक्षिपुरुषस्य ब्रह्मत्वमित्याह—यथेति ॥ अस्माद्वक्तृभेदेऽपि पूर्वापरानुसन्धानेनैकवाक्यतानिश्चयः तस्मादित्युपसंहारः ॥

श्रुतोपनिषत्कगत्यभिधानाच्च ॥

श्रुता संवृत्तोपनिषद्रहस्यविज्ञानं यस्य स श्रुतोपनिषत्कः । तस्य या देवयानाख्या गतिः श्रुतौ स्मृतौ च प्रसिद्धा सैवेहाक्षिपुरुषविदोऽभिधीयमाना दृश्यत इत्यन्वयः । उत्तरेण पथा तपआदिना साधनेनादित्योपलक्षितं हैरण्य-

१. A. यती-

२. A. श्रुतं समस्तोपनिषद्रहस्यं समासश्रुतोप-

भाष्यम्

मभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते" इति; स्मृतावपि—

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥"

इति; सैवेहाक्षिपुरुषविदोऽभिधीयमाना दृश्यते । "अथ यदु चैवास्मिञ्शव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्ति" इत्युपक्रम्य "आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति । तदिह ब्रह्मविद्विषयया गत्या अक्षिस्थानस्य ब्रह्मत्वं निश्चीयते ॥

## अनवस्थितेरसंभवाच्च नेतरः ॥ १-२-१७ ॥

यत्पुनरुक्तं छायात्मा, विज्ञानात्मा, देवतात्मा वा स्यादक्षिस्थान

प्रकटार्थविवरणम्

गर्भे पदं प्राप्नुवन्ति । सकलप्राण[1]करणाधारमित्यर्थः । अक्षिपुरुषोपासके मृते यदि शव्यं शवसंबन्धि संस्कारादिकं कुर्वन्ति ज्ञातयो यदि, यदि वा न उभयथाप्यप्रतिहतज्ञानफलाः तेऽर्चिरभिमानिनीं देवतां प्राप्नुवन्ति । ततोऽहर्देवताम्, [2]ततः शुक्लपक्षदेवताम्, ततः षण्मासोपलक्षितोत्तरायणदेवताम्, ततः संवत्सरदेवताम्, तत आदित्यम्, ततश्चन्द्रमसम्, ततो वैद्युतम्, तत् तत्र स्थितान् ब्रह्मलोकादवतीर्यामानवः पुरुष उपासकान् ब्रह्म गमयति । देवैरग्न्यादिभिरधिष्ठितः पन्था देवपथः । ब्रह्मणा गन्तव्येनोपलक्षितो ब्रह्मपथः । एतेन पथा ब्रह्म प्रतिपद्यमानाः इमं मनोरुत्सर्गं जन्मजरामरणावृत्तियुक्तं नावर्तन्ते न प्रविशन्तीत्यर्थः । भवत्वेवं ततः किमित्याशङ्क्याह—तदिहेति ॥ उत्सर्गस्त्वयं पञ्चाग्निविदामपि प्रकरणादर्चिरादिगतेरिष्टत्वात् ॥

अनवस्थितेरसंभवाच्च नेतरः ॥

एवं सिद्धान्तमुपपाद्य परोक्ति[3]पराकरणाय परं सूत्रमवतारयति—अनवस्थितेरिति ॥ अन्वयव्यतिरेकाभ्यां [4]प्रतिबिम्बस्य बिम्बसद्भावाधीनस-

१. T, T¹, P and TM. कारणा-
२. TM omits ततः...संवत्सरदेवतां
३. T, T¹, P and A. परोक्त-
४. T omits प्रतिबिम्बस्य
A. प्रतिबिम्बितस्य

भाष्यम्

इति, अत्रोच्यते—न छायात्मादिरितर इह ग्रहणमर्हति । कस्मात्? अनवस्थितेः । न तावच्छायात्मनश्चक्षुषि नित्यमवस्थानं संभवति । यदैव हि कश्चित्पुरुषश्चक्षुरासीदति तदा चक्षुषि पुरुषच्छाया दृश्यते, अपगते तस्मिन्न दृश्यते । "य एषोऽक्षिणि पुरुषः" इति च श्रुतिः संनिधानात् स्वचक्षुषि दृश्यमानं पुरुषमुपास्यत्वेनोपदिशति । न चोपासनाकाले छायाकरं कंचित्पुरुषं चक्षुःसमीपे संनिधाप्योपास्त इति युक्तं कल्पयितुम् । "अस्यैव शरीरस्य नाशमन्वेष नश्यति" इति श्रुतिः छायात्मनोऽप्यनवस्थितत्वं दर्शयति । असंभवाच्च तस्मिन्नमृतत्वादीनां गुणानां न छायात्मनि प्रतीतिः । तथा विज्ञानात्मनोऽपि साधारणे कृत्स्नशरीरेन्द्रियसंबन्धे सति चक्षुष्येवावस्थितत्वं वक्तुं न शक्यम् । ब्रह्मणस्तु सर्वव्यापिनोऽपि दृष्ट उपलब्ध्यर्थो हृदयादिदेशविशेष-

प्रकटार्थविवरणम्

न्नावत्वात् सदानवस्थानाच्च सदान्योपासनं सिध्यतीत्यर्थः । किञ्चाव्यवधानात् स्वचक्षुषस्योपासनं वक्तव्यम् । न च तस्य स्वचक्षुषा दर्शनं सम्भवतीत्याह—य एषोऽक्षिणीति ।। तर्हि पुरुषान्तरं सान्निधाप्य तदभ्य[तद्दृश्य]स्योपासनं भविष्यतीत्याह—न चेति ।। कल्पनागौरवादित्यर्थः । अनवस्थितत्वे श्रुतिं प्रमाणयति—अस्य चेति ।। अस्यैव छायाकारस्य नाशमन्वनन्तरमेष छायात्मा नश्यतीत्यर्थः । "असंभवाच्च" इति सूत्रभागं व्याचष्टे—असंभवाच्चेति ।। जीवनिराकरणपरतया सूत्रं योजयति—तथा विज्ञानात्मनोऽपीति ।। नापि तस्य चक्षुष्येवाभिव्यक्तता येन तत्रोपासनमुपदिश्येत । स्थानविशेषं विनाप्यहमित्यभिव्यक्तिदर्शनादित्यर्थः । तर्हि ब्रह्मणोऽपि सर्वत्र विद्यमानत्वाच्च चक्षुष्येवावस्थानमित्याशङ्क्याह—ब्रह्मणस्त्विति ।। ननु जीवो ब्रह्माभिन्न एव । कथं तत्र

१. A. छायात्मानं दर्शयती २. A. स्थानं विना-

### भाष्यम्

संबन्धः । समानश्च विज्ञानात्मन्यप्यमृतत्वादीनां गुणानामसंभवः । यद्यपि विज्ञानात्मा परमात्मनोऽनन्य एव, तथाप्यविद्याकामकर्मकृतं तस्मिन्मर्त्यत्वमध्यारोपितं भयं चेत्यमृतत्वाभयत्वे नोपपद्येते । संयद्वामत्वादयश्चैतस्मिन्ननैश्वर्यादनुपपन्ना एव । देवतात्मनस्तु "रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः" इति श्रुतेर्यद्यपि चक्षुष्यवस्थानं स्यात्, तथाप्यात्मत्वं तावन्न संभवति, पराग्रूपत्वात् । अमृतत्वादयोऽपि न संभवन्ति, उत्पत्तिप्रलयश्रवणात् । अमृतत्वमपि देवानां चिरकालावस्थानापेक्षम् । ऐश्वर्यमपि परमेश्वरायत्तम्, न स्वाभाविकम् । "भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः" इति मन्त्रवर्णात् । तस्मात्परमेश्वर एवायमक्षिस्थानः प्रत्येतव्यः । अस्मिंश्च पक्षे "दृश्यते" इति प्रसिद्धवदुपादानं शास्त्राद्यपेक्षं विद्वद्विषयं प्ररोचनार्थमिति व्याख्येयम् ॥

### प्रकटार्थविवरणम्

अमृतत्वाद्यसंभव इत्याशङ्क्याह—यद्यपीति ॥ "असंभवाच्च" इति सूत्रभागं देवतापाकरणे योजयति— देवतात्मनस्त्विति ॥ एष आत्मेत्युपकोसलं प्रत्यात्मत्वेनाक्षिपुरुषमुपदिदेशाचार्यः । तन्न संभवति देवतापक्ष इत्यर्थः । ननु देवेष्वमरत्वप्रसिद्धिबाधितं त्वद्वचनमित्याशङ्क्याह— अमृतत्वमपीति ॥ संयद्वामत्वादिकमपि न संभवतीत्याह—ऐश्वर्यमपीति ॥ भीषा भयेनास्मात्परमेश्वरात् पवते चलति वायुरित्यर्थः । ननु परमेश्वरपरिग्रहेऽपि दृश्यत इति नोपपाद्यत इत्याशङ्क्याह—अस्मिंश्च पक्ष इति ॥ दर्शनशब्दोऽयमुपलब्धिपर्यायः । तत्र शास्त्रीयस्य दर्शनस्य शास्त्रमेव सन्निहितं करणमिति विद्वत्प्रसिद्धं शास्त्रीयमेव दर्शनं सिद्धवदनूद्यतेऽज्ञानामनुरागजननार्थमित्यर्थः ॥

भाष्यम्

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १-२-१८ ॥

"य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति" इत्युपक्रम्य श्रूयते "यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" इत्यादि । अत्राधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयितान्तर्यामीति श्रूयते । स किमधिदैवाद्यभिमानी देवतात्मा कश्चित्, किं वा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी, किं वा परमात्मा, किं वार्थान्तरं किंचित्, इत्यपूर्वसंज्ञादर्शनात्संशयः । किं तावन्नः प्रतिभाति ? संज्ञाया अप्रसिद्धत्वात्संज्ञिनाप्यप्रसिद्धेनार्थान्तरेण केनचिद्भवितव्यमिति । अथ वा नानिरूपित-

प्रकटार्थविवरणम्

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥

अन्तर्यामिब्राह्मणं विषयवाक्यमाह—य इमं चेति ॥ आपातप्रतिपन्नमर्थमाह—अत्रेति ॥ "यः पृथिव्यां तिष्ठन्" इत्यादिना देवताः पृथिव्यम्ब्वाद्याः अधिकृत्य कश्चिद्यमयिता[1] श्रूयते । तथा यस्सर्वेषु लोकेषु इत्यधिलोकम्[2]; यस्सर्वेषु वे[3]देष्वित्यधिवे[4]दम्; [5]यस्सर्वेषु भूतेष्वित्यधिभूतम्; तथा प्राणादि[यः प्राणे इत्यादि] यः आत्मनि तिष्ठन्नित्येतदन्तमध्यात्मम्; प्राणादिपदार्थानधिकृत्य किंचिन्नियन्ता वा ततः प्रथते । तत्र संशयमाह—स किमिति ॥ पूर्वत्र[6] दृश्यत इति प्रसिद्धानुवादिनी श्रुतिः बहुतरश्रुतिलिङ्गाद्यनुरोधेनार्थविशेषपरतया निर्णीता । अत्र त्वयमन्तर्यामिशब्द एवाप्रसिद्धार्थः । अतो नास्यार्थो निर्णीतव्यो डित्थडपित्थादिशब्दार्थवदिति पूर्वपक्षाभासमाह— किं तावदिति ॥ अध्ययनविध्युपात्तस्य पुरुषार्थान्वयो वाच्यः अनिर्धारितस्य च तदसंभवादवश्यं निर्धा[7]रणमपेक्षितमित्यपरितोषादाह—अथवेति ॥ न डित्थादिशब्दसाम्यमित्याह—

१. TM and A. दमयिता
२. TM omits इति
३. A. देवेषु
४. A. देवं
५. TM omits यः ...भूतम्
६. TM adds इति
७. TM. वश्यनिर्धा-

### भाष्यम्

रूपमर्थान्तरं शक्यमस्तीत्यभ्युपगन्तुम् । अन्तर्यामिशब्दश्चान्तर्यमनयोगेन प्रवृत्तो नात्यन्तमप्रसिद्धः । तस्मात्पृथिव्याद्यभिमानी कश्चिद्देवोऽन्तर्यामी स्यात् । तथा च श्रूयते "पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिः" इत्यादि । स च कार्यकरणवत्त्वात्पृथिव्यादीनन्तस्तिष्ठन्यमयतीति युक्तं देवतात्मनो यमयितृत्वम् । योगिनो वा कस्यचित्सिद्धस्य सर्वानुप्रवेशेन यमयितृत्वं स्यात् । न तु परमात्मा प्रतीयेत, अकार्यकरणत्वात्; इत्येवं प्राप्ते इदमुच्यते—

योऽन्तर्याम्यधिदैवादिषु श्रूयते स परमात्मैव स्यात्, नान्य इति । कुतः? तद्धर्मव्यपदेशात् । तस्य हि परमात्मनो धर्मा इह निर्दिश्यमाना दृश्यन्ते । पृथिव्यादि तावदधिदैवादिभेदभिन्नं समस्तं विकारजातमन्तस्तिष्ठन्यमयतीति परमात्मनो यमयितृत्वं धर्म उपपद्यते । सर्वविकारकारणत्वे सति सर्वशक्त्युपपत्तेः । "एष त आत्मान्तर्याम्यमृतः" इति

### प्रकटार्थविवरणम्

अन्तर्यामिशब्दश्चेति ॥ [1]अग्निर्लोको भोग्यदेहः मनो ज्योतिर्भासकं मनसा हि देवता[2] सर्वं वेत्तीत्यर्थः । तस्य कार्यकरणवत्त्वादुपाध्यायवन्नियन्तृत्वमपि संभवतीत्याह—स चेति ॥ पृथिव्यादिदेवतायास्तत्र तत्र[3] प्रतिनियतत्वात् सर्वानुप्रवेशेन नियन्तृत्वानुपपत्तेरेकत्वायोगाच्चापरितोषादाह—योगिनो वेति॥ ननु यस्येश्वरस्यानुग्रहाद्योगिनोऽपि नियमनादिसामर्थ्यं स किमित्युपेक्षित इत्याशङ्क्याह—न तु परमात्मेति ॥ योगिनि सृष्ट्युत्तरकालीनतया सकलजगन्नियन्तृत्वानुपपत्तेः[4], इह चैकस्य सकलजगन्नियन्तृत्वप्रतीतेः, यमयितृत्वधर्मेण च धर्मिग्रहणे साधनसाध्यधर्मिग्रहणाद्वरं नित्यसिद्धयमयितृत्वधर्मिग्रहणं कल्पनालाघवात्; अतोऽन्तर्यामिशब्दः साधारणोऽपि परमात्मन्येव समन्वित इत्यभिप्रेत्याह—एवं प्राप्त इदमुच्यत इत्यादिना ॥ देवतापक्षे

१. TM. अग्नेः
२. A adds सर्वं
३. A omits तत्र
४. A. जगत्कर्तृत्वानु-

## भाष्यम्

चात्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते । "यं पृथिवी न वेद" इति च पृथिवीदेवताया अविज्ञेयमन्तर्यामिणं ब्रुवन्देवतात्मनोऽन्यमन्तर्यामिणं दर्शयति । पृथिवी देवता हि "अहमस्मि पृथिवी" इत्यात्मानं विजानीयात् । तथा "अदृष्टोऽश्रुतः" इत्यादिव्यपदेशो रूपादिविहीनत्वात् परमात्मन उपपद्यत इति । यत्त्वकार्यकरणस्य परमात्मनो यमयितृत्वं नोपपद्यत इति, नैष दोषः; यन्नियच्छति तत्कार्यकरणैरेव तस्य कार्यकरणवत्त्वोपपत्तेः । तस्याप्यन्यो नियन्तेत्यनवस्थादोषश्च न संभवति, भेदाभावात् । भेदे हि सत्यनवस्थादोषोपपत्तिः । तस्मात्परमात्मैवान्तर्यामी ॥

## प्रकटार्थविवरणम्

दूषणान्तरमाह—यं पृथिवीति ॥ किं च देवताया विग्रहवत्त्वाददृष्टत्वादिव्यपदेशोऽपि न मुख्य उपपद्यत इत्याह—तथा अदृष्ट इति ॥ नियन्तृत्वे न कार्यकारणवत्त्वं प्रयोजकम्, किन्तु चिच्छक्तिमत्त्वम्; तच्चेश्वरस्यानपेक्षागमादेव सिद्धम्; न चापह्नोतुं शक्यं लौकिकसामान्यतोदर्शनेन, अन्यथा अतिप्रसङ्गादित्याह—नैष दोष इति ॥ अथाप्येवं तवाग्रहः अवश्यं कार्यकारणवत्त्वेन भवितव्यम्, तर्हि यथोपाध्यायो देहान्तरासंयुक्तोऽपि स्वदेहं[1] नियमयति, तथेश्वरोऽपि देहान्तरासंयुक्त एवेतरदेहादिनियामको भविष्यतीत्याह—यन्नियच्छतीति ॥ ननु स्वदेहनियन्तुरपि जीवस्यान्यो नियन्ता चेत् तर्हि तस्याप्यन्यः स्यादविशेषादित्याशङ्क्याह—तस्याप्यन्य इति ॥ निरङ्कुशं सर्वनियन्तृत्वं[2] श्रुतिः प्रतिपादयति । तत्र तस्याप्यन्यश्चेन्नियन्ता स एव सर्वनियन्ता स्यात्, न पूर्वः, तस्मात् सर्वनियन्तरि भेदाभावादनुमानस्य चागमबाधितत्वाच्चानवस्थेत्यर्थः ॥

१. A omits स्वदेहं...रोऽपि   २. TM. न्तृत्वश्रुतिः

भाष्यम्

## न च स्मार्तमतद्धर्माभिलापात् ॥ १-२-१९ ॥

स्यादेतत् । अदृष्टत्वादयो धर्माः सांख्यस्मृतिकल्पितस्य प्रधानस्याप्युपपद्यन्ते, रूपादिहीनतया तस्य तैरभ्युपगमात् । "अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" इति हि स्मरन्ति । तस्यापि नियन्तृत्वं सर्वविकारकारणत्वादुपपद्यते । तस्मात्प्रधानमन्तर्यामिशब्दं स्यात् । "ईक्षतेर्नाशब्दम्" इत्यत्र निराकृतमपि सत् प्रधानमिहादृष्टत्वादिव्यपदेशसंभवेन पुनराशङ्क्यते । अत उत्तरमुच्यते—न च स्मार्तं प्रधानमन्तर्यामिशब्दं भवितुमर्हति । कस्मात्? अतद्धर्माभिलापात् । यद्यप्यदृष्टत्वादिव्यपदेशः प्रधानस्य संभवति, तथापि न द्रष्टृत्वादिव्यपदेशः संभवति, प्रधानस्याचेतनत्वेन तैरभ्युपगमात् । "अदृष्टो द्रष्टाश्रुतः श्रोतामतो मन्ताविज्ञातो विज्ञाता" इति हि वाक्यशेष इह भवति । आत्मत्वमपि न प्रधानस्योपपद्यते ॥

यदि प्रधानमात्मत्वद्रष्टृत्वाद्यसंभवान्नान्तर्याम्यभ्युपगम्यते, शारीरस्तर्ह्यन्तर्यामी भवतु । शारीरो हि चेतनत्वाद्द्रष्टा श्रोता मन्ता विज्ञाता च भवति, आत्मा च प्रत्यक्त्वात् । अमृतश्च, धर्माधर्मफलोपभोगोपपत्तेः । अदृष्टत्वादयश्च धर्माः शारीरे प्रसिद्धाः, दर्शनादिक्रियायाः

प्रकटार्थविवरणम्

न च स्मार्तमतद्धर्माभिलापात् ॥

शङ्कोत्तरं सूत्रं व्याचष्टे—स्यादेतदिति ॥ इत्थं महदादिरूपेण प्रधानं किमिति प्रवर्तते, अन्यथा कस्मान्न प्रवर्तते, इति तर्कस्य विषयो न भवति, मूढत्वादित्याह—अप्रतर्क्यमिति ॥ रूपादिहीनतया विज्ञेयं चक्षुराद्यग्राह्यम् प्रसुप्तमिव सर्वतः[१] सर्वासु दिक्षु ; जडमित्यर्थः ॥

उत्तरसूत्रनिरस्यामाशङ्कामाह—यदि प्रधानमित्यादिना ॥ अन्यथाकृताभ्यागमकृतविप्रणाशप्रसङ्गादमृत इत्यर्थः । क्रिया हि सर्वा कर्म[२]कारकं व्या-

१. TM omits सर्वतः.  २. A omits कर्म.

भाष्यम्

कर्तरि प्रवृत्तिविरोधात्; "न दृष्टेर्द्रष्टारं पश्येः" इत्यादिश्रुतिभ्यश्च। तस्य च कार्यकरणसंघातमन्तर्यमयितुं शीलम्, भोक्तृत्वात्। तस्माच्छारीरोऽन्तर्यामीत्यत उत्तरं पठति—

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ १-२-२० ॥

नेति पूर्वसूत्रादनुवर्तते। शारीरश्च नान्तर्यामी स्यात्। कस्मात्? यद्यपि द्रष्टृत्वादयो धर्मास्तस्य संभवन्ति, तथापि घटाकाशवदुपाधिपरिच्छिन्नत्वान्न कार्त्स्न्येन पृथिव्यादिष्वन्तरवस्थातुं नियन्तुं च शक्नोति। अपि चोभयेऽपि हि शाखिनः काण्वा माध्यंदिनाश्चान्तर्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते। "यो विज्ञाने तिष्ठन्" इति काण्वाः। "य आत्मनि तिष्ठन्" इति माध्यंदिनाः। "य आत्मनि तिष्ठन्" इत्यस्मिंस्तावत्पाठे भवत्यात्मशब्दः शारीरस्य वाचकः। "यो विज्ञाने तिष्ठन्" इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते। विज्ञानमयो हि शारीर इति। तस्माच्छारीरादन्य

प्रकटार्थविवरणम्

प्नोति, न स्वाश्रयम्; न ह्यसिधारया सैवासिधारा छिद्यत इत्याह—कर्तरि प्रवृत्तिविरोधादिति॥ लौकिक्या दृष्टेः द्रष्टारं तयैव दृष्ट्या त्वं न पश्येः न शक्नोषि द्रष्टुमित्यर्थः॥

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते॥

अपिशब्दसूचितं हेतुं व्याख्याय कण्ठोक्तं व्याचष्टे—अपि चोभयेऽपीति॥ आत्मविज्ञानशब्दाभ्यां बुद्धिरुच्यत इत्याशङ्क्याह[1]—यो विज्ञान इति॥ आत्मनीत्यात्मशब्दस्य चेतने रूढत्वात्तदनुसारेण विज्ञानशब्देनापि बुध्युपाधिकं[2] एवोच्यत[3] इत्यर्थः। "भेदेनैनम्" इति सूत्रात्तात्त्विक एव भेदोऽत्र विवक्षित इति मन्दबुद्धेः कस्यचिदाशङ्का जायते, तन्निरासाय चोद्यमु-

१. TM omits इत्याशङ्क्याह.

२. T. बुद्ध्युपाधित.

३. A omits उच्यते.

भाष्यम्

ईश्वरोऽन्तर्यामीति सिद्धम् । कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते, यश्चायमीश्वरोऽन्तर्यामी यश्चायमितरः शारीरः? का पुनरिहानुपपत्तिः? "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतिवचनं विरुध्येत। अत्र हि प्रकृतादन्तर्यामिणोऽन्यं द्रष्टारं श्रोतारं मन्तारं विज्ञातारं चात्मानं प्रतिषेधति । नियन्त्रन्तरप्रतिषेधार्थमेतद्वचनमिति चेत्, न; नियन्त्रन्तराप्रसङ्गादविशेषश्रवणाच्च । अत्रोच्यते—अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशः, न पारमार्थिकः। एको हि प्रत्यगात्मा भवति, न द्वौ प्रत्यगात्मानौ संभवतः।

प्रकटार्थविवरणम्

चोदयति—कथं पुनरिति ।। श्रुत्योक्तत्वान्नानुपपत्तिरित्याह—का पुनरिति ।। पूर्वमपि श्रुत्या तात्त्विको भेदो नोक्त एव, वाक्यशेषविरोधादित्याह—नान्योऽतोऽस्तीति ।। गत्यन्तरं शङ्कते—नियन्त्रन्तरेति ।। तर्ह्यप्राप्तप्रतिषेधप्रसङ्ग इत्याह—नेति ।। किं चाविशेषेण द्रष्टृमात्र[1]भेदनिरासाय प्रवृत्ता श्रुतिर्विशेषे व्यवस्थाप्यमाना पीडिता स्यादित्याह—अविशेषेति ।। तस्मात्तात्त्विकद्रष्टृभेदे प्रमाणाभावादेकस्मिन् देहे चैकस्यैव द्रष्टुः प्रसिद्धेः कथं द्वौ द्रष्टारावुच्येते इति सूक्तम्। सत्यं तात्त्विको द्रष्टृभेदो[2] नास्त्येव। तथापि यथोदकाधारे निजाकाशे विद्यमानेऽपि तत्रैव प्रतिबिम्बाकाशो वर्तते, तथा मायोपाधिके नियन्तरीश्वरे विद्यमानेऽपि मायाप्रदेशरूपास्था[3]नेषु प्रतिबिम्बितानां जीवानामप्यवस्थानं नियम्यानां न विरुध्यत इत्यभिप्रेत्याह—अत्रोच्यत इति ।। ननु नियम्यनियामकभावेन भेदश्चेत्तर्हि स्वरूपैक्ये किं प्रमाणमित्याशङ्क्याह—एको हीति ।। "एको देवस्सर्वभूतेषु गूढः" इत्यादिश्रुतेरेक एव चिद्धातुरुपाधिं प्रत्युपाधिं[4] प्रत्यञ्चति प्रतिबिम्बित इति प्रत्यगात्मोच्यते। न द्वौ प्रत्यगात्मानौ संभवतः, प्रमाणाभावात्, वस्तुतः परिच्छिन्नतयानात्मत्वप्रसङ्गाच्चेत्यर्थः । ननु स्वरूपैक्ये सति

१. A. भेदमात्र.
२. TM. द्रष्टृभेदा.
३. A. स्थान.
४. A. प्रत्युपाधिं च प्रतिबि-

भाष्यम्

एकस्यैव तु भेदव्यवहार उपाधिकृतः, यथा घटाकाशो महाकाश इति। ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषेधशास्त्रं चेति सर्वमेतदुपपद्यते । तथा च श्रुतिः—"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इत्यविद्याविषये सर्वं व्यवहारं दर्शयति। "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति विद्याविषये सर्वं व्यवहारं वारयति ॥

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १-२-२१ ॥

"अथ परा यया तदक्षरमधिगम्यते" "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इति श्रूयते । तत्र संशयः—किमयमद्रेश्यत्वादिगुणको भूतयोनिः प्रधानं स्यात्, उत शारीरः, आहोस्वित्

प्रकटार्थविवरणम्

तस्य भेदायोगात् सकलव्यवहारविलोपः स्यादित्याशङ्क्याह—एकस्य त्विति॥ तस्मादविद्यासिद्धेनैव भेदेन नियम्यानियामकभाव इति सिद्धम् ॥

अदृश्यत्वादिगुणको धर्मोक्तेः ॥

आथर्वणगतं विषयवाक्यं पठति—अथ परेति ॥ अद्रेश्यमदृश्यं ज्ञानेन्द्रियाविषयः कर्मेन्द्रियाविषयोऽग्राह्यम्; अगोत्रं वंशहीनम्; अवर्णं जातिहीनम्; न केवलमिन्द्रियाविषयः इन्द्रियहीनं चेत्याह—अचक्षुःश्रोत्रं न विद्येते चक्षुःश्रोत्रे अस्येति; न विद्यते पाणिपादं यस्य तदपाणिपादम्; कर्मेन्द्रियोपलक्षणम् नित्यं विनाशाभावोपलक्षितसत्ताकम्; विभुम्; प्रभुं सर्वगतं सर्वाव्यवधानात्; सूक्ष्मं दुर्ज्ञानत्वात्; तदव्ययमपक्षयाभावात्; यदक्षरं भूतयोनिं भूतकारणं धीराः परिपश्यन्ति तदक्षरम्, यया विद्याधिगम्यते सा परेत्यर्थः।अदृश्यत्वादिसाधारणधर्मनिर्देशात् संशयमाह—तत्रेति ॥ पूर्वत्र साधारणस्याप्यन्तर्यामिशब्दस्य लाघवतर्कसाहाय्यान्नित्यसिद्धनियन्तृत्वोपादानेनेश्वरपरत्वं प्रत्यपीप-

१. A adds यस्य. २. TM omits प्रभुं.

भाष्यम्

परमेश्वर इति । तत्र प्रधानमचेतनं भूतयोनिरिति युक्तम्, अचेतनानामेव तद्दृष्टान्तत्वेनोपादानात्

"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति ।
यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वम् ॥"

इति । ननूर्णनाभिः पुरुषश्च चेतनाविह दृष्टान्तत्वेनोपात्तौ; नेति ब्रूमः । न हि केवलस्य चेतनस्य तत्र सूत्रयोनित्वं केशलोमयोनित्वं वास्ति । चेतनाधिष्ठितं ह्यचेतनमूर्णनाभिशरीरं सूत्रस्य योनिः, पुरुषशरीरं च केशलोम्नामिति प्रसिद्धम् । अपि च पूर्वत्राद्दृष्टत्वाद्यभिलापसंभवेऽपि द्रष्टृत्वाद्यभिलापासंभवान्न प्रधानमभ्युपगतम् । इह त्वदृश्यत्वादयो धर्माः प्रधाने संभवन्ति । न चात्र विरुध्यमानो धर्मः कश्चिदभिलप्यते । ननु "यः सर्वज्ञः सर्ववित्" इत्ययं वाक्यशेषोऽचेतने प्रधाने न संभवति, कथं प्रधानं भूतयोनिः प्रतिज्ञायत इति; अत्रोच्यते—"यया तदक्षरमधिगम्यते" "यत्तदद्रेश्यम्" इत्यक्षरशब्देनादृश्यत्वादिगुणकं भूतयोनिं श्रावयित्वा पुनरन्ते श्रावयिष्यति—"अक्षरात्परतः परः" इति । तत्र यः परोऽक्षराच्छ्रुतः स सर्वज्ञः सर्ववित्संभ-

प्रकटार्थविवरणम्

वत् । इहापि तर्हि साधारणस्य दृश्यत्वादिधर्मस्याचेतनानां दृष्टान्तत्वेनोपादानलक्षणतर्कबलात् प्रधाननिष्ठत्वमिति पूर्वपक्षमाह—तत्रप्रधानमिति ॥ ऊर्णनाभिर्लूताकीटः; स्वशरीराव्यतिरिक्तांस्तन्तून् सृजत्युपसंहरति चेत्यर्थः । नन्वित्यादिना दृष्टान्तमाक्षिप्य समाधत्ते । ननु पूर्वत्र निरस्तं प्रधानं कथं पुनरिहाशङ्क्यत इत्याशङ्क्याह—अपि चेति ॥ यद्यपि स्ववाक्ये प्रधाने विरुध्यमानो धर्मो नास्ति तथापि वाक्यशेषे श्रूयत इत्याह—ननु य इति ॥ वाक्यशेषस्य जगन्निमित्तकारणेश्वरपरत्वान्न तेन विरोध इत्याह — अत्रोच्यत इति ॥

१. A. इत्याशङ्क्याह.

## भाष्यम्

विष्यति । प्रधानमेव त्वक्षरशब्दनिर्दिष्टं भूतयोनिः । यदा तु योनिशब्दो निमित्तवाची तदा शारीरोऽपि भूतयोनिः स्यात्, धर्माधर्माभ्यां भूतजातस्योपार्जनादिति । एवं प्राप्तेऽभिधीयते—

योऽयमदृश्यत्वादिगुणको भूतयोनिः स परमेश्वर एव स्यात्, नान्य इति । कथमेतदवगम्यते ? धर्मोक्तेः । परमेश्वरस्य हि धर्म इहोच्यमानो दृश्यते—"यः सर्वज्ञः सर्ववित्" इति । न हि प्रधानस्याचेतनस्य शारीरस्य वोपाधिपरिच्छिन्नदृष्टेः सर्वज्ञत्वं सर्वविस्त्वं वा संभवति । नन्वक्षरशब्दनिर्दिष्टाद्भूतयोनेः परस्यैव तत्सर्वज्ञत्वं सर्वविस्त्वं च, न भूतयोनिविषयमित्युक्तम्; अत्रोच्यते—नैवं संभवति; यत्कारणं "अक्षरात्संभवतीह विश्वम्" इति प्रकृतं भूतयोनिमिह जायमानप्रकृतित्वेन निर्दिश्य, अनन्तरमपि जायमानप्रकृतित्वेनैव सर्वज्ञं निर्दिशति—

"यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।
तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" ॥ इति ॥

## प्रकटार्थविवरणम्

पक्षान्तरमाह—यदा त्विति ॥ प्राण्यदृष्टनिमित्ता हि सर्गादिसिद्धिः सूर्यादिप्रवृत्तिनियतिश्चेत्यर्थः । सिद्धान्तमवतारयति—एवं प्राप्तेऽभिधीयत इति ॥

यदुपक्रमे संदिग्धं तद्वाक्यशेषवशान्निर्णीयते । यथा "अक्ताः शर्करा उपदधाति" इत्यत्र "तैजं वै घृतम्" इति शेषवशान्निर्णयः, तथेहापि साधारणस्योपक्रमगतस्यादृश्यत्वादेः वाक्यशेषाद्ब्रह्मपरता निर्णेतव्येत्यर्थः । परस्त्वोक्तं स्मारयति—नन्वक्षरेति ॥ "जनिकर्तुः प्रकृतिः" इति स्मरणात् अक्षरादिति पञ्चम्या जायमानप्रकृतित्वेन निर्दिष्टमक्षरं पुनः पञ्चम्यन्तप्रयोगादेव "तस्मादेतद्ब्रह्म" इति प्रत्यभिज्ञायते । अतो भूतयोनिविषय एव वाक्यशेष इत्याह—अत्रोच्यत इति ॥ "अक्षरात्परतः परः" इत्युपरितनोऽपि वाक्यशेषः प्रकृतसर्वज्ञभूत-

भाष्यम्

तस्मान्निर्देशसाम्येन प्रत्यभिज्ञायमानत्वात्प्रकृतस्यैवाक्षरस्य भूतयोनेः सर्वज्ञत्वं सर्वविच्त्वं च धर्म उच्यत इति गम्यते । "अक्षरात्परतः परः" इत्यत्रापि न प्रकृताद्भूतयोनेरक्षरात्परः कश्चिदभिधीयते; कथमेतदवगम्यते? "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इति प्रकृत्य तस्यैवाक्षरस्य भूतयोनेरदृश्यत्वादिगुणकस्य वक्तव्यत्वेन प्रतिज्ञातत्वात् । कथं तर्हि "अक्षरात्परतः परः" इति व्यपदिश्यत इति, उत्तरसूत्रे तद्वक्ष्यामः । अपि चात्र द्वे विद्ये वेदितव्ये उक्ते "परा चैवापरा च" इति । तत्रापरामृग्वेदादिलक्षणां विद्यामुक्त्वा ब्रवीति "अथ परा यया तदक्षरमधिगम्यते" इत्यादि । तत्र परस्या विद्याया विषयत्वेनाक्षरं श्रुतम् । यदि पुनः परमेश्वरादन्यदहृश्यत्वादिगुणकमक्षरं परिकल्प्येत, नेयं परा विद्या स्यात् । परापरविभागो ह्ययं विद्ययोरभ्युदयनिःश्रेयसफलतया परिकल्प्यते । न च प्रधानविद्या निःश्रेयसफला केनचिदभ्युपगम्यते । तिस्रश्च विद्याः प्रतिज्ञायेरन्, त्वत्पक्षेऽक्षराद्भूतयोनेः परस्य परमात्मनः प्रतिपाद्यमानत्वात् । द्वे एव तु विद्ये वेदितव्ये इह निर्दिष्टे । "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति चैकविज्ञानेन सर्वविज्ञानापेक्षणं सर्वात्मके ब्रह्मणि विवक्ष्यमाणेऽवकल्पते, नाचेतनमात्रैकायतने प्रधाने, भोग्यव्यतिरिक्ते वा

प्रकटार्थविवरणम्

योनिपर एवेत्याह—अक्षरात्परत इति ॥ येन ज्ञानेनाक्षरं प्रकृतं भूतयोनिं सर्वज्ञं पुरुषं सत्यं वेद तां ब्रह्मविद्यामुपसन्नाय शान्तायाचार्यः प्रोवाच प्रब्रूयादित्युपक्रम्य "अक्षरात्परतः परः" इत्युपदिश्यमानं कथमन्यपरं भवेदिति भावः । न प्रधानपरं वाक्यं चेत् कस्तर्ह्यर्थ इत्याशङ्क्याह—कथं तर्हीति ॥ परविद्याविषयत्वाच्च न भूतयोनिरब्रह्मेत्याह—अपि चात्रेति ॥ किं च विद्याया द्विसंख्यायाः श्रवणमपि तव न स्यादित्याह—तिस्रश्चेति ॥ इतश्च परं ब्रह्मैव भूतयोनिरित्याह—कस्मिन्नु भगव इति ॥ अचेतनस्य भोग्यवर्गमात्रस्यैकमयनमाश्रयस्तस्मिन्नित्यर्थः । ब्रह्मविद्येति समाख्ययापि भूतयोनेर्ब्रह्मत्वं सिद्ध-

भाष्यम्

भोक्तरि । अपि च "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह" इति ब्रह्मविद्यां प्राधान्येनोपक्रम्य परापरविभागेन परां विद्यामक्षराधिगमनीं दर्शयन् तस्या ब्रह्मविद्यात्वं दर्शयति । सा च ब्रह्मविद्यासमाख्या तदधिगम्यस्याक्षरस्याब्रह्मत्वे बाधिता स्यात् । अपरा ऋग्वेदादिलक्षणा कर्मविद्या ब्रह्मविद्योपक्रम उपन्यस्यते ब्रह्मविद्याप्रशंसार्थं ।

"प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति ॥"

इत्येवमादिनिन्दावचनात् । निन्दित्वा चापरां विद्यां ततो विरक्तस्य परविद्याधिकारं दर्शयति—

"परीक्ष्य लोकान् कर्मजितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥"

प्रकटार्थविवरणम्

मित्याह—अपि च स इति ॥ सर्वविद्यानां प्रतिष्ठा परिसमाप्तिः यस्यामुत्पन्नायां तत उत्कृष्टपुरुषार्थाभावात् तां ब्रह्मविद्यां ब्रह्मा प्राह स्मेत्यर्थः । यदि प्राधान्येन ब्रह्मविद्यैवोपक्रान्ता किमित्यृग्वेदादिलक्षणात्रा पराविद्योच्यत इत्याशङ्क्याह—अपरा ऋग्वेदादिलक्षणेति ॥ प्लवा अस्थिराः, अत एवादृढाः । के ते यज्ञरूपाः । यज्ञो रूपमुपाधिर्येषां ते यज्ञरूपाः, ऋत्विगादिव्यपदेशस्य यज्ञोपाधिकत्वादष्टादश षोडशर्त्विजः पत्नी यजमानश्चेति । क्षयिष्णुफलत्वादपरं कर्म येषु यदाश्रयमुक्तं श्रुत्या विहितमित्यर्थः । एतदेव कर्म श्रेयस्साधनं न ब्रह्मज्ञानं नामास्तीति मत्वा ये हृष्यन्ति ते पुनःपुनर्जरामरणमेव प्राप्नुवन्तीत्यर्थः । इतश्च परविद्याशेषत्वेनैवापरविद्योपन्यास इत्याह—निन्दित्वा चेति ॥ प्रत्यक्षत्वादिना कर्मसाध्यान् लोकाननित्यतया विज्ञाय निर्वेदं वैराग्यं प्रत्यायाद्गच्छेत् । कथम्? नास्त्यकृतो मोक्षः कृतेन कर्मणा, अहं च नित्यफलार्थी, अतः किं कर्मभिरिति

१. A adds प्लवान्तर्गच्छतीति

भाष्यम्

इति। यत्तूक्तम्—अचेतनानां पृथिव्यादीनां दृष्टान्तत्वेनोपादानाद्दार्ष्टान्तिकेनाप्यचेतनेनैव भूतयोनिना भवितव्यमिति, तदयुक्तम्; न हि दृष्टान्तदार्ष्टान्तिकयोरत्यन्तसाम्येन भवितव्यमिति नियमोऽस्ति; अपि च स्थूलाः पृथिव्यादयो दृष्टान्तत्वेनोपात्ता इति न स्थूल एव दार्ष्टान्तिको भूतयोनिरभ्युपगम्यते। तस्माददृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ॥ १-२-२२॥

इतश्च परमेश्वर एव भूतयोनिः नेतरौ शारीरः प्रधानं वा। कस्मात्? विशेषणभेदव्यपदेशाभ्याम्। विशिनष्टि हि प्रकृतं भूतयोनिं शारीराद्विलक्षणत्वेन "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रः" इति। न ह्येतद्दिव्यत्वादिविशेषणमविद्याप्रत्युपस्थापितनामरूपपरिच्छेदाभिमानिनस्तद्धर्मान् स्वात्मनि कल्पयतः शारीरस्योपपद्यते। तस्मात्साक्षादौपनिषदः पुरुष इहोच्यते। तथा प्रधानादपि प्रकृतं भूतयोनिं भेदेन व्यपदिशति "अक्षरात्परतः परः" इति।

प्रकटार्थविवरणम्

विरक्तस्सन् ब्रह्मणो विज्ञानार्थं गुरुमेवाभिगच्छेत्। गुरुपादोपसर्पणपूर्वकं मोक्षसाधनज्ञानाय श्रवणादिकं कुर्यादित्यर्थः। कारणादव्यतिरेकः कार्यस्यात्र विवक्षितः, न तु सर्वसाम्यमित्याह—न हि दृष्टान्तेति॥ सर्वसाम्याभ्युपगमे च सांख्यस्याप्यनिष्टापात इत्याह—अपि चेति॥

विशेषणभेदव्यपदेशाभ्यां च नेतरौ॥

विशेषणादित्याद्यहेतुं जीवपक्षापाकरणपरतया योजयति—विशिनष्टि हीति॥ "भेदव्यपदेशाच्च" इति द्वितीयहेतुं प्रधानपक्षे योजयति—तथा प्रधानादपीति॥ अक्षरं स्वरूपेणाविनाशि; अव्याकृतम् अनादिसिद्धम्; नामरूपयोर्बीजस्येश्वरस्य शक्तिरूपम्; तत्पारतन्त्र्यात् भूतानां विलीनानां सूक्ष्मं संस्काररूपं

१. TM adds अपि २. A omits तु

भाष्यम्

अक्षरमव्याकृतं नामरूपबीजशक्तिरूपं भूतसूक्ष्ममीश्वराश्रयं तस्यैवोपाधिभूतं सर्वस्माद्विकारात्परो योऽविकारः; तस्मात्परतः पर इति भेदेन व्यपदिशन् परमात्मानमिह विवक्षितं दर्शयति। नात्र प्रधानं नाम किंचित् स्वतन्त्रं तत्त्वमभ्युपगम्य तस्माद्भेदव्यपदेश उच्यते । किं तर्हि ? यदि प्रधानमपि कल्प्यमानं श्रुत्यविरोधेनाव्याकृतादिशब्दवाच्यं भूतसूक्ष्मं परिकल्प्येत, परिकल्प्यताम् । तस्माद्भेदव्यपदेशात् परमेश्वरो भूतयोनिरित्येतदिह प्रतिपाद्यते ॥

कुतश्च परमेश्वरो भूतयोनिः ?

## रूपोपन्यासाच्च ॥ १-२-२३ ॥

अपि च "अक्षरात्परतः परः" इत्यस्यानन्तरम् "एतस्माज्जायते प्राणः" इति प्राणप्रभृतीनां पृथिवीपर्यन्तानां तत्त्वानां सर्गमुक्त्वा तस्यैव भूतयोनेः सर्वविकारात्मकं रूपमुपन्यस्यमानं पश्यामः

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥"

प्रकटार्थविवरणम्

वर्ततेऽत्रेति भूतसूक्ष्मम्; तत्पदलक्ष्यस्वरूपाश्रयं तस्यैव प्रतिबिम्बितस्योपाधिभूतं तस्मिन्नुपाहिते विकारापादकत्वाद्वि[त्वदवि]कार इत्यर्थः । ननु प्रधानाद्ब्रह्मणो भेदं ब्रुवता तदिष्टं स्यादित्याशङ्क्याह—नात्र प्रधानमिति ॥ तत्र मानाभावादित्यर्थः । तस्मादनाद्यनिर्वाच्यमायाख्यायां[ख्यात्] जगतस्तस्मिन् प्रधीयमानत्वेन प्रधानशब्दवाच्यादन्य ईश्वरोऽत्र प्रतिपिपादयिषितः ॥

रूपोपन्यासाच्च ॥

कुतश्चेति ॥ ततश्च परमेश्वरो भूतयोनिरिति सिद्ध इत्यर्थः । वृत्तिकारमतेन तावदाक्षेपसमाधानपूर्वकं सूत्रं व्याचष्टे—अपि चेत्यादिना ॥ अग्निर्द्युलोकः "असौ वाव लोको गौतमाग्निः" इति श्रुतेः । पद्भ्यामिति पादौ पृथिवी यस्यास्य

भाष्यम्

इति। तच्च परमेश्वरस्यैवोचितम्, सर्वविकारकारणत्वात्; न शारीरस्य तनुमहिम्नः; नापि प्रधानस्यायं रूपोपन्यासः संभवति, सर्वभूतान्तरात्मत्वासंभवात्। तस्मात्परमेश्वर एव भूतयोनिः, नेतराविति गम्यते। कथं पुनर्भूतयोनेरयं रूपोपन्यास इति गम्यते? प्रकरणात्, 'एषः' इति च प्रकृतानुकर्षणात्। भूतयोनिं हि प्रकृत्य "एतस्माज्जायते प्राणः" "एष सर्वभूतान्तरात्मा" इति वचनं भूतयोनिविषयमेव भवति; यथोपाध्यायं प्रकृत्य 'एतस्मादधीष्व, एष वेदवेदाङ्गपारगः' इति वचनमुपाध्यायविषयं भवति, तद्वत्। कथं पुनरदृश्यत्वादिगुणकस्य भूतयोनेर्विग्रहवद्रूपं संभवति? सर्वात्मत्वविवक्षयेदमुच्यते, न तु विग्रहवत्त्वविवक्षया इत्यदोषः, "अहमन्नमहमन्नमहमन्नम्। अहमन्नादः" इत्यादिवत्॥

अन्ये पुनर्मन्यन्ते—नायं भूतयोने रूपोपन्यासः, जायमानत्वेनोपन्यासात्।

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥"

इति हि पूर्वत्र प्राणादिपृथिव्यन्तं तत्त्वजातं जायमानत्वेन निरदिक्षत्। उत्तरत्रापि च "तस्मादग्निः समिधो यस्य सूर्यः" इत्येवमादि,

प्रकटार्थविवरणम्

एष सर्वभूतानामन्तरात्मेत्यर्थः। उपदिश्यतां नाम; ततः किमित्याशङ्क्याह—तच्चेति॥ तनुमहिम्नः परिच्छिन्नशक्तेरित्यर्थः। यथा कश्चित् ब्रह्मवित् सार्वात्म्यविवक्षया "अहमन्नम्" "अहमन्नादः" इति साम गायति स्म, न त्वन्ना[न्ना]द्याभिप्रायेण अपुरुषार्थप्रसङ्गादित्यर्थः। स्वाभिप्रायेण व्याख्यातुं परव्याख्यामाक्षिपति—अन्ये पुनर्मन्यन्त इति॥ एष सर्वभूतान्तरात्मापि एतस्मादेव जायत इति पूर्वेणैव क्रियापदेनान्वयात् जायमानत्वेनास्य निर्देश इत्यर्थः। समिध इव द्युलोकाग्नेर्भासको यस्सूर्यस्सोऽपि तस्मादेव जायत इत्यर्थः।

१. A omits तनु.

भाष्यम्

"अतश्च सर्वा ओषधयो रसाश्च" इत्येवमन्तं जायमानत्वेनैव निर्देक्ष्यति। इहैव कथमकस्मादन्तराले भूतयोने रूपमुपन्यस्येत्? सर्वात्मत्वमपि सृष्टिं परिसमाप्योपदेक्ष्यति "पुरुष एवेदं विश्वं कर्म" इत्यादिना। श्रुतिस्मृत्योश्च त्रैलोक्यशरीरस्य प्रजापतेर्जन्मादि निर्दिश्यमानमुपलभामहे—

"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥" इति।

समवर्ततेत्यजायतेत्यर्थः। तथा

"स वै शरीरी प्रथमः स वै पुरुष उच्यते।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत॥" इति च।

विकारपुरुषस्यापि सर्वभूतान्तरात्मत्वं संभवति, प्राणात्मना सर्वभूतानामध्यात्ममवस्थानात्। अस्मिन्पक्षे "पुरुष एवेदं विश्वं कर्म" इत्यादिसर्वरूपोपन्यासः परमेश्वरप्रतिपत्तिहेतुरिति व्याख्येयम्॥

प्रकटार्थविवरणम्

यदुक्तं सर्वात्मत्वविवक्षयेदमुच्यत इति तत्राह—सर्वात्मत्वमपीति॥ नन्वीदृशस्यासंभाव्यमानं जन्म निर्दिश्यत इत्याशङ्क्याह—श्रुतिस्मृत्योश्चेति॥ कस्मै प्रजापतये तस्मै विधेम परिचरेम। ननु हिरण्यगर्भः सृष्ट्यादाववर्तिष्टेत्येतावत् श्रूयते, न जन्मेत्याशङ्क्याह—समवर्ततेति॥ जातस्सन् भूतग्रामस्यैश्वर्यतया पतिः बभूवेति शेषः। अस्तु श्रुतिस्मृतिप्रसिद्धं जन्म; तस्य सर्वभूतान्तरात्मत्वं कथमित्याशङ्क्याह—विकारेति॥ पूर्वकल्पे प्रकृष्टज्ञानकर्मानुष्ठाता कश्चिद्यजमानः कल्पादौ हिरण्यगर्भतया प्रादुर्भवति। तस्य च सकलप्राणाद्यधिष्ठातृत्वात् अधिष्ठात्रधिष्ठेययोश्चाभेदात् प्राणात्मना सर्वभूतानां अध्यात्मशरीरे तस्यावस्थानं संभवतीत्यर्थः। तस्मादपञ्चीकृतभूताद्यभिमानिनो हिरण्यगर्भस्य विग्रहविशिष्टरूपेण तदधिष्ठेयप्राणादिजन्मानन्तरं जन्म निर्दिश्यत इति। कस्तर्हि सूत्रार्थ इत्याशङ्क्याह—अस्मिन् पक्ष इति॥ विश्वं समस्तं

१. A adds यो विकार इति विचारहेतुर्वा विकार इत्यर्थः। तदिह प्रकृतवाक्ये

२. T, P, TM and A. कथं

भाष्यम्

## वैश्वानरः साधारणशब्दविशेषात् ॥ १-२-२४ ॥

"को न आत्मा किं ब्रह्म" इति, "आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि" इति चोपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिन्दया च वैश्वानरं प्रत्येषां मूर्धादिभावमुपदिश्याम्नायते "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति

प्रकटार्थविवरणम्

कर्मसाध्यं तपो ज्ञानं च पुरुष एवेति सर्वात्मकत्वलक्षणरूपोपन्यासाद्भूतयोनिः परमात्मा प्रतिपत्तव्य इत्यर्थः ॥

वैश्वानरः साधारणशब्दविशेषात् ॥

विषयवाक्यं दर्शयितुमुपक्रममाह—को न इति ॥ "प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिः इन्द्रद्युम्नो भाल्लवेयः जनः शार्कराक्ष्यः बुडिल आश्वतराश्विः ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसां चक्रुः को न आत्मा किं ब्रह्म" इति । ते च निश्चयमलभमाना निश्चिकीर्षयोद्दालकमभ्याजग्मुः । सोऽपि न सम्यग्वेदेति सह तेन षडपि कैकयं राजानमाजग्मुः । तं चोचुः[1] । नरः आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि स्मरसि तमेव नो ब्रूहीति । स च तान् पप्रच्छ तेषां विपरीतज्ञाननिरासेन सम्यग्ज्ञानजिग्राहयिषया औपमन्यव कं त्वमात्मानं उपास्से इति दिवमेवेति होवाच । अनन्तरं राजोवाच 'एष सुतेजा वैश्वानरः यं त्वमात्मानमुपास्से मूर्धा त्वेष आत्मने मूर्धा ते व्यपतिष्यत् यन्मां नागमिष्यः' इति । ततस्सत्ययज्ञं पप्रच्छ । स चादित्यमित्युवाच । ततश्चैष वै विश्वरूप आत्मा चक्षुष्टे तदात्मन इत्यन्धोऽभविष्यो यन्मां नागमिष्यः' इति । एवं क्रमेण द्युप्रभृतीनां सुतेजस्त्वादिगुणयोगं विधायैकैकोपासननिन्दया च द्युप्रभृतीनां वैश्वानरमूर्धादिभावमुपदिश्य परिपूर्णवैश्वानरोपासनमाम्नायते "यस्त्वेतम्" इत्यादिना आभिमुख्येन । विश्वं विमिमीते जानातीत्यभिविमानः । तं प्रादेशपरिमाणं यं उपास्से[2] तस्य सर्वलोका-

१. T, T¹ and P. तं चापुः २. A. यत्र उपास्ते

## भाष्यम्

तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपो वायुः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" इत्यादि। तत्र संशयः—किं वैश्वानरशब्देन जाठरोऽग्निरुपदिश्यते, उत भूताग्निः, अथ तदभिमानिनी देवता, अथवा शारीरः, आहोस्वित्परमेश्वर इति। किं पुनरत्र संशयकारणम्? वैश्वानर इति जाठरभूताग्निदेवतानां साधारणशब्दप्रयोगात्, आत्मेति च शारीरपरमेश्वरयोः। तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः। किं तावत्प्राप्तम्? जाठरोऽग्निरिति। कुतः? तत्र हि विशेषेण क्वचित्प्रयोगो दृश्यते—"अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते" इत्यादौ। अग्निमात्रं वा स्यात्, तत्सामान्येनापि प्रयोगदर्शनात्—"विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इत्यादौ। अग्निशरीरा वा देवता स्यात्, तस्यामपि

## प्रकटार्थविवरणम्

श्रयं फलं भवतीत्यर्थः। ध्येयरूपमाह—तस्य हेति॥ पृथङ्नानागतं वर्त्म गमनं संचरणमात्मा स्वरूपमस्येति पृथग्वर्त्मात्मा। वायुः सन्देहो मध्यदेहः[1] सर्वगतत्वाद्बहुलो विस्तीर्णः आकाशः। बस्तिः मूत्रस्थानम्। रयिः आपः। अस्यैव होमाधिकरणत्वसंपादनायां उर एवेत्यादिः। सबीजं संशयमाह—तत्रेत्यादिना॥ पूर्वत्र वाक्योपक्रमगतस्याद्दश्यत्वादेः साधारणस्य वाक्यशेषगतेन सर्वज्ञत्वाद्युपदेशेन ब्रह्मपरत्वमुक्तम्। तेन न्यायेनेहाप्युपक्रमगतस्य साधारणशब्दस्य वाक्यशेषगतेन होमाधिकरणत्वलिङ्गेन प्रसिद्ध्यनुगृहीतेन[नेयत्वात्] जाठर एवोपास्य इति पूर्वपक्षमाह—किं तावदित्यादिना॥ पक्षान्तरमाह—अग्निमात्रं वेति॥ विश्वस्मै भुवनायाग्निं वैश्वानरमह्नां केतुं चिह्नम्, सूर्योदये हि दिनव्यवहारः[2], अकृण्वन् कृतवन्त इत्यर्थः। पक्षान्तरमाह—अग्निशरीरावेति॥ वैश्वानरस्य सुमतौ शोभनबुद्धौ वयं स्याम भवेव। तस्याश्र-

१. A omits मध्यदेहः  २. A adds ५४ (?)

भाष्यम्

प्रयोगदर्शनात्—"वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः" इत्येवमाद्यायाः श्रुतेर्देवतायामैश्वर्याद्युपेतायां संभवात् । अथात्मशब्दसामानाधिकरण्यादुपक्रमे च "को न आत्मा किं ब्रह्म" इति केवलात्मशब्दप्रयोगादात्मशब्दवशेन वैश्वानरशब्दः परिणेय इत्युच्यते, तथापि शारीर आत्मा स्यात्; तस्य भोक्तृत्वेन वैश्वानरसंनिकर्षात्, प्रादेशमात्रमिति च विशेषणस्य तस्मिन्नुपाधिपरिच्छिन्ने संभवात् । तस्मान्नेश्वरो वैश्वानर इत्येवं प्राप्तम् ॥

तत्रेदमुच्यते—वैश्वानरः परमात्मा भवितुमर्हति । कुतः? साधारणशब्दविशेषात् । साधारणशब्दयोर्विशेषः साधारणशब्दविशेषः । यद्यप्येतावुभावप्यात्मवैश्वानरशब्दौ साधारणशब्दौ, वैश्वानरशब्दस्तु त्रयस्य साधारणः, आत्मशब्दश्च द्वयोः, तथापि, विशेषो दृश्यते, येन परमेश्वरपरत्वं तयोरभ्युपगम्यते—"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इत्यादिः । अत्र हि परमेश्वर एव द्युमूर्धत्वादिविशिष्टोऽवस्थान्तरगतः प्रत्यगात्मत्वेनोपन्यस्त आध्यानायेति गम्यते, कारणत्वात् । कारणस्य हि सर्वाभिः कार्यगताभिरवस्थाभिरवस्थावत्त्वात् द्युलोकाद्यवयवत्वमुपपद्यते । "स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति च सर्वलोकाद्याश्रयं फलं श्रूयमाणं परमकारणपरिग्रहे संभवति,

प्रकटार्थविवरणम्

त्विषया सुमतिर्भवत्विति केचित्प्रार्थयन्ते । किमिति एवं प्रार्थना—राजा हि यस्मात् कं प्रजापतिः अभिमुखा श्रीरस्येत्यभिश्रीरश्च इत्यर्थः । पूर्वत्रापरितोषमुक्त्वा पक्षान्तरमादत्ते—अथेत्यादिना ॥ सिद्धान्तमवतारयति—तत्र इदमुच्यत इत्यादिना ॥ ननु नायं विशेषः परमात्मगमकः, तस्य निर्विशेषस्य द्युमूर्धत्वाद्यसंभवादित्याशङ्क्याह—अत्र हीति ॥ लिङ्गान्तराण्याह—स सर्वेष्वित्यादिना ॥

१. A adds आध्यान कथं पास्य च स्थान्तरमत इह करणत्वादिति ॥

२. TM. गतः

भाष्यम्

"एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति च तद्विदः सर्वपाप्मप्रदाहश्रवणम्, "को न आत्मा किं ब्रह्म" इति चात्मब्रह्मशब्दाभ्यामुपक्रमः— इत्येवमन्तानि ब्रह्मलिङ्गानि परमेश्वरमेवावगमयन्ति। तस्मात्परमेश्वर एव वैश्वानरः॥

## स्मर्यमाणमनुमानं स्यादिति॥ १-२-२५॥

इतश्च परमेश्वर एव वैश्वानरः; यस्मात्परमेश्वरस्यैव "अग्निरास्यं द्यौर्मूर्धा" इतीदृशं त्रैलोक्यात्मकं रूपं स्मर्यते

"यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः।
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः॥" इति॥

तत्स्मर्यमाणं रूपं मूलभूतां श्रुतिमनुमापयदस्य वैश्वानरशब्दस्य परमेश्वरपरत्वेऽनुमानं लिङ्गं गमकं स्यादित्यर्थः। इतिशब्दो हेत्वर्थे— यस्मादिदं गमकम्, तस्मादपि वैश्वानरः परमात्मैवेत्यर्थः। यद्यपि स्तुतिरियम् "तस्मै लोकात्मने नमः" इति, तथापि स्तुतित्वमपि नासति मूलभूते वेदवाक्ये सम्यगीदृशेन रूपेण संभवति।

"द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे।
दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता॥"

इत्येवंजातीयका च स्मृतिरिहोदाहर्तव्या॥

प्रकटार्थविवरणम्

स्मर्यमाणमनुमानं स्यादिति॥

ननु स्मृतेः स्तुतिरूपत्वात् स्तुतेश्चासदारोपेणापि संभवात् न मूलापेक्षेत्याशङ्क्याह—यद्यपि स्तुतिरियमिति॥

भाष्यम्

## शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥ १-२-२६ ॥

अत्राह—न परमेश्वरो वैश्वानरो भवितुमर्हति । कुतः? शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च । शब्दस्तावत्—वैश्वानरशब्दो न परमेश्वरे संभवति, अर्थान्तरे रूढत्वात्; तथाग्निशब्दः "स एषोऽग्निर्वैश्वानरः" इति । आदिशब्दात् "हृदयं गार्हपत्यः" इत्याद्यग्नित्रेताप्रकल्पनम्; "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्" इत्यादिना च प्राणाहुत्यधिकरणतासंकीर्तनम् । एतेभ्यो हेतुभ्यो जाठरो वैश्वानरः प्रत्येतव्यः । तथान्तःप्रतिष्ठानमपि श्रूयते "पुरुषेऽन्तःप्रतिष्ठितं वेद" इति । तच्च जाठरे संभवति । यदप्युक्तम् "मूर्धैव सुतेजाः" इत्यादेर्विशेषात्कारणात्पर-

प्रकटार्थविवरणम्

शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥

उक्तमपि सिद्धान्तं पुनराक्षिप्य समाधत्ते—शब्दादिभ्य इति ॥ वाजसनेयके ह्यग्निरहस्ये वैश्वानरे अग्निशब्दप्रयोगात् तत्सामान्याच्छान्दोग्येऽपि वैश्वानरोऽग्निरेव, स च प्राणाहुत्यधिकरणतालिङ्गात् जाठर एवेति निश्चीयत इति भावः । जाठरपरिग्रहे लिङ्गान्तरमाह—तथान्तःप्रतिष्ठानमपीति ॥ अग्निरहस्ये हि सप्रपञ्चं वैश्वानरविद्यामुक्त्वाह "स यो ह वै तमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद" इति । पुरुषेऽन्तःप्रतिष्ठितश्चाग्निः जाठर एव प्रसिद्ध इत्यर्थः । ननु वाजसनेयकेऽपि द्युमूर्धत्वादिश्रवणाच्च जाठरपरिग्रह इत्याशङ्क्याह—यदप्युक्तमिति ॥ द्युमूर्धत्वादिविशेषः परमात्मपक्षपाती प्रतिभाति, तथान्तःप्रतिष्ठानादिलिङ्गसहकृतोऽग्न्यादिशब्दो जाठरपक्षपाती प्रतिभाति । एवं सति

भाष्यम्

मात्मा वैश्वानर इति, अत्र ब्रूमः—कुतो न्वेष निर्णयः, यदुभयथापि विशेषप्रतिभाने सति परमेश्वरविषय एव विशेष आश्रयणीयो न जाठरविषय इति। अथवा भूताग्नेरन्तर्बहिश्चावतिष्ठमानस्यैष निर्देशो भविष्यति। तस्यापि हि द्युलोकादिसंबन्धो मन्त्रवर्णे अवगम्यते—"यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम्" इत्यादौ। अथवा तच्छरीराया देवताया ऐश्वर्ययोगात् द्युलोकाद्यवयवत्वं भविष्यति। तस्मान्न परमेश्वरो वैश्वानर इति॥

अत्रोच्यते—न तथादृष्ट्युपदेशादिति। न शब्दादिभ्यः कारणेभ्यः परमेश्वरस्य प्रत्याख्यानं युक्तम्। कुतः? तथा जाठरापरित्यागेन दृष्ट्युपदेशात्। परमेश्वरदृष्टिर्हि जाठरे वैश्वानरे इहोपदिश्यते "मनो ब्रह्मेत्युपासीत" इत्यादिवत्। अथवा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते "मनोमयः प्राणशरीरो भारूपः" इत्यादिवत्। यदि चेह परमेश्वरो न विवक्ष्येत, केवल एव जाठरोऽग्निर्विवक्ष्येत, ततः "मूर्धैव सुतेजाः" इत्यादेर्विशेषस्यासंभव एव स्यात्। यथा तु देवताभूताग्निव्यपाश्रयेणाप्ययं विशेष उपपादयितुं न शक्यते, तथोत्तरसूत्रे

प्रकटार्थविवरणम्

परमेश्वरोररीकरणं किंकृतम्? यद्यग्न्यादिशब्दः परमेश्वरे कथंचिन्नीयते तर्हि द्युमूर्धत्वादिकमेव जाठरोपासनार्थमाश्रीयतामिति भावः। पक्षान्तरमाह—अथवेति॥ इमां पृथिवीम्, उत तथा द्यां द्युलोकम्, एते द्यावाभूमी एव रोदसीशब्दवाच्ये यो भानुरूपेणाततान अन्तरिक्षं च व्याप्तवानित्यर्थः॥

परिहारभागमवतारयति—अत्रोच्यत इति॥ जाठरप्रतीकत्वाज्जाठरोपाधिकत्वाद्वा परमेश्वरेऽपि लक्षणयाग्न्यादिशब्दोपपत्तौ न तस्य परमेश्वरलिङ्गान्यथाकरणे सामर्थ्यमिति भावः। ननु मुख्ये किं बाधकमित्याशङ्क्य "असंभवात्" इति सूत्रभागमवतारयति—यदि चेहेति॥ उपासनार्थत्वेऽपि जाठरे द्युमूर्धत्वादेरसत एवारोपः स्यान्न सति संभवे स युक्त इति भावः।

१. A adds मूर्ध

भाष्यम्

वक्ष्यामः। यदि च केवल एव जाठरो विवक्ष्येत, पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं तस्य स्यात्; न तु पुरुषत्वम्; पुरुषमपि चैनमधीयते वाजसनेयिनः—"स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति। परमेश्वरस्य तु सर्वात्मत्वात् पुरुषत्वं पुरुषेऽन्तःप्रतिष्ठितत्वं चोभयमुपपद्यते। ये तु "पुरुषविधमपि चैनमधीयते" इति सूत्रावयवं पठन्ति, तेषामेषोऽर्थः—केवलजाठरपरिग्रहे पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं स्यात्, न पुरुषविधत्वम्; पुरुषविधमपि चैनमधीयते वाजसनेयिनः—"पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति। पुरुषविधत्वं च प्रकरणाद्यदधिदैवतं द्युमूर्धत्वादि पृथिवीप्रतिष्ठितत्वान्तम्, यच्चाध्यात्मं प्रसिद्धं मूर्धत्वादि चुबुकप्रतिष्ठितत्वान्तम्, तत्परिगृह्यते॥

## अत एव न देवता भूतं च॥ १-२-२७॥

यत्पुनरुक्तम्—भूताग्नेरपि मन्त्रवर्णे द्युलोकादिसंबन्धदर्शनात् "मूर्धैव सुतेजाः" इत्याद्यवयवकल्पनं तस्यैव भविष्यतीति, तच्छरीराया देवताया वैश्वर्ययोगादिति, तत्परिहर्तव्यम्। अत्रोच्यते—अत एवोक्तेभ्यो हेतुभ्यो न देवता वैश्वानरः। तथाभूताग्निरपि न वैश्वानरः; न हि भूताग्नेरौष्ण्यप्रकाशमात्रात्मकस्य द्युमूर्धत्वादिकल्पनोपपद्यते, विकारस्य विकारान्तरात्मत्वासंभवात्। तथा देवतायाः सत्यप्यैश्वर्ययोगे न द्युमूर्धत्वादिकल्पना संभवति, अकारणत्वात् परमेश्वराधीनैश्वर्यत्वाच्च। आत्मशब्दासंभवश्च सर्वेष्वेषु पक्षेषु स्थित एव॥

प्रकटार्थविवरणम्

"पुरुषमपि चैनमधीयते" इति सूत्रभागं व्याचष्टे—यदि चेति॥ ननु जाठरस्याप्यापादतलमस्तकव्यापित्वात् पुरुषविधत्वं घटत इत्याशङ्क्याह—पुरुषविधत्वं च प्रकरणादिति॥ नापादतलमस्तकव्यापित्वं पुरुषाकारत्वमित्यर्थः॥

अत एव न देवता भूतं च॥

उक्तहेतून् स्मारयति—न हि भूताग्नेरित्यादिना॥

भाष्यम्

## साक्षादप्यविरोधं जैमिनिः ॥ १-२-२८ ॥

पूर्वं जाठराग्निप्रतीको जाठराग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तम् अन्तःप्रतिष्ठितत्वाद्यनुरोधेन । इदानीं तु विनैव प्रतीकोपाधिकल्पनाभ्यां साक्षादपि परमेश्वरोपासनपरिग्रहे न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते । ननु जाठराग्न्यपरिग्रहेऽन्तःप्रतिष्ठितत्ववचनं शब्दादीनि च कारणानि विरुध्येरन्निति ; अत्रोच्यते—अन्तःप्रतिष्ठितत्ववचनं तावन्न विरुध्यते । न हीह "पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति जाठराग्न्यभिप्रायेणेदमुच्यते, तस्याप्रकृतत्वादसंशब्दितत्वाच्च । कथं तर्हि यत्प्रकृतं मूर्धादिचुबुकान्तेषु पुरुषावयवेषु पुरुषविधत्वं कल्पितम्, तदभिप्रायेणेदमुच्यते "पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद" इति । यथा वृक्षे शाखां प्रतिष्ठितां पश्यतीति, तद्वत् । अथवा यः प्रकृतः परमात्माध्यात्ममधिदैवतं च पुरुषविधत्वोपाधिः, तस्य यत्केवलं साक्षिरूपम्, तदभिप्रायेणेदमुच्यते "पुरुषेऽन्तःप्रतिष्ठितं वेद" इति । निश्चिते च

प्रकटार्थविवरणम्

### साक्षादप्यविरोधं जैमिनिः ॥

वाजनेयके अग्निवाचकमभ्युपगम्य परमात्मनि च जाठरसंबद्धे लक्षणां स्वीकृत्य परमात्मोपासनं तावन्न विरुध्यत इत्युक्तम् । इदानीं तु परमात्मवाचकोऽग्निरहस्येऽप्यग्न्यादिशब्दः ; ततो यदधिदैवतं द्युलोकादिपृथिवीपर्यन्तं रूपं यच्च प्रसिद्धमूर्धादिचिबुकान्तमध्यात्मरूपं तदनुगतः परमेश्वर उपास्यो न जाठरावच्छिन्न इत्याह— साक्षादपीति ॥ करशिरश्चरणादिसमुदायः पुरुषः । तदन्तर्वर्ति मूर्धादिचिबुकान्तरूपं समुदायान्तर्गतत्वान्मूर्धाद्यवयवानां न तूदरान्तरवस्थानं विवक्षितमित्याह—न हीह पुरुषविधमिति ॥ अथ वा जीवः पुरुषशब्देनोच्यते । तदन्तःप्रतिष्ठितोऽन्तर्यामी निर्दिश्यत इत्याह—अथ वायं प्रकृत इति ॥ एवमन्तःप्रतिष्ठानं जाठरापरिग्रहे व्याख्याय शब्दादीनि जाठरपरिग्रहकारणानि परमात्मपक्षेऽप्यविरुद्धानीत्याह—निश्चिते चेति ॥

भाष्यम्

पूर्वापरालोचनवशेन परमात्मपरिग्रहे, तद्विषय एव वैश्वानरशब्दः केनचिद्योगेन वर्तिष्यते—विश्वश्चायं नरश्चेति, विश्वेषां वायं नरः, विश्वे वा नरा अस्येति विश्वानरः परमात्मा, सर्वात्मत्वात्, विश्वानर एव वैश्वानरः; तद्धितोऽनन्यार्थः, राक्षसवायसादिवत् । अग्निशब्दोऽप्यग्रणीत्वादियोगाश्रयणेन परमात्मविषय एव भविष्यति । गार्हपत्यादिकल्पनं प्राणाहुत्यधिकरणत्वं च परमात्मनोऽपि सर्वात्मत्वादुपपद्यते ॥

कथं पुनः परमेश्वरपरिग्रहे प्रादेशमात्रश्रुतिरुपपद्यत इति तां व्याख्यातुमारभते—

## अभिव्यक्तेरित्याश्मरथ्यः ॥ १-२-२९ ॥

अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तं स्यात् । अभिव्यज्यते किल प्रादेशमात्रपरिमाणः परमेश्वर उपासकानां कृते । प्रदेशेषु वा हृदयादिषूपलब्धिस्थानेषु विशेषेणाभिव्यज्यते । अतः पर-

प्रकटार्थविवरणम्

विश्वेषां वायं नरो नेता संहरन् । "नॄ नये" इति धात्वर्थानुसारात् सर्वे वा जीवा अस्यैव प्रतिबिम्बभूताः ॥ अनन्यार्थ इति ॥ प्रकृत्यर्थातिरिक्तोऽत्र प्रत्ययार्थो न भवतीत्यर्थः । यथा रक्ष एव राक्षसः, वय एव वायसः इति स्वार्थेऽण्[1]प्रत्ययः। अगधातोर्गत्यर्थस्य नप्रत्ययान्तस्य रूपमग्निरित्यौणादिकम्, तत्राङ्गयति गमयति [2]अगतोऽग्र[अगत् अग्रं]जन्म प्रापयतीत्यग्निरग्रणीरित्यर्थः । अथवा अभितः सर्वत्र गत इत्यग्निः । अथवाङ्क्ते जानाति विश्वमित्यग्निः, समासादिनैकपद्यमापन्नस्यावयवशक्त्यनुसारेण विशिष्टेऽर्थे वृत्तिर्योगो मुख्यवृत्तिमेद एव । तदेवं वाजसनेयकेऽपि परमेश्वरोपासनसिद्धेः न तद्बलेनापि छान्दोग्यवाक्यं विघटनीयमिति फलितार्थः । यच्च छान्दोग्यगतमेव आठपलिङ्गमुक्तं तत्राह—गार्हपत्यादीति ॥

अभिव्यक्तेरित्याश्मरथ्यः ॥

मात्रां परिमाणमतिक्रान्तोऽतिमात्रः तस्येति । प्रदेशेषु वा मीयते व्यज्यत इति प्रादेशमात्र इत्याह—प्रदेशेष्विति ॥

१. TM omits अण्  २. TM. जगतो

भाष्यम्

मेश्वरेऽपि प्रादेशमात्रश्रुतिरभिव्यक्तेरुपपद्यत इत्याश्मरथ्य आचार्यो मन्यते ॥

## अनुस्मृतेर्बादरिः ॥ १-२-३० ॥

प्रादेशमात्रहृदयप्रतिष्ठेन वायं मनसानुस्मर्यते ; तेन प्रादेशमात्र इत्युच्यते ; यथा प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते, तद्वत् । यद्यपि च यवेषु स्वगतमेव परिमाणं प्रस्थसंबन्धाद्व्यज्येत, न चेह परमेश्वरगतं किंचित्परिमाणमस्ति यद्धृदयसंबन्धाद्व्यज्येत, तथापि प्रयुक्तायाः प्रादेशमात्रश्रुतेः संभवति यथाकथंचिदनुस्मरणमालम्बनमित्युच्यते । प्रादेशमात्रत्वेन वायमप्रादेशमात्रोऽप्यनुस्मरणीयः प्रादेशमात्रश्रुत्यर्थवत्त्वाय । एवमनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्रश्रुतिरिति बादरिराचार्यो मन्यते ॥

## संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ १-२-३१ ॥

संपत्तिनिमित्ता वा स्यात्प्रादेशमात्रश्रुतिः। कुतः? तथाहि—समानप्रकरणं वाजसनेयिब्राह्मणं द्युप्रभृतीन्पृथिवीपर्यन्तांस्त्रैलोक्यात्मनो वैश्वा-

प्रकटार्थविवरणम्

अनुस्मृतेर्बादरिः ॥

अत्रैव मतान्तरमाह—अनुस्मृतेरिति ॥ स्वयमेव दृष्टान्तवैषम्यमाशङ्क्य परिहरति—यद्यपीति[1] ॥

संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥

प्रादेशमात्रश्रुतेर्यथाकथंचित् गतिमुक्त्वा अधुना साक्षाच्छ्रुत्युक्तामेव गतिमाह—संपत्तेरिति ॥ अप्रादेशमात्रमपि परमेश्वरं संपादनेन प्रादेशमात्रमिव सुविदितवन्तो देवाः परमेश्वरमेवाभिसंपन्नाः पूर्वम्। अतो वो युष्मभ्यं तथा

१. A adds हृदयस्तु परिमाणं...स्मृतौ पलीयमित्यादि [?] यथाकथंचित् इत्याकरणात्... तत्रैते प्रकृताश्रुतेः सतम्यर्थः ॥

भाष्यम्

नरस्यावयवानध्यात्ममूर्धप्रभृतिषु चुबुकपर्यन्तेषु देहावयवेषु संपादयत्प्रादेशमात्रसंपत्तिं परमेश्वरस्य दर्शयति—"प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसंपन्नास्तथा नु व एतान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति । स होवाच मूर्धानमुपदिशन्नुवाचैष वा अतिष्ठा वैश्वानर इति । चक्षुषी उपदिशन्नुवाचैष वै सुतेजा वैश्वानर इति । नासिके उपदिशन्नुवाचैष वै पृथग्वर्त्मात्मा वैश्वानर इति । मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाचैष वै रयिर्वैश्वानर इति । चुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानरः" इति । चुबुकमित्यधरं मुखफलकमुच्यते । यद्यपि वाजसनेयके द्यौरतिष्ठात्वगुणा

प्रकटार्थविवरणम्

द्युप्रभृतीनेतानवयवान् वक्ष्यामि । यथा प्रादेशपरिमाणं वैश्वानरं संपादयिष्यामीत्यौपमन्यवप्रभृतीन् प्रति वक्तव्यत्वेन प्रतिज्ञाय स राजा कैकय उवाच—किं कुर्वन् ? स्वस्य मूर्धानमुपदिशन् कराग्रेण दर्शयन् । एष वै भूरादीन् लोकानतीत्य तिष्ठतीत्यतिष्ठा द्यौर्वैश्वानरस्यावयवः प्रसिद्धे मूर्ध्नि वैश्वानरस्याधिदैवतं यो मूर्धा द्युलोकः तद्दृष्टिः कर्तव्येत्यर्थः । चक्षुषी प्रदर्शयन्नुवाच । "एष वै सुतेजा आदित्योऽधिदैवतं वैश्वानरस्य चक्षुः" इति । वैश्वानर इति सर्वत्र योजना । मुखेनावच्छिन्नं मुख्यम्; मुखे भवा मुख्याः । ननु छान्दोग्यवाजसनेयकयोः नैका विद्या गुणवैलक्षण्यात् । अतो न वाजसनेयकानुसारेण छान्दोग्यगतप्रादेशमात्रश्रुतिर्व्याख्यातव्येत्याशङ्क्याह — यद्यपीति ॥ बहुतरे साम्ये सति नाल्पेन वैलक्षण्येन विद्यैक्यप्रत्यभिज्ञायां किंचिद्धीयत इत्यर्थः । सर्वशाखाप्रत्ययन्यायस्य वक्ष्यमाणत्वाच्च वाजसनेयकगतोऽतिष्ठागुणश्छान्दोग्ये द्रष्टव्यः । छान्दोग्यगतश्च विश्वरूपत्वगुणो वाजसनेयके द्रष्टव्य इत्यर्थः । यच्चावाचि छान्दोग्यवत् "को न आत्मा किं ब्रह्म" इत्युपक्रमाभावात् विद्याभेद इति, तदसत्; "स एषोऽग्निर्वैश्वानरो यत्पुरुषः" इत्युपसंहारात्

१. A adds तथा मध्यं द्युलोकस्य सच ब्रह्मपरस्य च । ब्रह्मलोकस्य सविधे विधेः...मित्याह स इति ॥

२. T, T[1], and P add तत्

भाष्यम्

समाम्नायते, आदित्यश्च सुतेजस्त्वगुणः, छान्दोग्ये पुनर्द्यौः सुतेजस्त्वगुणा समाम्नायते, आदित्यश्च विश्वरूपत्वगुणः; तथापि नैतावता विशेषेण किंचिद्धीयते, प्रादेशमात्रश्रुतेरविशेषात्, सर्वशाखाप्रत्ययत्वाच्च। संपत्तिनिमित्तां प्रादेशमात्रश्रुतिं युक्ततरां जैमिनिराचार्यो मन्यते ॥

## आमनन्ति चैनमस्मिन् ॥ १-२-३२ ॥

आमनन्ति चैनं परमेश्वरमस्मिन्मूर्धचुबुकान्तराले जाबालाः "य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति। सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति । वरणायां नास्यां च मध्ये प्रतिष्ठित इति । का वै वरणा का च नासी" इति। तत्र चेमामेव नासिकाम् "सर्वाणीन्द्रियकृतानि पापानि वारयतीति सा वरणा, सर्वाणीन्द्रियकृतानि पापानि

प्रकटार्थविवरणम्

यस्मात्पूर्वं प्रयुज्यते यच्छब्दस्तेन संबध्यते स एष महाब्राह्मणो यश्चतुर्वेदाभिज्ञ इति वत् यः पुरुषः सोऽग्निर्वैश्वानर इति पुरुषोद्देशेनाग्रणीत्वादिगुणविधानात् स एवोपक्रान्त इति गम्यते। पुरुषशब्दश्च वेदान्ते प्रायेण परमात्मनि प्रयुज्यते— "पुरुष एवेदं विश्वम्" "पुरुषान्न परं किंचित्" "तं त्वौपनिषदं पुरुषम्" इत्यादौ। तस्माद्विधैक्यावगमात् वाजसनेयानुसारेण छान्दोग्येऽपि प्रादेशमात्रश्रुतिर्व्याख्येयेत्युपसंहरति —संपत्तिनिमित्तामिति ॥

आमनन्ति चैनमस्मिन् ॥

इतश्च संपत्तिनिमित्ता प्रादेशमात्रश्रुतिरित्याह—आमनन्ति चेति ॥ य एष प्रसिद्ध आत्मानन्तः; अन्तः नाशो नास्तीत्यनन्तः; यथास्वरूपेण न व्यज्यत इत्यव्यक्तः; सोऽविमुक्ते प्रतिष्ठितः। प्रतिबिम्बस्य बिम्बाधिष्ठानत्वात् विद्यया बन्धाद्विमुक्तो न भवतीत्यविमुक्तः, सदामुक्तः परमात्मा। स कस्मिन्प्रतिष्ठित इति। याज्ञवल्क्येन प्रत्युक्ते पुनरत्रिः पप्रच्छ—"का वै[1] वरणा का च नासी"

१. T, T[1] and P सोऽपि मुक्तः

भाष्यम्

नाशयतीति सा नासी" इति वरणा नासीति निरुच्य पुनरप्यामनन्ति "कतमच्चास्य स्थानं भवतीति । भ्रुवोर्घ्राणस्य च यः संधिः स एष द्युलोकस्य परस्य च संधिर्भवति" इति । तस्मादुपपन्ना परमेश्वरे प्रादेशमात्रश्रुतिः । अभिविमानश्रुतिः प्रत्यगात्मत्वाभिप्राया । प्रत्यगात्मतया सर्वैः प्राणिभिरभिविमीयत इत्यभिविमानः; अभिगतो वायं प्रत्यगात्मत्वात्, विमानश्च मानवियोगादित्यभिविमानः । अभिविमिमीते वा सर्वं जगत्, कारणत्वादित्यभिविमानः। तस्मात्परमेश्वरो वैश्वानर इति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छङ्करभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
प्रथमाध्यायस्य द्वितीयः पादः ॥

प्रकटार्थविवरणम्

इति । तत्रोवाच[1] याज्ञवल्क्यः सर्वाणीन्द्रियाणि वारयति, तेन वरणा भवति । सर्वाणीन्द्रियकृतानि पापानि नाशयति, तेन नासी भवतीति; तामेव प्रकृतामुपासनबुद्धिं सर्वनाशप्रापिकां वारकत्वोपाधौ वरणानाशकत्वोपाधौ नासीति निर्वचनं कृत्वा पुनः कतमच्चास्योपासनस्थानं भवतीति पृष्टः प्राह—भ्रुवोर्नासिक्यप्राणस्य च यस्सन्धिः तत्स्थानमिति । संपादनाभिप्रायेणैवाह स[2], यत आह—स एष आत्मा द्योर्लोकस्य परस्य च लोकान्तरस्य च सन्धिः सर्वं हि तेनैव सन्धीयते, अतः[3] सन्धिः । न तस्य संपत्तिमन्तरेण मुख्यं स्थानं संभवतीत्यर्थः । अभिविमानश्रुतिं व्याचष्टे—अभिविमानेति ॥ मानं परिमाणम् । उपसंहरति—तस्मादिति ॥

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे
प्रथमस्याध्यायस्य द्वितीयः पादः

---

१. A adds प्रसिद्धे चूचुके [?] वैश्वानरस्याश्वाधिदैव...पृथिवी तदृषिमाह...कमिति

२. A. तत्रैव च

३. T, T¹ and P. ततः

# अथ तृतीयः पादः



भाष्यम्

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १-३-१ ॥

इदं श्रूयते—

"यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः।

तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः॥"

इति। अत्र यदेतद्द्युप्रभृतीनामोतत्ववचनादायतनं किंचिदवगम्यते, तत्किं परं ब्रह्म स्यात्, आहोस्विदर्थान्तरमिति संदिह्यते। तत्रार्थान्तरं किमप्यायतनं स्यादिति प्राप्तम्। कस्मात्? "अमृतस्यैष सेतुः" इति श्रवणात्। पारवान्हि लोके सेतुः प्रख्यातः। न च परस्य ब्रह्मणः पारवत्त्वं शक्यमभ्युपगन्तुम्, "अनन्तमपारम्" इति श्रवणात्। अर्थान्तरे चायतने परिगृह्यमाणे स्मृतिप्रसिद्धं प्रधानं परिग्रहीतव्यम्, तस्य कारणत्वादायतनत्वोपपत्तेः। श्रुतिप्रसिद्धो वा वायुः स्यात्, "वायुर्वै

प्रकटार्थविवरणम्

द्युभ्वाद्यायतनं स्वशब्दात् ॥

मुण्डकगतं विषयवाक्यमाह—इदं श्रूयत इति॥ आयतनत्वस्य[१] प्रधानादीनामपि साधारणत्वात्संशयमाह—अत्रेति॥ पूर्वत्र वाक्योपक्रमगतस्य[२] साधारणस्य शब्दस्य वाक्यशेषगतेन द्युमूर्धत्वादिलिङ्गेनेश्वरपरतया नियमो दर्शितः। इहापि वाक्योपक्रमगतसाधारणद्युभ्वाद्यायतनत्वस्य वाक्यशेषगतसेतुत्वश्रवणेन वस्तुतः परिच्छिन्ने सेतुशब्दार्हे व्यवस्थापनं युक्तमिति पूर्वपक्षमाह—तत्रार्थान्तरमिति॥ अथ प्रधानस्याशब्दत्वेनैवाग्रहः, तत्राह[३]—श्रुतिप्रसिद्धो वेति॥ यथा सूत्रं मणिगणविधारकं लोके तथा भो गौतम वायुस्त-

१. A. आयतनस्य

२. A adds अस्य

३. TM omits वाक्य...अथ प्रधान

४. TM. हतुः

## भाष्यम्

गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति" इति वायोरपि विधारणत्वश्रवणात्। शारीरो वा स्यात्; तस्यापि भोक्तृत्वात् भोग्यं प्रपञ्चं प्रत्यायतनत्वोपपत्तेरित्येवं प्राप्ते इदमाह—

द्युभ्वाद्यायतनमिति। द्यौश्च भूश्च द्युभुवौ, द्युभुवावादी यस्य तदिदं द्युभ्वादि। यदेतदस्मिन्वाक्ये द्यौः पृथिव्यन्तरिक्षं मनः प्राणा इत्येवमात्मकं जगदोतत्वेन निर्दिष्टम्, तस्यायतनं परं ब्रह्म भवितुमर्हति। कुतः? स्वशब्दात्, आत्मशब्दादित्यर्थः। आत्मशब्दो हीह भवति—"तमेवैकं जानथ आत्मानम्" इति। आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते, नार्थान्तरपरिग्रहे। क्वचिच्च स्वशब्देनैव ब्रह्मण आयतनत्वं श्रूयते—"सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति। स्वशब्देनैव चेह पुरस्तादुपरिष्टाच्च ब्रह्म संकीर्त्यते—

## प्रकटार्थविवरणम्

सूत्रं येन सर्वाणि भूतानि संदृब्धानि दृढानि वर्तन्त इत्यर्थः। अथ वायौ नात्मशब्दो घटामटति तत्राह—शारीरो वेति॥

द्युभ्वादेरायतनं[1] द्युभ्वाद्यायतनमिति समासे सत्यप्रत्ययान्तत्वात् पुंलिङ्गता मध्याह्नादिशब्दवत्। अतस्तदायतनशब्दस्य नपुंसकत्वात् द्युभ्वाद्यायतनमिति पाठो युक्त[2] इति स्वाज्ञानमेव भास्करः प्रकटीचकार। यस्मिन्नायतने द्युपृथिव्यादिकं सर्वं जगदोतं सूत्रे मणिगणा इव ग्रथितं वर्तते। तत् शब्देन परामृश्य भोः शिष्याः तं द्युभ्वाद्याधारमात्मत्वेन जानीत यूयमिति उपदेशात् प्रधानादीनां च चेतनान्प्रत्यात्मत्वेनोपदेशायोगात् ब्रह्मैव द्युभ्वाद्यायतनमिति सिद्धान्ताशयः। स्वशब्दादित्यस्यार्थान्तरमाह—क्वचिच्चेति॥ सद्ब्रह्मायतनं यासां ताः सदायतना इति साक्षादेव ब्रह्मण आयतनत्वश्रवणादित्यर्थः। स्वशब्दमेव प्रकारान्तरेण व्याचष्टे— स्वशब्देनैवेति॥ "यस्मिन् द्यौः पृथिवी च" इत्यस्माद्वाक्यात् पूर्वोत्तरयोः वाक्ययोः ब्रह्मणो निर्देशान्मध्यस्थेऽपि वाक्ये ब्रह्मत्वमेव युक्तमाश्रयितुमित्यर्थः। पुरस्तात् पूर्वस्यां

१. TM omits द्युभ्वादेरायतनं  २. A. न युक्तः

भाष्यम्

"पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्" इति, "ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण" इति च। तत्र त्वायतनायतनवद्भावश्रवणात्। सर्वं ब्रह्मेति च सामानाधिकरण्यात्। यथानेकात्मको वृक्षः शाखा स्कन्धो मूलं चेति एवं नानारसो विचित्र आत्मेत्याशङ्का संभवति; तां निवर्तयितुं सावधारणमाह—"तमेवैकं जानथ आत्मानम्" इति। एतदुक्तं भवति—न कार्यप्रपञ्चविशिष्टो विचित्र आत्मा विज्ञेयः; किं तर्हि, अविद्याकृतं कार्यप्रपञ्चं विद्यया प्रविलापयन्तस्तमेवैकमायतनभूतमात्मानं जानथ एकरसमिति। यथा 'यस्मिन्नास्ते देवदत्तस्तदानय' इत्युक्ते आसनमेवानयति न देवदत्तम्; तद्वदायतनभूतस्यैवैकरसस्यात्मनो विज्ञेयत्वमुपदिश्यते। विकारानृताभिसंधस्य चापवादः श्रूयते "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति। "सर्वं ब्रह्म" इति तु सामानाधिकरण्यं प्रपञ्चप्रविलापनार्थम्, न

प्रकटार्थविवरणम्

दिशि, पश्चात् प्रतीच्याम्; दक्षिणतः दक्षिणस्याम्; उत्तरेणेत्युत्तरस्यां दिशि। यदिदं दृश्यते तद्ब्रह्मैवेत्यर्थः। एवं तावद्ब्रूपरत्वमुपपाद्य इदानीं न द्वितीयपादवत् सविशेषोपासनपरत्वं किं तु निर्विशेषब्रह्मात्मैकत्वपरत्वमिति विशेषमुपपादयति—तत्रेत्यादिना॥ विद्यया तत्त्वंपदार्थपरिशोधनेन कार्यं सकारणे प्रविलापयन्तः परिदृश्यमानं विशेषजातमविद्यामात्रमिति व्यवस्थापयन्त इत्यर्थः। एकशब्दैवाकाराभ्यामायतनपदलक्ष्यमेकरसं ब्रह्मात्मत्वेनोपदिश्यत इत्युक्तम्। इदानीं तत्र हेत्वन्तरमाह— विकारेति[1]॥ विकारेऽनृतेऽभिसन्धाभिमानो यस्य स विकारानृताभिसन्धः[2] तस्य; निन्दाश्रवणादप्येकरसं ब्रह्मेत्यर्थः। ननु निर्विशेषं चेत्प्रतिपाद्यं[3] कथं तर्हि "सर्वं ब्रह्म" इति सामानाधिकरण्यमित्याशङ्क्याह[4]—सर्वं ब्रह्मेति॥ सर्वमिदं दृश्यमानं ब्रह्मैव; नातोऽतिरिक्तमस्तीति प्रपञ्चस्य सत्त्वप्रतिषेधार्थमिदं वचनम्[5], न ब्रह्मणः प्रपञ्चाभेदप्रतिपादनार्थम्,

१. TM omits विकारेति.
२. TM. सन्धयः
३. A omits ननु......चेत्
४. T, T[1], P and TM omit आशङ्क्य
५. A omits वचनं

भाष्यम्

अनेकरसताप्रतिपादनार्थम्, "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इत्येकरसताश्रवणात् । तस्माद्द्युभ्वाद्यायतनं परं ब्रह्म । यत्तूक्तम्— सेतुश्रुतेः सेतोश्च पारवत्त्वोपपत्तेः ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमिति, अत्रोच्यते—विधारणत्वमात्रमेव सेतुश्रुत्या विवक्ष्यते, न पारवत्त्वादि । न हि मृद्दारुमयो लोके सेतुर्दृष्ट इत्यत्रापि मृद्दारुमय एव सेतुरभ्युपगम्यते । सेतुशब्दार्थोऽपि विधारणत्वमात्रमेव, न पारवत्त्वादि, षिञो बन्धनकर्मणः सेतुशब्दव्युत्पत्तेः । अपर आह—"तमेवैकं जानथ आत्मानम्" इति यदेतत्संकीर्तितमात्मज्ञानम्, यच्चैतत् "अन्या

प्रकटार्थविवरणम्

¹अप्रसिद्धानुवादेन प्रसिद्धविधानप्रसङ्गादिति भावः । इतश्चैकरसमेव प्रतिपाद्यमित्याह—स यथेति ॥ ²यथा सैन्धवखिल्योऽन्तरेव बाह्य एवालवणरस इति न, किन्तु कृत्स्नोऽपि रसघन एव; तथा आत्मापि कृत्स्नः प्रज्ञानमूर्तिरित्यर्थः । यस्मान्निर्विशेषं ब्रह्म प्रतिपाद्यम्, ³प्रधानादिकं तु सविशेषं तस्मादित्युपसंहारः । सेतुश्रुतेः गतिं दर्शयितुमुद्भावयति—यत्तूक्तमिति ॥ अमृतस्येति ॥ भावप्रधानो निर्देशः, यथा द्वित्वैकत्वयोरिति वक्तव्ये "द्व्येकयोः" इत्युवाच पाणिनिः । तथामृतत्वस्यैष द्युभ्वाद्याधारः सेतुरिव विधारकः ⁴एतत्प्रतिष्ठमेवामृतत्वमिति भावः । किं च साङ्ख्येनापि जगदाधारे न मुख्यः सेतुशब्दोऽभ्युपगम्यते, गौणत्वे च पारवत्त्वस्य शब्दार्थबाह्यत्वात् सिनोति बध्नाति धारयतीति व्युत्पत्त्या विधारकत्वस्य शब्दार्थसंस्पर्शित्वात् प्रसिद्धसेतुगतविधारकत्वगुणयोगादेव जगदाधारे सेतुशब्दः प्रयुक्त इत्याह— न हि मृद्दारुमय इत्यादिना ॥ पूर्वं सेतुशब्दो द्युभ्वाद्यायतने प्रयुक्त इत्यङ्गीकृत्य पर्यहार्षीत; इदानीं न तद्विषय इत्याह—अपर आहेत्यादिना ॥ यदत्रावोचत् भास्करः "एष इत्यनन्तर-

१. T, T¹, and P प्रसिद्धानुवादेन.
२. A omits यथा
३. TM. प्रधानादित्युपसंहारः
४. T and TM. सत्ततत्. A. स तत्.

भाष्यम्

वाचो विमुञ्चथ" इति वाग्विमोचनम्, तदत्रामृतत्वसाधनत्वात् "अमृतस्यैष सेतुः" इति सेतुश्रुत्या संकीर्त्यते, न तु द्युभ्वाद्यायतनम् । तत्र यदुक्तम्—सेतुश्रुतेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भाव्यमिति, एतदयुक्तम् ॥

## मुक्तोपसृप्यव्यपदेशात् ॥ १-३-२ ॥

इतश्च परमेव ब्रह्म द्युभ्वाद्यायतनम्; यस्मान्मुक्तोपसृप्यतास्य व्यपदिश्यमाना दृश्यते । मुक्तैरुपसृप्यं मुक्तोपसृप्यम् । देहादिष्वनात्मसु अहमस्मीत्यात्मबुद्धिरविद्या, ततस्तत्पूजनादौ रागः, तत्परिभवादौ च द्वेषः, तदुच्छेददर्शनाद्भयं मोहश्च—इत्येवमयमनन्तभेदोऽनर्थव्रातः संततः सर्वेषां नः प्रत्यक्षः । तद्विपर्ययेणाविद्यारागद्वेषादिदोषमुक्तैरुपसृप्यमुपगम्यमेतदिति द्युभ्वाद्यायतनं प्रकृत्य व्यपदेशो भवति; कथम्?

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥"

प्रकटार्थविवरणम्

वृत्तस्य प्रधानस्य निर्देशकं सर्वनाम नोपसर्जनस्य" इति, तत्प्रद्वेषमात्रम्, आत्मावगमस्यैवानन्तरवृत्तत्वात्; न च नियमेन प्रधानसमर्पकं सर्वनाम, "तस्मिन्सीद" इत्यादौ व्यभिचारात् । तस्मादात्मज्ञानमेव संपादनीयम्, आत्मप्रतिपादकोपनिषद्व्यतिरिक्ता वाचस्त्यक्तव्या इत्युक्ते कुत इत्येतदाकाङ्क्षायामाह—यतोऽमृतत्वस्यैष एवात्मावगमः प्राप्तिहेतुः सेतुरिव लङ्कायाः इति युक्तमेव व्याख्यानम् ॥

मुक्तोपसृप्यव्यपदेशात् ॥

मुक्तैः प्राप्यत्वाच्च द्युभ्वाद्यायतनः परमात्मेत्याह—मुक्तोपसृप्येति ॥ मुक्तोपसृप्यत्वं व्याख्यातुं बन्धशब्दार्थमाह—देहादिष्विति ॥ अविद्याकार्यत्वाद्विद्याहेयत्वाच्चाविद्या मोहः शोकः । हृदयग्रन्थिः अहंकारः । वाग्विमोक्ष-

१. TM and A. चारः.　　　　२. A. आशङ्कायां

भाष्यम्

इत्युक्त्वा ब्रवीति—"तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति। ब्रह्मणश्च मुक्तोपसृप्यत्वं प्रसिद्धं शास्त्रे—

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥"

इत्येवमादौ। प्रधानादीनां तु न क्वचिन्मुक्तोपसृप्यत्वमस्ति प्रसिद्धम्। अपि च "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" इति वाग्विमोकपूर्वकं विज्ञेयत्वमिह द्युभ्वाद्यायतनस्योच्यते। तच्च श्रुत्यन्तरे ब्रह्मणो दृष्टम्—

"तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।
नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत्॥"

इति। तस्माद[1]पि द्युभ्वाद्यायतनं परं ब्रह्म॥

## नानुमानमतच्छब्दात्॥ १-३-३॥

यथा ब्रह्मणः प्रतिपादको वैशेषिको हेतुरुक्तो नैवमर्थान्तरस्य वैशेषिको हेतुः प्रतिपादकोऽस्तीत्याह। नानुमानिकं सांख्यस्मृतिपरिकल्पितं प्रधानमिह द्युभ्वाद्यायतनत्वेन प्रतिपत्तव्यम्। कस्मात्? अतच्छब्दात्। तस्याचेतनस्य प्रधानस्य प्रतिपादकः शब्दस्तच्छब्दः, न

प्रकटार्थविवरणम्

पूर्वकं विज्ञेयत्वमपि ब्रह्मलिङ्गमस्तीत्याह—अपि च तमेवैकमिति॥ यो विरजस्त्वादिलक्षणः आत्मा तमेव विज्ञाय धीरो धीमान् भवति, नान्यथा। अतः प्रज्ञां प्रज्ञप्तिसाधनमात्मसाक्षात्कारोपायमेवानुतिष्ठेन्मुमुक्षुः, नात्मासंस्पर्शिबहुशब्दानुचिन्तनं कुर्यात्, यतो वाचः क्लेशापादनमात्रं तद्बहुशब्दचिन्तनमित्यर्थः॥

नानुमानमतच्छब्दात्॥

सिद्धान्तमुपपाद्य पूर्वपक्षापाकरणाय प्रवर्तत इत्याह—यथेत्यादिना॥ विशेषे भवो वैशेषिको असाधारण इत्यर्थः॥

१. T and P. तस्मात्.

भाष्यम्

तच्छब्दः अतच्छब्दः । न ह्यत्राचेतनस्य प्रधानस्य प्रतिपादकः कश्चिच्छब्दोऽस्ति, येनाचेतनं प्रधानं कारणत्वेनायतनत्वेन वावगम्येत । तद्विपरीतस्य चेतनस्य प्रतिपादकः शब्दोऽत्रास्ति—"यः सर्वज्ञः सर्ववित्" इत्यादिः । अत एव न वायुरपीह द्युभ्वाद्यायतनत्वेनाश्रीयते ॥

## प्राणभृच्च ॥ १-३-४ ॥

यद्यपि प्राणभृतो विज्ञानात्मन आत्मत्वं चेतनत्वं च संभवति, तथाप्युपाधिपरिच्छिन्नज्ञानस्य सर्वज्ञत्वाद्यसंभवे सत्यस्मादेवातच्छब्दात् प्राणभृदपि न द्युभ्वाद्यायतनत्वेनाश्रयितव्यः । न चोपाधिपरिच्छिन्नस्याविभोः प्राणभृतो द्युभ्वाद्यायतनत्वमपि सम्यक्संभवति । पृथग्योगकरणमुत्तरार्थम् ॥

कुतश्च न प्राणभृत् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

प्रकटार्थविवरणम्

प्राणभृच्च ॥

चकारेण पूर्वसूत्रोक्तमतच्छब्दादिति हेतुमनुकृष्य जीवापाकरणमाह—प्राणभृच्चेति ॥ किं च जीवस्यादृष्टद्वारेण द्युभ्वादिनिमित्तत्वेऽपि न साक्षात् आयतनत्वं संभवतीत्याह — न चोपाधिपरिच्छिन्नस्येति ॥ ननु यदि पूर्वसूत्रोक्तेनैव हेतुना जीवापाकरणं तर्हि 'न जीवानुमाने अतच्छब्दात्' इत्येकमेव सूत्रमस्तु, किं पृथक्सूत्रकरणेनेत्याशङ्क्याह—पृथग्योगेति ॥ युनक्त्यर्थं संबध्नातीति योगः सूत्रम्, तस्य पृथक्करणमुत्तरसूत्रेषु केवलजीवनिराकरणं प्रवर्तिष्यत इति ज्ञापनार्थमित्यर्थः ॥

१. T, T¹ and P. वित्वमेक-

भाष्यम्

## भेदव्यपदेशात् ॥ १-३-५ ॥

भेदव्यपदेशश्चेह भवति—"तमेवैकं जानथ आत्मानम्" इति ज्ञेयज्ञातृभावेन । तत्र प्राणभृत्तावन्मुमुक्षुत्वाज्ज्ञाता; परिशेषादात्मशब्दवाच्यं ब्रह्म ज्ञेयं द्युभ्वाद्यायतनमिति गम्यते, न प्राणभृत् ॥

कुतश्च न प्राणभृत् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः?

## प्रकरणात् ॥ १-३-६ ॥

प्रकरणं चेदं परमात्मनः । "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्येकविज्ञानेन सर्वविज्ञानापेक्षणात् । परमात्मनि हि सर्वात्मके विज्ञाते सर्वमिदं विज्ञातं स्यान्न केवले प्राणभृति ॥

कुतश्च न प्राणभृत् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः?

## स्थित्यदनाभ्यां च ॥ १-३-७ ॥

द्युभ्वाद्यायतनं च प्रकृत्य "द्वा सुपर्णा सयुजा सखाया" इत्यत्र स्थित्यदने निर्दिश्येते; "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति कर्मफलाशनम्, "अनश्नन्नन्योऽभिचाकशीति" इत्यौदासीन्येनावस्थानं च । ताभ्यां च स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञौ तत्र गृह्येते । यदि चेश्वरो द्युभ्वाद्यायतनत्वेन विवक्षितः, ततस्तस्य प्रकृतस्येश्वरस्य क्षेत्रज्ञात्पृथ-

प्रकटार्थविवरणम्

भेदव्यपदेशात् ॥ प्रकरणात् ॥

तथैव संबन्धमाह—कुतश्चेति ॥ भेदस्योभयधर्मत्वादेकस्य भेदप्रतिपादनेऽर्थादितरस्यापि भेदः प्रतिपादितो भवति ॥

स्थित्यदनाभ्यां च ॥

तत्र जीवस्येश्वराद्भेदप्रतिपादनं न स्यात्, द्युभ्वायतनत्वेन तस्याप्रकान्त-

भाष्यम्

ग्वचनमवकल्पते । अन्यथा ह्यप्रकृतवचनमाकस्मिकमसंबद्धं स्यात् । ननु तवापि क्षेत्रज्ञस्येश्वरात्पृथग्वचनमाकस्मिकमेव प्रसज्येत ; न, तस्याविवक्षितत्वात् । क्षेत्रज्ञो हि कर्तृत्वेन भोक्तृत्वेन च प्रतिशरीरं बुद्ध्याद्युपाधिसंबद्धः लोकत एव प्रसिद्धः, नासौ श्रुत्या तात्पर्येण विवक्ष्यते ; ईश्वरस्तु लोकतोऽप्रसिद्धत्वाच्छ्रुत्या तात्पर्येण विवक्ष्यत इति न तस्याकस्मिकं वचनं युक्तम् । "गुहां प्रविष्टावात्मानौ हि" इत्यत्राप्येतद्दर्शितम्—"द्वा सुपर्णा" इत्यस्यामृचि ईश्वरक्षेत्रज्ञावुच्येते इति । यदापि पैङ्ग्युपनिषत्कृतेन व्याख्यानेनास्यामृचि सत्त्वक्षेत्रज्ञावुच्येते तदापि न विरोधः कश्चित् । कथम् ? प्राणभृद्धीह घटादिच्छिद्रवत्सत्त्वाद्युपाध्यभिमानित्वेन प्रतिशरीरं गृह्यमाणो द्युभ्वाद्यायतनं न भवतीति प्रतिषिध्यते । यस्तु सर्वशरीरेषूपाधिभिर्विनोपलक्ष्यते परमात्मैव स भवति ; यथा घटादिच्छिद्राणि घटादिभिरुपाधिभिर्विनोपलक्ष्यमाणानि महाकाश एव भवन्ति, तद्वत् प्राणभृतः परस्मादन्यत्वानुपपत्तेः प्रतिषेधो नोपपद्यते । तस्मात्सत्त्वाद्युपाध्यभिमानिन एव द्युभ्वाद्यायतनत्वप्रतिषेधः । तस्मात् परमेव ब्रह्म द्युभ्वाद्यायतनम् । तदेतत् "अदृश्यत्वादिगुणको धर्मोक्तेः" इत्यनेनैव सिद्धम् । तस्यैव हि भूतयोनिवाक्यस्य मध्य इदं पठितम् "यस्मिन्द्यौः पृथिवी चान्तरिक्षम्" इति । प्रपञ्चार्थं तु पुनरुपन्यस्तम् ॥

प्रकटार्थविवरणम्

त्वात् इत्याह—ननु तवापीति ॥ नेश्वरादन्यत्वं जीवस्य विवक्षितम्, त्वंपदार्थानुवादेन तत्पदार्थनिरूपकत्वाद्वाक्यस्य इति परिहरति—न तस्याविवक्षितत्वादिति ॥ ननु स्थित्यदनलिङ्गेन जीवेश्वरौ ग्रहीतुं न शक्येते, पैङ्ग्युपनिषद्यन्यथा व्याख्यातत्वादित्यशङ्क्याह — यदापीति ॥ उपाध्यवच्छिन्नो जीवो द्युभ्वायतनो न भवतीति सूत्रकृतोऽभिप्रायः । पैङ्ग्युपनिषदि तु बिम्बभूतब्रह्मैक्यदर्शी जीवोऽभिप्रेतः, नासौ द्युभ्वायतनं निषिध्यत इति भावः । पौनरुक्त्यं शङ्कते—तदेतदिति ॥ समाधत्ते—प्रपञ्चार्थं त्विति ॥ भूतयोनेरेव निर्विशेषत्वप्रपञ्चनेन जीवात्मत्वप्रतिपादनायेदमधिकरणमित्यर्थः ॥

भाष्यम्

## भूमा संप्रसादादध्युपदेशात् ॥ १-३-८ ॥

इदमामनन्ति—"भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्" इत्यादि । तत्र संशयः—किं प्राणो भूमा स्यात्, आहोस्वित् परमात्मेति । कुतः संशयः? भूमेति तावद्बहुत्वमभिधीयते; "बहोर्लोपो भू च बहोः" इति भूमशब्दस्य भावप्रत्ययान्ततास्मरणात् । किमात्मकं पुनस्तद्बहुत्वमिति विशेषाकाङ्क्षायाम् "प्राणो वा आशाया भूयान्" इति संनिधानात् प्राणो भूमेति प्रतिभाति । तथा "श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति

प्रकटार्थविवरणम्

### भूमा संप्रसादादध्युपदेशात् ॥

छान्दोग्यवाक्यं पठति—इदमामनन्तीत्यादिना ॥ नाल्पे सुखमस्ति, भूमैव सुखम्; तस्मान्निरतिशयसुखैषिणा "भूमा त्वेव विजिज्ञासितव्यः" इति सनत्कुमारेणोक्ते नारदोऽब्रवीत् भगवन् भूमानमहं विजिज्ञासे[1] विज्ञातुमिच्छामि इत्युक्ते भूम्नो[2] लक्षणमुवाचाचार्यः सनत्कुमारः "यत्र नान्यदिति" । संशयबीजं वक्तुं भूमशब्दार्थं प्रथममाह—भूमेति तावदित्यादिना ॥ "बहोर्भावः" इति विग्रहे "पृथ्वादिभ्य इमनिच्" इतीमनिच्प्रत्यये च कृते पश्चात् "बहोर्लोपो भू च बहोः" इति सूत्रेण बहोरुत्तरेषामिमनिजादीनामिकारस्य लोपो भवति, बहोः स्थाने भू चादेशः । एवं भूमन्प्रातिपदिकस्य भावेऽर्थे विहिते इमनिच्प्रत्ययान्ततावगमात्[1] बहुत्ववाचकमित्यर्थः । अवान्तरमहाप्रकरणाभ्यां संशयं दर्शयितुमुपक्रमते—किमात्मकमित्यादिना ॥ पूर्वत्र साधारणस्य द्युभ्वाद्यायतनत्वस्यात्मश्रुत्या ब्रह्मण्येव नियमनमुक्तम् । इह श्रुत्यभावे प्रकरणानुगृहीतेन भूयःप्रश्नप्रतिवचनाभावलिङ्गेन साधारणस्य बहुत्वस्य प्राणे व्यवस्थापनमिति पूर्वपक्षमाह—प्राणो भूमेति ॥ भावभाविनोरभेदेन निर्देशः ॥

१ TM omits विजिज्ञासे.

२. A. भूम्नः

१. A. प्रथमभावावगमात्.

## भाष्यम्

शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्शोकस्य पारं तारयतु" इति प्रकरणोत्थानात्परमात्मा भूमेत्यपि प्रतिभाति । तत्र कस्योपादानं न्याय्यम्, कस्य वा हानमिति भवति संशयः । किं तावत्प्राप्तम्? प्राणो भूमेति । कस्मात्? भूयःप्रश्नप्रतिवचनपरंपरादर्शनात् । यथा हि "अस्ति भगवो नाम्नो भूयः" इति, "वाग्वाव नाम्नो भूयसी" इति; तथा "अस्ति भगवो वाचो भूयः" इति, "मनो वाव वाचो भूयः" इति च—नामादिभ्यो ह्याप्राणाद्भूयःप्रश्नप्रतिवचनप्रवाहः प्रवृत्तः । नैवं प्राणात्परं भूयःप्रश्नप्रतिवचनं दृश्यते 'अस्ति भगवः प्राणाद्भूयः' इति, 'अदो वाव प्राणाद्भूयः' इति । प्राणमेव तु नामादिभ्य आशान्तेभ्यो भूयांसम् "प्राणो वा आशाया भूयान्" इत्यादिना सप्रपञ्चमुक्त्वा, प्राणदर्शिनश्चातिवादित्वम् "अतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत" इत्यभ्यनुज्ञाय "एष तु वा अतिवदति यः सत्येनातिवदति" इति प्राणव्रतमतिवादित्वमनुकृष्यापरित्यज्यैव प्राणं सत्यादिपरम्परया भूमानमवतारयन्प्राणमेव भूमानं मन्यत इति गम्यते । कथं पुनः प्राणे भूमनि व्याख्यायमाने "यत्र नान्यत्पश्यति" इत्येतद्भूम्नो लक्षणपरं वचनं व्याख्यायेतेति? उच्यते—सुषुप्त्यवस्थायां प्राणग्रस्तेषु करणेषु दर्शनादिव्यवहारनिवृत्तिदर्शनात् संभवति प्राणस्यापि "यत्र नान्यत्पश्यति" इत्येतल्लक्षणम् । तथा च श्रुतिः "न शृणोति न पश्यति" इत्यादिना सर्वकरणव्यापारप्रत्यस्तमयरूपां सुषुप्त्यवस्थामुक्त्वा "प्राणाग्नय एवैतस्मिन्पुरे जाग्रति" इति तस्यामेवावस्थायां

## प्रकटार्थविवरणम्

ननु "एष तु वा अतिवदति" इत्यादि भिन्नमेव प्रकरणमित्याशङ्क्याह—प्राणमेव त्विति ॥ प्रकृते प्राणविज्ञाने सत्यवदनसंसारयाथात्म्यविज्ञानश्रद्धादिगुणविधानाच्च विच्छिन्नं प्राणप्रकरणमित्यर्थः । भूम्नो लक्षणवचनम्, सुखत्वम्, अमृतत्वम्, आत्मविविदिषया प्रकरणस्योत्थानमित्येतत् सर्वं प्राणपक्षेऽपि योजयितुं शक्यमित्येतत्प्रश्नपूर्वकमुपपादयति—कथं पुनरित्यादिना ॥ ननु तथापि

१. A omits सर्वं

भाष्यम्

पञ्चवृत्तेः प्राणस्य जागरणं ब्रुवती प्राणप्रधानां सुषुप्त्यवस्थां दर्शयति। यच्चैतद्भूम्नः सुखत्वं श्रुतम् “यो वै भूमा तत्सुखम्” इति, तदप्यविरुद्धम्, “अत्रैष देवः स्वप्नान्न पश्यत्यथ यदेतस्मिञ्शरीरे सुखं भवति” इति सुषुप्त्यवस्थायामेव सुखश्रवणात्। यच्च “यो वै भूमा तदमृतम्” इति तदपि प्राणस्याविरुद्धम्, “प्राणो वा अमृतम्” इति श्रुतेः। कथं पुनः प्राणं भूमानं मन्यमानस्य “तरति शोकमात्मवित्” इत्यात्मविविदिषया प्रकरणस्योत्थानमुपपद्यते। प्राण एवेहात्मा विवक्षित इति ब्रूमः। तथा हि—“प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः” इति प्राणमेव सर्वात्मानं करोति, “यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पितम्” इति च सर्वात्मत्वारनाभिनिदर्शनाभ्यां च संभवति वैपुल्यात्मिका भूमरूपता प्राणस्य। तस्मात्प्राणो भूमेत्येवं प्राप्तम्॥

तत इदमुच्यते—परमात्मैवेह भूमा भवितुमर्हति न प्राणः। कस्मात्? संप्रसादादध्युपदेशात्। संप्रसाद इति सुषुप्तं स्थानमुच्यते; सम्यक्प्रसीदत्यस्मिन्निति निर्वचनात्। बृहदारण्यके च स्वप्नजागरितस्थानाभ्यां सह पाठात्। तस्यां च संप्रसादावस्थायां प्राणो जागर्तीति प्राणोऽत्र संप्रसादोऽभिप्रेयते। प्राणादूर्ध्वं भूम्न उपदिश्यमानत्वादित्यर्थः। प्राण एव चेद्भूमा स्यात्स एव तस्मादूर्ध्वमुपदिश्येतेत्यश्लिष्टमेवैतत्स्यात्। न हि

प्रकटार्थविवरणम्

परिच्छिन्ने प्राणे कथं निरतिशयमहत्त्वरूपा[1] भूमरूपता घटत इत्याशङ्क्याह—सर्वात्मत्वारनाभिनिदर्शनाभ्यां चेति॥

संप्रसादशब्देन प्राणं लक्षयितुं प्रथमं मुख्यमर्थमाह—संप्रसाद इतीति॥ विक्षेपाभावात्सुषुप्ते सम्यग्व्यज्यत इति। “स वा एष एतस्मिन् संप्रसादे” इत्यादिः पाठः। अस्मिन् प्रकरणे यस्मादूर्ध्वं यो निर्दिष्टः स ततोऽतिरिक्तो दृष्टः[2], प्राणाच्चोपरिष्टात् निर्दिष्टो भूमेति सोऽपि ततोऽतिरिक्त एवेति भावः। पूर्वपक्ष-

१. TM. रूप.      २. A. इष्टः

भाष्यम्

नामैव "नाम्नो भूयः" इति नाम्न ऊर्ध्वमुपदिष्टम् । किं तर्हि, नाम्नोऽन्यदर्थान्तरमुपदिष्टं वागाख्यम्—"वाग्वाव नाम्नो भूयसी" इति। तथा वागादिभ्योऽप्याप्राणादर्थान्तरमेव तत्र तत्रोर्ध्वमुपदिष्टम् । तद्वत्प्राणादूर्ध्वमुपदिश्यमानो भूमा प्राणादर्थान्तरभूतो भवितुमर्हति । नन्विह नास्ति प्रश्नः 'अस्ति भगवः प्राणाद्भूयः' इति; नापि प्रतिवचनमस्ति 'प्राणाद्वाव भूयोऽस्ति' इति; कथं प्राणादधि भूमोपदिश्यत इत्युच्यते? प्राणविषयमेव चातिवादित्वमुत्तरत्रानुकृष्यमाणं पश्यामः—"एष तु वा अतिवदति यः सत्येनातिवदति" इति । तस्मान्नास्ति प्राणादध्युपदेश इति । अत्रोच्यते—न तावत्प्राणविषयस्यैवातिवादित्वस्यैतदनुकर्षणमिति शक्यं वक्तुम्, विशेषवादात् "यः सत्येनातिवदति" इति । ननु विशेषवादोऽप्ययं प्राणविषय एव भविष्यति; कथम्? यथैषोऽग्निहोत्री यः सत्यं वदतीत्युक्ते न सत्यवदनेनाग्निहोत्रित्वम्; केन तर्हि? अग्निहोत्रेणैव तत् । सत्यवदनं त्वग्निहोत्रिणो विशेष उच्यते; तथा "एष तु वा अतिवदति यः सत्येनातिवदति" इत्युक्ते न सत्यवदनेनातिवादित्वम्; केन तर्हि? प्रकृतेन प्राणविज्ञानेनैव; सत्यवदनं तु प्राणविदो विशेषो विवक्ष्यत इति । नेति ब्रूमः; श्रुत्यर्थपरित्यागप्रसङ्गात् । श्रुत्या ह्यत्र सत्यवदनेनातिवादित्वं प्रतीयते—"यः सत्येनातिवदति सोऽतिवदति" इति । नात्र प्राणविज्ञानस्य संकीर्तनमस्ति । प्रकरणात्तु प्राणविज्ञानं संबध्येत; तत्र प्रकरणानुरोधेन श्रुतिः परित्यक्ता स्यात्; प्रकृतव्यावृत्त्यर्थश्च तुशब्दो न संगच्छते "एष

प्रकटार्थविवरणम्

बीजमुद्भाव्य पराकरोति—नन्विहेत्यादिना ॥ एषशब्दस्य यच्छब्दपरतन्त्रत्वान्न प्रकृतप्राणवित्परामर्शकत्वम्, ततः प्रकरणविच्छेद इत्युक्तम् । तत्र शङ्कते—ननु विशेषवादोऽपीति ॥ सत्येनेति तृतीयाश्रुत्या करणत्वाभिधायिन्या सत्यज्ञानेनातिवादित्वान्तरमेव विधीयते । तस्य दुर्बलप्रकरणानुरोधेन परित्याग आपद्यत इत्याह—नेति ब्रूम इत्यादिना ॥ इतश्च न प्राणप्रकरणानु-

भाष्यम्

तु वा अतिवदति" इति । "सत्यं त्वेव विजिज्ञासितव्यम्" इति च प्रयत्नान्तरकरणमर्थान्तरविवक्षां सूचयति । तस्माद्यथैकवेदप्रशंसायां प्रकृतायाम् 'एष तु महाब्राह्मणो यश्चतुरो वेदानधीते' इत्येकवेदेभ्योऽर्थान्तरभूतश्चतुर्वेदः प्रशस्यते तादृगेतद्द्रष्टव्यम् । न च प्रश्नप्रतिवचनरूपयैवार्थान्तरविवक्षया भवितव्यमिति नियमोऽस्ति; प्रकृतसंबन्धासंभवकारितत्वादर्थान्तरविवक्षायाः । तत्र प्राणान्तमनुशासनं श्रुत्वा तूष्णींभूतं नारदं स्वयमेव सनत्कुमारो व्युत्पादयति—यत्प्राणविज्ञानेन विकारानृतविषयेणातिवादित्वमनतिवादित्वमेव तत् "एष तु वा अतिवदति यः सत्येनातिवदति" इति । तत्र सत्यमिति परं ब्रह्मोच्यते । परमार्थरूपत्वात् । "सत्यं ज्ञानमनन्तं ब्रह्म" इति च श्रुत्यन्तरात् । तथा व्युत्पादिताय नारदाय "सोऽहं भगवः सत्येनातिवदानि" इत्येवं प्रवृत्ताय विज्ञानादिसाधनपरम्परया भूमानमुपदिशति । तत्र यत्प्राणादधि सत्यं वक्तव्यं प्रतिज्ञातं तदेवेह भूमेत्युच्यत इति गम्यते, तस्मादस्ति प्राणादधि भूम्न उपदेश इत्यतः प्राणादन्यः परमात्मा भूमा भवितुमर्हति । एवं चात्मविविदिषया प्रकरणस्योत्थानमुपपन्नं भविष्यति । प्राण एवेहात्मा विवक्षित इत्येतदपि नोपपद्यते । न हि प्राणस्य मुख्यया वृत्त्यात्मत्वमस्ति । न चान्यत्र परमात्मज्ञानाच्छोकविनिवृत्ति-

प्रकटार्थविवरणम्

वृत्तिरित्याह—सत्यं त्वेवेति ॥ यच्चोक्तं प्रश्नप्रतिवचने न स्त इति तत्र आह—न च प्रश्नेति ॥ ननु "प्राणा वै सत्यम्" इति श्रुत्यन्तरात् सत्यविज्ञानेनातिवादित्वं प्राणपक्षेऽपि न विरुध्यत इत्याशङ्क्याह—तत्र सत्यमितीति ॥ प्राणादीनां व्यावहारिकमेव सत्यत्वम्, मुख्यं तु ब्रह्मण एव । अस्तु, तथापि भूम्नि किमायातमित्याशङ्क्याह—तथा व्युत्पादितायेति ॥ लाभान्तरमाह—एवं चात्मेति ॥ गौण्यापि वृत्त्यात्मशब्देन प्राणो न वक्तव्य इत्याह—न चान्यत्रेति॥

१. TM. सत्य.पे.    २. A. योजयितुं शक्यमित्याह-

भाष्यम्

रस्ति, "नान्यः पन्था विद्यतेऽयनाय" इति श्रुत्यन्तरात् । "तं मा भगवाञ्शोकस्य पारं तारयतु" इति चोपक्रम्योपसंहरति—"तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः" इति । तम इति शोकादिकारणमविद्योच्यते । प्राणान्ते चानुशासने न प्राणस्यान्यायत्ततोच्येत । "आत्मतः प्राणः" इति च ब्राह्मणम् । प्रकरणान्ते परमात्मविवक्षा भविष्यति, भूमा तु प्राण एवेति चेत् न ; "स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि" इत्यादिना भूम्न एव आ प्रकरणसमाप्तेरनुकर्षणात् । वैपुल्यात्मिका च भूमरूपता सर्वकारणत्वात्परमात्मनः सुतरामुपपद्यते ॥

## धर्मोपपत्तेश्च ॥ १-३-९ ॥

अपि च ये भूम्नि श्रूयन्ते धर्मास्ते परमात्मन्युपपद्यन्ते । "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति दर्शनादि-

प्रकटार्थविवरणम्

मा भूत् प्राणविज्ञानाच्छोकनिवृत्तिः, को दोषः, इत्याशङ्क्याह—तं मा भगवानिति ॥ उपक्रमोपसंहारपर्यालोचनया शोकतरणं ज्ञानमिह विवक्षितम् । न च विकारत्वादेव अनृतस्य प्राणस्य ज्ञानं तत्साधनमिति भावः । ननु नास्त्युपक्रमोपसंहारयोरैकरूप्यम्, तमस उपसंहारे श्रवणादित्याशङ्क्याह-तम इतीति ॥ कारणनिवृत्त्या कार्यस्यात्यन्तिकी निवृत्तिरभिप्रेतेति भावः । इतश्च न प्राणो भूमेत्याह—प्राणान्ते चेति ॥ "आत्मतः प्राणः" इत्यनेन अविरोधं[1] शङ्कते— प्रकरणान्त इति ॥ भूम्न एव तच्छब्देनानुकर्षणात्[2] वाक्यशेषोऽपि भूमविषय एवेत्याह—न स भगव इति ॥ भूमरूपतापि प्राणे नाञ्जस्येनोपपद्यत इत्याह— वैपुल्यात्मिका चेति ॥

धर्मोपपत्तेश्च ॥

परमात्मपरिग्रहे लिङ्गान्तरमाह—धर्मोपपत्तेश्चेति ॥ यच्च पूर्ववादिना

१. A. विरोधं　　　　२. A. कर्मणानुकर्षणात्

भाष्यम्

व्यवहाराभावं भूमन्यवगमयति। परमात्मनि चायं दर्शनादिव्यवहाराभावोऽवगतः। "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिश्रुत्यन्तरात्। योऽप्यसौ सुषुप्त्यवस्थायां दर्शनादिव्यवहाराभाव उक्तः सोऽप्यात्मन एवासङ्गत्वविवक्षयोक्तः न प्राणस्वभावविवक्षया, परमात्मप्रकरणात्। यदपि तस्यामवस्थायां सुखमुक्तम्, तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तम्; यत आह—"एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इति। इहापि "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखम्" इति सामयसुखनिराकरणेन ब्रह्मैव सुखं भूमानं दर्शयति। "यो वै भूमा तदमृतम्" इत्यमृतत्वमपीह श्रूयमाणं परमकारणं गमयति; विकाराणाममृतत्वस्यापेक्षिकत्वात्, "अतोऽन्यदार्तम्" इति च श्रुत्यन्तरात्। तथा च सत्यत्वं स्वमहिमप्रतिष्ठितत्वं सर्वगतत्वं सर्वात्मत्वमिति चैते धर्माः श्रूयमाणाः परमात्मन्येवोपपद्यन्ते, नान्यत्र। तस्माद्भूमा परमात्मेति सिद्धम्॥

प्रकटार्थविवरणम्

कथंचिल्लक्षणादिकं योजितम, प्राणे तत्सर्वं विघटयति—योऽप्यसावित्यादिना॥ स्वप्नजागरितयोः सति मनसि दर्शनादिव्यवहारदर्शनात्, सुषुप्ते तदभावेऽदर्शनात्, अन्वयव्यतिरेकाभ्यां मनउपाधिकोऽयं दर्शनादिव्यवहारो नात्मस्वभावकृतः, आत्मा तु स्वतोऽसङ्ग इत्यभिप्रायेण; "न शृणोति" इत्यादिना सुषुप्ते सकलव्यवहाराभाव उक्तः, न तु प्राणप्रतिपिपादयिषया, परमात्मप्रकरणविरोधादित्यर्थः। इतश्च न प्राणस्यामृतत्वमित्याह—अतोऽन्यदार्तमिति॥ विनश्वरमित्यर्थः। "स एवाधस्तात् स उपरिष्टात्" इत्यादिना सर्वगतत्वमुक्तम्। "स एवेदं सर्वम्" इति सर्वात्मकत्वमुक्तम्॥

१. T, T[1] and P. आत्मा अतः.

TM. आत्मतः स्वतो

भाष्यम्

## अक्षरमम्बरान्तधृतेः ॥ १-३-१० ॥

"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु" इत्यादि श्रूयते। तत्र संशयः—किमक्षरशब्देन वर्ण उच्यते, किं वा परमेश्वर इति। तत्र 'अक्षरसमाम्नायः' इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात् प्रसिद्ध्यतिक्रमस्य चायुक्तत्वात् "ओंकार एवेदं सर्वम्" इत्यादौ च श्रुत्यन्तरे वर्णस्याप्युपास्यत्वेन सर्वात्मकत्वावधारणात्, वर्ण एवाक्षरशब्द इत्येवं प्राप्ते, उच्यते—

प्रकटार्थविवरणम्

अक्षरमम्बरान्तधृतेः ॥

बृहदारण्यकगतं वाक्यं पठति—कस्मिन्निति ॥ यदूर्ध्वं दिवो यदधस्तात् पृथिव्या ये उभे द्यावाभूमी यदन्तरिक्षं, यद्भूतं भविष्यच्च तत्सर्वं कस्मिन्नोतं च प्रोतं चेति प्रथमप्रश्ने याज्ञवल्क्येन आकाशे तदोतं च प्रोतं [1]चेत्यपाकृते पुनरपि गार्गी पप्रच्छ आकाशोऽ[2]व्याकृताख्यः कस्मिन्नोतप्रोतभावेन वर्तत इति। ततो याज्ञवल्क्य उवाच भो गार्गि यत्त्वया पृष्टमाकाशस्याधिकरणं तदेतदक्षरमस्थूलादिविशेषणं ब्रह्मविदो वदन्तीत्यर्थः। उभयत्राक्षरशब्दस्य प्रयोगदर्शनात् संशयमाह—तत्रेति ॥ पूर्वत्र सत्यशब्दस्य ब्रह्मणि मुख्यत्वेन भूमा परमात्मेत्यभ्य[3]धायि। तर्ह्यक्षरशब्दस्यापि वर्णे मुख्यत्वादोङ्कार इहोपदिश्यत इत्याह— तत्राक्षरसमाम्नाय इति ॥ ब्रह्मण्यपि यौगिकोऽक्षरशब्दो घटत इत्याशङ्क्याह—प्रसिध्यतिक्रमस्येति ॥ योगाद्रूढिः बलीयसीति भावः। कथं तर्हि वर्णमात्रस्य सकलविधारकत्वादीति तत्राह—ओंकार एवेदमिति ॥

१. T. चेत्येवेकृते

२. T[1]. अप्राकृता-

३. T, P, TM and A. अभिधायि

### भाष्यम्

पर एवात्माक्षरशब्दवाच्यः। कस्मात्? अम्बरान्तधृतेः—पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात्। तत्र हि पृथिव्यादेः समस्तविकारजातस्य कालत्रयविभक्तस्य "आकाश एव तदोतं च प्रोतं च" इत्याकाशे प्रतिष्ठितत्वमुक्त्वा "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इत्यनेन प्रश्नेनेदमक्षरमवतारितम्। तथा चोपसंहृतम्—"एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति। न चेयमम्बरान्तधृतिर्ब्रह्मणोऽन्यत्र संभवति। यदपि "ॐकार एवेदं सर्वम्" इति तदपि ब्रह्मप्रतिपत्तिसाधनत्वात्स्तुत्यर्थं द्रष्टव्यम्। तस्मान्न क्षरत्यश्नुते चेति नित्यत्वव्यापित्वाभ्यामक्षरं परमेव ब्रह्म॥

स्यादेतत्—कार्यस्य चेत्कारणाधीनत्वमम्बरान्तधृतिरभ्युपगम्यते, प्रधानकारणवादिनोऽपीयमुपपद्यते। कथमम्बरान्तधृतेर्ब्रह्मत्वप्रतिपत्तिरिति? अत उत्तरं पठति—

## सा च प्रशासनात्॥ १-३-११॥

सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म। कस्मात्? प्रशासनात्। प्रशासनं हीह श्रूयते—"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्या-

### प्रकटार्थविवरणम्

यद्यपि योगाद्रूढिर्बलीयसी तथापि इह प्रश्नप्रतिवचनाभ्यां प्रतिपादिताकाशान्तसमस्तजगदाधारत्वलिङ्गेनानुगृहीता योगवृत्तिरेवं ब्रह्मणि समाश्रयणीयेति सिद्धान्तयति—पर एवात्मेत्यादिना॥

सा च प्रशासनात्॥

उत्तरसूत्रनिरस्याशङ्कामाह— स्यादेतदिति॥ चेतनस्येव राजादेः प्रशासनकर्तृत्वदर्शनादचेतनस्य मृदादेः कारणत्वेऽप्यदर्शनान्नाचेतनमक्षरमित्याह—सा चेति॥

१. A omits एव.

भाष्यम्

चन्द्रमसौ विधृतौ तिष्ठतः" इत्यादि । प्रशासनं च पारमेश्वरं कर्म । नाचेतनस्य प्रधानस्य प्रशासनं भवति । न ह्यचेतनानां घटादिकारणानां मृदादीनां घटादिविषयं प्रशासनमस्ति ॥

## अन्यभावव्यावृत्तेश्च ॥ १-३-१२ ॥

अन्यभावव्यावृत्तेश्च कारणाद्ब्रह्मैवाक्षरशब्दवाच्यम्, तस्यैवाम्बरान्तधृतिः कर्म, नान्यस्य कस्यचित् । किमिदमन्यभावव्यावृत्तेरिति ? अन्यस्य भावोऽन्यभावः तस्माद्व्यावृत्तिः अन्यभावव्यावृत्तिरिति तस्याः । एतदुक्तं भवति—यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाशङ्क्यते तद्भावादिदमम्बरान्तविधारणमक्षरं व्यावर्तयति श्रुतिः—"तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ" इति । तत्रादृष्टत्वादिव्यपदेशः प्रधानस्यापि संभवति । द्रष्टृत्वादिव्यपदेशस्तु न तस्य संभवत्यचेतनत्वात् । तथा "नान्यदतोऽस्ति द्रष्टृ, नान्यदतोऽस्ति श्रोतृ, नान्यदतोऽस्ति मन्तृ, नान्यदतोऽस्ति विज्ञातृ" इत्यात्मभेदप्रतिषेधात् न शारीरस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वम्; "अचक्षुष्कमश्रोत्रमवागमनः" इति चोपाधिमत्ताप्रतिषेधात् । न हि निरुपाधिकः शारीरो नाम भवति । तस्मात्परमेव ब्रह्माक्षरमिति निश्चयः ॥

## ईक्षतिकर्मव्यपदेशात्सः ॥ १-३-१३ ॥

"एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेने-

प्रकटार्थविवरणम्

अन्यभावव्यावृत्तेश्च ॥

जीवप्रधानोङ्कारनिराकरणे साधारणं कारणमाह— अन्यभावव्यावृत्तेश्चेति ॥

ईक्षतिकर्मव्यपदेशात्सः ॥

आथर्वणवाक्यमाह— एतद्वा इति ॥ सत्यकामेन पृष्टः पिप्पलादः प्रोवाच सत्यकाम परं चापरं च ब्रह्म तद्य एष ओंकारः तस्माद्विद्वानेतेनोङ्कार-

१. A omits कारणं

भाष्यम्

वायतनेनैकतरमन्वेति" इति प्रकृत्य श्रूयते—"यः पुनरेतं त्रिमात्रेणो-मित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" इति । किमस्मिन्वाक्ये परं ब्रह्माभिध्यातव्यमुपदिश्यते, आहोस्विदपरमिति । एतेनैवायतनेन परम-परं चैकतरमन्वेतीति प्रकृतत्वात्संशयः । तत्रापरमिदं ब्रह्मेति प्राप्तम् । कस्मात्? "स तेजसि सूर्ये संपन्नः" "स सामभिरुन्नीयते ब्रह्म-लोकम्" इति च तद्विदो देशपरिच्छिन्नस्य फलस्योच्यमानत्वात् । न हि परब्रह्मविद्देशपरिच्छिन्नं फलमश्नुवीतेति युक्तम्, सर्वगतत्वात्परस्य ब्रह्मणः। नन्वपरब्रह्मपरिग्रहे "परं पुरुषम्" इति विशेषणं नोपपद्यते। नैष दोषः, पिण्डापेक्षया प्राणस्य परत्वोपपत्तेः; इत्येवं प्राप्तेऽभिधीयते—

परमेव ब्रह्मेहाभिध्यातव्यमुपदिश्यते । कस्मात्? ईक्षतिकर्मव्यप-देशात्; ईक्षतिर्दर्शनम्; दर्शनव्याप्यमीक्षतिकर्म; ईक्षतिकर्मत्वेनास्याभि-ध्यातव्यस्य पुरुषस्य वाक्यशेषे व्यपदेशो भवति—"स एतस्माज्जीवघना-

प्रकटार्थविवरणम्

मार्गेण परापरब्रह्मणोरेकतरमन्वेति । परदृष्ट्या चेदोंकारमुपास्ते तदा परमा-प्नोति, अपरदृष्ट्या चेदपरमित्यर्थः। मध्ये चैकमात्रद्विमात्रोपासनमुक्त्वाह—यः पुनरेतं प्रकृतं त्रिमात्रम्, विभक्तिपरिणामेन, 'ओम्' इत्येतदक्षरं परपुरुषदृष्ट्याभि-ध्यायीत। "स सूर्ये तेजसि संपन्नः" इत्यादिना उभयोरपि प्रकृतत्वात्संशयमाह—किमस्मिन्निति ॥ पूर्वत्र वर्णे रूढस्याक्षरशब्दस्य समस्तजगदायतनत्वलिङ्गेन जघन्या योगवृत्तिराश्रिता; तथेहापि देशे[३] [श] परिच्छिन्नफलश्रवणलिङ्गेन परश-ब्दस्यापेक्षिकपरत्वविशिष्टे हिरण्यगर्भे वृत्तिरिति पूर्वपक्षमाह—तत्रापर-मित्यादिना ॥

साध्याहारं सूत्रभागं योजयति—परमेव ब्रह्मेत्यादिना ॥ अस्त्वीक्षण-

१. A. एतत्

२. A. ओङ्कारशब्दस्य

३. A omits देहे

T, P and TM. देहे.

## भाष्यम्

त्परात्परं पुरिशयं पुरुषमीक्षते" इति। तत्राभिध्यायतेरतथाभूतमपि वस्तु कर्म भवति, मनोरथकल्पितस्याप्यभिध्यायतिकर्मत्वात्; ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टम्, इत्यतः परमात्मैवायं सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते। स एव चेह परपुरुषशब्दाभ्यामभिध्यातव्यः प्रत्यभिज्ञायते। नन्वभिध्याने परः पुरुष उक्तः, ईक्षणे तु परात्परः; कथमितर इतरत्र प्रत्यभिज्ञायत इति, अत्रोच्यते—परपुरुषशब्दौ तावदुभयत्र साधारणौ। न चात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परः पुरुषः परामृश्यते, येन तस्मात्परात्परोऽयमीक्षितव्यः पुरुषोऽन्यः स्यात्। कस्तर्हि जीवघन इति, उच्यते—घनो मूर्तिः; जीवलक्षणो घनो जीवघनः सैन्धवखिल्यवद्यः परमात्मनो जीवरूपः खिल्यभाव उपाधिकृतः, परश्च विषयेन्द्रियेभ्यः,

## प्रकटार्थविवरणम्

विषयत्वेन वाक्यशेषे निर्देशः, ततः किमित्याशङ्क्याह–तत्राभिध्यायतेरिति॥ ईक्षणं नाम युक्तितः पर्यालोचनं मुख्यम्; तच्च सत्यार्थं वक्ति, मिथ्यार्थस्य युक्त्यसहिष्णुत्वात्। सत्यश्च परमात्मैवेति वाक्यशेषः परमात्मविषय इत्यर्थः। तथाप्युपक्रमे किमायातमित्याशङ्क्य "सः" इति सूत्रभागं व्याचष्टे—स एव चेहेति॥ निर्देशवैषम्याद्[1]प्रत्यभिज्ञानं शङ्कते—नन्वभिध्यान इति॥ वैषम्यमङ्गीकृत्य प्रत्यभिज्ञाया अविरोधमाह— अत्रोच्यत इति॥ नन्वभिध्यातव्यविशेषणस्य परशब्दस्य जीवघनविशेषणत्वात् स एवाभिध्यातव्यः। परात्परः पुनरीश्वरोऽन्य एवेत्याशङ्क्याह—न चात्रेति॥ यो ध्यानस्य विषयः स[2] एव तज्जनितसमद[सम्यग्द]र्शनस्येक्षणस्यापि विषय इति एकवाक्यतायां संभवन्त्यां वाक्यभेदस्यान्याय्यत्वादिति भावः। यद्युपक्रमोपसंहारयोरेकवाक्यतासिद्धये योऽभिध्यातः[तव्यः] उपक्रमे स एव उपसंहारेऽपीक्षणगोचर इत्यूरीक्रियते। कस्तर्हि जीवघनशब्दार्थः? तत्र "मूर्तौ घनः" इति सूत्रावष्टम्भेनार्थमाह—घनो मूर्ति-

१. A. म्यात् प्रत्यभि-  २. T, TM and A omit स एव···उपक्रमः

भाष्यम्

सोऽत्र जीवघन इति। अपर आह—"स सामभिरुन्नीयते ब्रह्मलोकम्" इत्यतीतानन्तरवाक्यनिर्दिष्टो यो ब्रह्मलोकः परश्च लोकान्तरेभ्यः, सोऽत्र जीवघन इत्युच्यते। जीवानां हि सर्वेषां करणपरिवृतानां सर्वकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि संघातोपपत्तेर्भवति ब्रह्मलोको जीवघनः। तस्मात्परो यः पुरुषः परमात्मेक्षणकर्मभूतः, स एवाभिध्यानेऽपि कर्मभूत इति गम्यते। "परं पुरुषम्" इति च विशेषणं परमात्मपरिग्रह एवावकल्पते। परो हि पुरुषः परमात्मैव भवति यस्मात्परं किंचिदन्यन्नास्ति; "पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इति च श्रुत्यन्तरात्। "परं चापरं च ब्रह्म यदोंकारः" इति च विभज्य, अनन्तरमोंकारेण परं पुरुषमभिध्यातव्यं ब्रुवन्, परमेव ब्रह्म परं पुरुषं गमयति। "यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुच्यते" इति पाप्मविनिर्मोकफलवचनं परमात्मानमिहाभिध्यातव्यं सूचयति। अथ यदुक्तं परमात्माभिध्यायिनो न देशपरिच्छिन्नफलं

प्रकटार्थविवरणम्

रित्यादिना॥ सन्निहितावलम्ब्येतच्छब्दसामानाधिकरण्यादर्थान्तरमाह—अपर आहेति॥ कया वृत्त्या जीवघनशब्दो ब्रह्मलोकमाहेत्याशङ्क्याह—जीवानां हीति॥ सर्वे जीवास्तावत्करणग्रामोपहिताः; करणग्रामाभिमानी च हिरण्यगर्भः; स तस्मिन् लोके वसतीति परम्परया जीवघनाः संहता यस्मिन् स जीवघन इत्यर्थः। ब्रह्मलोकस्यापि कारणत्वात् परमात्मा ततः पर इत्याह—तस्मात्पर इति॥ परपुरुषशब्दस्य परमात्मनि मुख्यत्वाच्च स एवाभिध्यातव्य इत्याह—परं पुरुषमिति॥ उपक्रमपर्यालोचनयाप्येवमेवेत्याह—परं चापरं चेति॥ फलवचनानुसारेणापि परमात्माभिध्यातव्य इत्याह—यथेति॥ पादोदर उरगः। पूर्वपक्षमनुभाष्य दूषयति—यदुक्तमित्यादिना॥ विशुद्धब्रह्मात्मैकत्वविज्ञाने हि न देशपरिच्छिन्नं फलम्। उपासने तदपि न विरुध्यत इत्यर्थः॥

१. A. माने

२. TM. फलवासने
T[1]. फलमुपासते

भाष्यम्

युज्यत इति, अत्रोच्यते—त्रिमात्रेणोङ्कारेणालम्बनेन परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः, क्रमेण च सम्यग्दर्शनोत्पत्तिः, इति क्रममुक्त्यभिप्रायमेतद्भविष्यतीत्यदोषः ॥

## दहर उत्तरेभ्यः ॥ १-३-१४ ॥

"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इत्यादिवाक्यं समाम्नायते । तत्र योऽयं दहरे हृदयपुण्डरीके दहर आकाशः श्रुतः, स किं भूताकाशः, अथ विज्ञानात्मा, अथ वा परमात्मेति संशय्यते । कुतः संशयः? आकाशब्रह्मपुरशब्दाभ्याम् । आकाशशब्दो ह्ययं भूताकाशे परस्मिंश्च ब्रह्मणि प्रयुज्यमानो दृश्यते । तत्र किं भूताकाश एव दहरः स्यात्, किं वा पर इति संशयः । तथा ब्रह्मपुरमिति— किं जीवोऽत्र ब्रह्मनामा, तस्येदं पुरं शरीरं ब्रह्मपुरम्; अथ वा परस्यैव ब्रह्मणः पुरं ब्रह्मपुरमिति । तत्र जीवस्य परस्य वान्यतरस्य पुरस्वामिनो दहराकाशत्वे संशयः । तत्राकाशशब्दस्य भूताकाशे रूढत्वाद्भूता-

प्रकटार्थविवरणम्

दहर उत्तरेभ्यः ॥

छान्दोग्यवाक्यं पठति— अथ यदिदमिति॥ब्रह्मेति॥ब्रह्मपुरे शरीरे; दहरमल्पं पुण्डरीकतुल्यं स्थानम्। पशौ विशस्यमानेऽष्टदलकमलाकारो मांसखण्डः; हृदयं प्रसिद्धमेव। सबीजं संशयमाह—तत्र योऽयमित्यादिना॥पूर्वत्र परपुरुषशब्दस्य ब्रह्मणि मुख्यत्वेन ब्रह्मैवाभिध्यातव्यमभ्यधायि । तथेहाप्याकाशशब्दस्य भूताकाशे रूढत्वात् स एवोपास्य उपदिश्यत इति पूर्वपक्षमाह—तत्राकाशशब्दस्येति ॥ कथं भूताकाशस्याल्पत्वम्, कथं वैकस्मिन्नेवोपमानोपमेयभावः, कथं वा द्यावापृथिव्यादिनां तत्रात्यल्पेऽवस्थानम्, इत्याशङ्क्य तत्सर्वं क्रमेण

१. A omits इति.

### भाष्यम्

काश एव दहरशब्द इति प्राप्तम्; तस्य च दहरायतनापेक्षया दहरत्वम्; "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इति च बाह्याभ्यन्तरभावकृतभेदस्योपमानोपमेयभावः; द्यावापृथिव्यादि च तस्मिन्नन्तः समाहितम्, अवकाशात्मनाकाशस्यैकत्वात् । अथ वा जीवो दहर इति प्राप्तम्, ब्रह्मपुरशब्दात्; जीवस्य हीदं पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते, तस्य स्वकर्मणोपार्जितत्वात्; भक्त्या च तस्य ब्रह्मशब्दवाच्यत्वम्; न हि परस्य ब्रह्मणः शरीरेण स्वस्वामिभावः संबन्धोऽस्ति; तत्र पुरस्वामिनः पुरैकदेशेऽवस्थानं दृष्टम्, यथा राज्ञः । मनउपाधिकश्च जीवः, मनश्च प्रायेण हृदये प्रतिष्ठितम् इत्यतो जीवस्यैवेदं हृदयेऽन्तरवस्थानं स्यात्; दहरत्वमपि तस्यैव आराग्रोपमितत्वादवकल्पते; आकाशोपमितत्वादि च ब्रह्माभेदविवक्षया भविष्यति; न चात्र दहरस्याका-

### प्रकटार्थविवरणम्

संभावयति—तस्य चेत्यादिना ॥ "एष आत्मा" इत्यात्मशब्दस्य भूताकाशे असामञ्जस्यात् पक्षान्तरमाह—अथ वेति ॥ कया वृत्त्या ब्रह्मशब्दो जीवमाहेत्याशङ्क्याह—भक्त्या चेति ॥ बृंहणयोगाद्गौण्या वृत्त्येत्यर्थः । मुख्यार्थत्यागे कारणमाह—न हीति ॥ ननु पादाद्यवयवेषु युगपद्वेदनानुसन्धानान्न जीवस्य हृदयमात्रवर्तित्वमित्याशङ्क्याह—तत्र पुरस्वामिन इति ॥ सकलकलेबराभिमानिनोऽपि प्रायेण हृदयेऽवस्थानमित्यर्थः । इतश्च जीव एव हृदयेऽवस्थित इत्याह—मनउपाधिकश्चेति ॥ "आराग्रमात्रो ह्यवरोऽपि दृष्टः" इति श्रुतेः जीवस्याल्पत्ववचनेनाऽपि[1] मुख्यमित्याह—दहरत्वमपीति ॥ यच्चाकाशोपमितत्वं द्यावापृथिव्यादीनां अन्तःसमाहितत्वादिकं च, तत्सर्वं ब्रह्मभावापेक्षया भविष्यतीत्याह—आकाशोपमितत्वादि चेति ॥ किं च पूर्वं दहरस्य विज्ञेयत्वमङ्गीकृत्य जीवो दहर इत्युक्तम् । इदानीं न दहरस्य विज्ञेयत्वं विज्ञेयविशेषणत्वेनोपादानादित्याह—न चात्र दहरस्येति ॥

१. T² and A. अल्पवचनत्वमपि.

भाष्यम्

शस्यान्वेष्यत्वं विजिज्ञासितव्यत्वं च श्रूयते ; "तस्मिन्यदन्तः" इति परविशेषणत्वेनोपादानादिति ॥

अत उत्तरं ब्रूमः—परमेश्वर एवात्र दहराकाशो भवितुमर्हति, न भूताकाशो जीवो वा । कस्मात्? उत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः । तथा हि—अन्वेष्टव्यतयाभिहितस्य दहरस्याकाशस्य "तं चेद्ब्रूयुः" इत्युपक्रम्य "किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्" इत्येवमाक्षेपपूर्वकं प्रतिसमाधानवचनं भवति "स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते" इत्यादि । तत्र पुण्डरीकदहरत्वेन प्राप्तदहरत्वस्याकाशस्य प्रसिद्धाकाशौपम्येन दहरत्वं निवर्तयन्भूताकाशत्वं दहरस्याकाशस्य निवर्तयतीति गम्यते । यद्यप्याकाशशब्दो भूताकाशे रूढः, तथापि तेनैव तस्योपमा नोपपद्यत इति भूताकाशशङ्का निवर्तिता भवति । नन्वेकस्याप्याकाशस्य बाह्याभ्यन्तरत्वकल्पितेन भेदेनोपमानोपमेयभावः संभवतीत्युक्तम् ; नैवं संभवति ; अगतिका हीयं

प्रकटार्थविवरणम्

सिद्धान्तसूत्रं योजयति—परमेश्वर एवेत्यादिना ॥ तमाचार्यं प्रति यदि शिष्या ब्रूयुः—पुण्डरीकमेव तावदल्पम्, अल्पतरश्च तद्गताकाशः ; अतः किं तदित्यल्पं विद्यते यच्छ्रुत्युपपत्तिभ्यामन्वेषणीयम् ; यद्वाव किल साक्षात्करणीयम्—इत्यल्पत्वदोषेण दहरस्याविज्ञेयत्वाक्षेपपूर्वकं श्रुतेः प्रतिसमाधानवचनं भवति । स आचार्यो ब्रूयादित्यादि प्रतिवचनस्य विवक्षितमर्थमाह—तत्रेति ॥ ननु आकाशशब्दस्य भूताकाशे रूढत्वात् कथं तद्व्यावृत्तिरित्याशङ्क्याह—यद्यपीति ॥ सति भेदे गोगवययोरुपमानोपमेयभावः सिद्धः । एकस्मिन्नेव तूपमानोपमेयभावः "रामरावणयोर्युद्धं रामरावणयोरिव" इत्यगतिका गतिरित्यर्थः । सादृश्ये सत्युपमानोपमेयभावो दृष्टः । उपाधिपरिच्छि-

१. TM. वानं

भाष्यम्

गतिः, यत्काल्पनिकभेदाश्रयणम् । अपि च कल्पयित्वा भेदमुपमानोपमेयभावं वर्णयतः परिच्छिन्नत्वादभ्यन्तराकाशस्य न बाह्याकाशपरिमाणत्वमुपपद्येत । ननु परमेश्वरस्यापि "ज्यायानाकाशात्" इति श्रुत्यन्तरान्नैवाकाशपरिमाणत्वमुपपद्यते ; नैष दोषः; पुण्डरीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरत्वाद्वाक्यस्य न तावत्त्वप्रतिपादनपरत्वम् ; उभयप्रतिपादने हि वाक्यं भिद्येत । न च कल्पितभेदे पुण्डरीकवेष्टित आकाशैकदेशे द्यावापृथिव्यादीनामन्तःसमाधानमुपपद्यते । "एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" इति चात्मत्वापहतपाप्मत्वादयश्च गुणा न भूताकाशे संभवन्ति । यद्यप्यात्मशब्दो जीवे संभवति, तथापीतरेभ्यः कारणेभ्यो जीवाशङ्कापि निवर्तिता भवति । न ह्युपाधिपरिच्छिन्नस्याराग्रोपमितस्य जीवस्य पुण्डरीकवेष्टनकृतं दहरत्वं शक्यं निवर्तयितुम् । ब्रह्माभेदविवक्षया जीवस्य सर्वगतत्वादि विवक्ष्येतेति चेत्, यदात्मतया जीवस्य सर्वगतत्वादि विवक्ष्येत, तस्यैव ब्रह्मणः साक्षात्सर्वगतत्वादि विवक्ष्यतामिति

प्रकटार्थविवरणम्

स्य च महत्परिमाणेन न सादृश्यमस्तीत्याह—अपि चेति ।। तर्हि परमेश्वरस्यापि न भूताकाश उपमानम्[१], समानपरिमाणत्वाभावादित्याह—ननु परमेश्वरस्यापीति ।। न भूताकाशसमानपरिमाणत्वप्रतिपादनपरं वाक्यं किं तु शङ्किताल्पपरिमाणत्वव्यावृत्तिपरमित्याह — नैष दोष इति ।। उभयत्र किं न तात्पर्यमित्याशङ्क्याह – उभयेति ।। भूताकाशापरिग्रहे लिङ्गान्तरमाह—न चं कल्पितेति ।। विगता जिघत्सा भक्षणेच्छा यस्य स विजिघत्सः । आकाशोपमितत्वादिकारणेभ्योऽपि भूताकाशं निरस्य जीवनिराकरणेऽपि योजयति—यद्यपीत्यादिना ।। कल्पनालाघवेन परिहरति—यदात्मतयेति ।। ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात् प्रथमश्रुतनिरपेक्षब्रह्मप्रातिपदिकार्थानु-

१. T, T[1], P and TM. उपमा.

भाष्यम्

युक्तम् । यदप्युक्तम्—"ब्रह्मपुरम्" इति जीवेन परस्योपलक्षितत्वाद्राज्ञ इव जीवस्यैवेदं पुरस्वामिनः पुरैकदेशवर्तित्वमस्त्विति ; अत्र ब्रूमः—परस्यैवेदं ब्रह्मणः पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते, ब्रह्मशब्दस्य तस्मिन्मुख्यत्वात् । तस्याप्यस्ति पुरेणानेन संबन्धः, उपलब्ध्यधिष्ठानत्वात् । "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" "स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः" इत्यादिश्रुतिभ्यः । अथवा जीवपुर एवास्मिन्ब्रह्म संनिहितमुपलक्ष्यते, यथा शालग्रामे विष्णुः संनिहित इति, तद्वत् । "तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते" इति च कर्मणामन्तवत्फलत्वमुक्त्वा "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" इति प्रकृतदहराकाशविज्ञानस्यानन्तफलत्वं वदन्, परमात्मत्वमस्य सूचयति । यदप्येतदुक्तम्, न दहरस्याकाशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं

प्रकटार्थविवरणम्

गुण्येन चरमश्रुतसापेक्षविभक्त्यर्थो नेतव्य इत्यभिप्रेत्याह — परस्यैवेदं ब्रह्मण इति ॥ कस्तर्हि संबन्धः षष्ठ्या आलम्बनमित्याशङ्क्य व्यङ्ग्यव्यञ्जकभाव इत्याह—तस्याप्यस्तीति ॥ यत्तु[1] जीवोऽनाद्यभ्यवहारेण शरीरं ब्रह्मयति वर्धयति इति मुख्य एव तस्मिन् ब्रह्मशब्दः; स्वकर्मोपार्जितत्वाच्च तस्यासाधारणं शरीरमित्यभिमानः तत्राह—अथवेति ॥ किं च दहरविज्ञानस्यानन्तफलश्रवणादपि दहरः परमात्मेत्याह—तद्यथेत्यादिना ॥ इह जीवस्यैव देहे दहरमात्मानं तत्समाहितांश्च सत्यकामादीन् गुणान् शास्त्राचार्योपदेशमनुविद्य अनुभूय ये व्रजन्ति परलोकं तेषां सर्वेषु लोकेषु कामचरणं स्वेच्छागमनात्मप्रतिहतमैश्वर्यं भवतीत्यर्थः । नैतद्दहराकाशस्य[शविज्ञानस्य][2] फलं दहरस्याविशेषत्वादित्याह-यदप्येतदुक्तमिति ॥ उत्तरत्राकाशस्य स्वरूपप्रतिपादनान्यथानुप-

१. A. यद्यपि

२. T, P, TM and A omit दहराकाशस्य फलम्

३. T¹. यद्यपि.

भाष्यम्

च श्रुतम्, परविशेषणत्वेनोपादानादिति ; अत्र ब्रूमः—यद्याकाशो नान्वेष्टव्यत्वेनोक्तः स्यात् "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्याद्याकाशस्वरूपप्रदर्शनं नोपपद्येत । नन्वेतदप्यन्तर्वर्तिवस्तुसद्भावप्रदर्शनायैव प्रदर्श्यते । "तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्" इत्याक्षिप्य परिहारावसर आकाशौपम्योपक्रमेण द्यावापृथिव्यादीनामन्तःसमाहितत्वदर्शनात् ; नैतदेवम् । एवं हि सति यदन्तःसमाहितं द्यावापृथिव्यादि, तदन्वेष्टव्यं विजिज्ञासितव्यं चोक्तं स्यात् ; तत्र वाक्यशेषो नोपपद्येत ; "अस्मिन्कामाः समाहिताः" "एष आत्माऽपहतपाप्मा" इति हि प्रकृतं द्यावापृथिव्यादिसमाधानाधारमाकाशमाकृष्य "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्" इति समुच्चयार्थेन चशब्देनात्मानं कामाधारमाश्रितांश्च

प्रकटार्थविवरणम्

पत्त्या तस्य ज्ञेयत्वमन्तःसमाहितैः सह विवक्षितमित्याह—अत्र ब्रूम इत्यादिना ॥ अन्यथाप्युपपत्तिमाह—नन्वेतदपीति ॥ यथा "वेतसशाखयावकाभिश्चाग्निं विकर्षति" इत्यत्र "आपो वै शान्ताः" इत्याश्रयभूतापूस्तुत्या वेतसशाखाधके स्तूयेते ; तथाधारस्तुत्या आधेयसंस्तवो विवक्षित इति भावः । तर्हि यत् स्तूयते तद्विधीयत इति न्यायादाधारस्यैवाधेयत्वं प्रसज्येतेत्याह—नैतदेवमिति ॥ तदा किं दूषणमित्यत आह—तत्रेति ॥ वाक्यशेषे वा किं दर्शितं येन तस्यानुपपत्तिरित्याशङ्क्याह — अस्मिन् कामा इति ॥ यस्मात्प्रकृतपरामर्शकेन सर्वनाम्नाकाशं परामृश्य सकलकामाधारत्वमात्मत्वं चोक्तत्वात् ज्ञेयत्वमुपसंहृतम्, तस्मादित्युपसंहारः । तस्मिन् दहराकाशे यदन्तःसमाहितं तस्याधारमन्वेष्टव्यमिति श्रुतेर्योजना । पुरप्रवेशमन्तरेण तन्मन्दिरभ्रमणासंभववत् दहराकाशान्वेषणमन्तरेण तत्समाहितान्वेषणासंभवात् दहरान्वेषणमवश्यंभावीति भावः ॥

१. T, P and TM. भ्रमणात्

भाष्यम्

कामान्विज्ञेयान्वाक्यशेषो दर्शयति । तस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः सहान्तःस्थैः समाहितैः पृथिव्यादिभिः सत्यैश्च कामैर्विज्ञेय उक्त इति गम्यते । स चोक्तेभ्यो हेतुभ्यः परमेश्वर इति स्थितम् ॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १-३-१५ ॥

दहरः परमेश्वर उत्तरेभ्यो हेतुभ्य इत्युक्तम्; त एवोत्तरे हेतव इदानीं प्रपञ्चयन्ते । इतश्च परमेश्वर एव दहरः, यस्माद्दहरवाक्यशेषे परमेश्वरस्यैव प्रतिपादकौ गतिशब्दौ भवतः—"इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इति । तत्र प्रकृतं दहरं ब्रह्मलोकशब्देनाभिधाय तद्विषया गतिः प्रजाशब्दवाच्यानां जीवानामभिधीयमाना दहरस्य ब्रह्मतां गमयति । तथा ह्यहरहर्जीवानां सुषुप्तावस्थायां ब्रह्मविषयं गमनं दृष्टं श्रुत्यन्तरे—"सता सोम्य तदा संपन्नो भवति" इत्येवमादौ । लोकेऽपि किल गाढं सुषुप्तमाचक्षते 'ब्रह्मीभूतो ब्रह्मतां गतः' इति । तथा ब्रह्मलोकशब्दोऽपि प्रकृते

प्रकटार्थविवरणम्

उत्तरसूत्रसन्दर्भस्य महासङ्गतिमाह—दहरः परमेश्वर इति ॥ समनन्तरसङ्गतिमाह—इतश्चेति ॥ गतिशब्दयोर्विवक्षितमर्थमाह—तत्र प्रकृतमिति ॥ सुषुप्ते जीवानां दहरे गमनमस्तु एतच्छब्दपरामर्शात्, तथापि ब्रह्मत्वे किमायातमित्याशङ्क्य "तथाहि दृष्टम्" इत्यवतारयति—तथा ह्यहरहरिति ॥ ब्रह्मविल्प्रसिद्धिं चाह—लोकेऽपीति ॥ गतिसामर्थ्यं प्रपञ्च्य शब्दसामर्थ्यं प्रपञ्चयति—तथा ब्रह्मलोकेति ॥ जीवभूताकाशयोः ब्रह्मलोकशब्दानभिधेयत्वादित्यर्थः ॥ तथापि ब्रह्मगमकत्वं न संभवति, सत्यलोके प्रसि-

१. T¹. गतिशब्दयोर्ब्रह्मलोकशब्दानभिधेय इत्यर्थः विव-

२. T, T¹, TM and P. तमाह

३. A adds आह

४. T, T¹, P and TM. गतत्वं

भाष्यम्

दहरे प्रयुज्यमानो जीवभूताकाशशङ्कां निवर्तयन्ब्रह्मतामस्य गमयति। ननु कमलासनलोकमपि ब्रह्मलोकशब्दो गमयेत् । गमयेद्यदि ब्रह्मणो लोक इति षष्ठीसमासवृत्त्या व्युत्पाद्येत; सामानाधिकरण्यवृत्त्या तु व्युत्पाद्यमानो ब्रह्मैव लोको ब्रह्मलोक इति परमेव ब्रह्म गमयिष्यति। एतदेव चाहरहर्ब्रह्मलोकगमनं दृष्टं ब्रह्मलोकशब्दस्य सामानाधिकरण्यवृत्तिपरिग्रहे लिङ्गम् । न ह्यहरहरिमाः प्रजाः कार्यब्रह्मलोकं सत्यलोकाख्यं गच्छन्तीति शक्यं कल्पयितुम् ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १-३-१६ ॥

धृतेश्च हेतोः परमेश्वर एवायं दहरः । कथम्? "दहरोऽस्मिन्नन्तराकाशः" इति हि प्रकृत्याकाशौपम्यपूर्वकं तस्मिन्सर्वसमाधानमुक्त्वा तस्मिन्नेव चात्मशब्दं प्रयुज्यापहतपाप्मत्वादिगुणयोगं चोपदिश्य तमेवानतिवृत्तप्रकरणं निर्दिशति— "अथ य आत्मा स सेतुर्विधृतिरेष

प्रकटार्थविवरणम्

वृत्त्यादित्याह—नन्विति ॥ निषादस्थपतिन्यायेन कर्मधारयस्योभयपदप्रधानतया बलीयस्त्वाद्ब्रह्मैव लोक्यते साक्षात्क्रियते मुमुक्षुभिरिति तद्गमकत्वमेवेत्याह—गमयेद्यदीति ॥ कर्मधारयसमासपरिग्रहे लिङ्गमुपोद्बलकं दर्शयितुं "लिङ्गं च" इति सूत्रभागं व्याचष्टे—एतदेव चेति ॥

समस्तजगद्विधरणलक्षणस्य परमात्मलिङ्गस्य दहरे दर्शनाच्च दहरः परमात्मेत्याह—धृतेश्चेति ॥ ननु अथशब्देन प्रकरणं विच्छिद्य विधृतिरिति श्रूयते । ततः कथं दहरस्य विधारकत्वमित्याह—कथमिति ॥ प्रकृतपरामर्शिना यच्छब्देनात्मशब्देन च दहरस्यैव बुद्धिस्थत्वान्नाथशब्दः प्रकरणविच्छेदकः, किं तु वाक्योपक्रममात्रज्ञापनार्थ इति परिहारार्थः । ननु स्त्रियां भावे क्तिन्प्रत्ययविधानान्न विधृतिशब्देन दहरस्य विधारकत्वमुच्यत इत्या-

१. A. गमयतीति
२. T[1], and TM. विधृतेरिति
३. TM. अतः
४. T. बुद्धिस्थताया-

भाष्यम्

लोकानामसंभेदाय" इति। तत्र विधृतिरित्यात्मशब्दसामानाधिकरण्याद्विधारयितोच्यते, क्तिचः कर्तरि स्मरणात्। यथोदकसंतानस्य विधारयिता लोके सेतुः क्षेत्रसंपदामसंभेदाय, एवमयमात्मैषामध्यात्मादिभेदभिन्नानां लोकानां वर्णाश्रमादीनां च विधारयिता सेतुः, असंभेदायासंकरायेति। एवमिह प्रकृते दहरे विधारणलक्षणं महिमानं दर्शयति। अयं च महिमा परमेश्वर एव श्रुत्यन्तरादुपलभ्यते "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादेः। तथान्यत्रापि निश्चिते परमेश्वरवाक्ये श्रूयते—"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति। एवं धृतेश्च हेतोः परमेश्वर एवायं दहरः॥

## प्रसिद्धेश्च॥ १-३-१७॥

इतश्च परमेश्वर एव "दहरोऽस्मिन्नन्तराकाशः" इत्युच्यते, यत्कारणमाकाशशब्दः परमेश्वरे प्रसिद्धः। "आकाशो वै नाम नामरूपयोर्निर्वहिता" "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिप्रयोगदर्शनात्। जीवे तु न क्वचिदाकाशशब्दः प्रयुज्यमानो दृश्यते। भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धावुपमानोपमेयभावाद्यसंभवान्न ग्रहीतव्य इत्युक्तम्॥

प्रकटार्थविवरणम्

शङ्कयाह—तत्र विधृतिरिति॥ प्रकृतिशब्दवद्विधृतिशब्दः क्तिच्प्रत्ययान्तः, न क्तिन्प्रत्ययान्त इत्यर्थः। ननु सेतुशब्देनापि विधारकत्वमेवोच्यते; अतः पौनरुक्त्यमित्याशङ्क्य विभागहेतुत्वं सेतुशब्दार्थ इत्याह—यथोदकसन्तानस्येति॥ उपसंहरति—एवमिहेति॥ विधारकत्वं वायोरप्यस्तीति नेदं परमात्मलिङ्गमित्याशङ्क्याह—अयं च महिमेति॥ वायोरपि परमेश्वरायत्तमेव विधारकत्वमिति भावः॥

प्रसिद्धेश्च॥

आ समन्तात्प्रकाशत इति यौगिकवृत्त्या परमात्मनि आकाशशब्दस्य मुख्यत्वाच्च दहरः परमात्मैवेत्याह—प्रसिद्धेश्चेति॥ तर्हि भूताकाशे रूढत्वात् स एव कस्मान्न गृह्यत इत्याशङ्क्याह—भूताकाशस्त्विति॥

भाष्यम्

## इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १-३-१८ ॥

यदि वाक्यशेषवशेन दहर इति परमेश्वरः परिगृह्येत, अस्तीतरस्यापि जीवस्य वाक्यशेषे परामर्शः—“अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच” इति; अत्र हि संप्रसादशब्दः श्रुत्यन्तरे सुषुप्तावस्थायां दृष्टत्वात्तदवस्थावन्तं जीवं शक्नोत्युपस्थापयितुम्, नार्थान्तरम् । तथा शरीरव्यपाश्रयस्यैव जीवस्य शरीरात्समुत्थानं संभवति, यथाकाशव्यपाश्रयाणां वाय्वादीनामाकाशात्समुत्थानम्, तद्वत् । यथा चादृष्टोऽपि लोके परमेश्वरविषय आकाशशब्दः परमेश्वरधर्मसमभिव्याहारात् “आकाशो वै नाम नामरूपयोर्निर्वहिता” इत्येवमादौ परमेश्वरविषयोऽभ्युपगतः, एवं जीवविषयोऽपि भविष्यति; तस्मादितरपरामर्शात् “दहरोऽस्मिन्नन्तराकाशः” इत्यत्र स एव जीव उच्यत इति चेत्—नैतदेवं स्यात्; कस्मात्? असंभवात् । न हि जीवो बुद्ध्याद्युपाधिपरिच्छेदाभिमानी सन्नाकाशेनोपमीयेत । न चोपाधिधर्मानभिमन्यमानस्यापहतपाप्मत्वादयो धर्माः संभवन्ति । प्रपञ्चितं चैतत्प्रथमे सूत्रे । अतिरेकाशङ्कापरिहारायात्र तु पुनरुपन्यस्तम् । पठिष्यति चोपरिष्टात्—“अन्यार्थश्च परामर्शः” इति ॥

प्रकटार्थविवरणम्

इतरपरामर्शात्स इति चेन्नासंभवात् ॥

विनिगमनकारणाभावं मन्वानः प्रत्यवतिष्ठते—यदि वाक्यशेषेति ॥ अयं वाक्यशेषो जीवविषय इति वा कुतः सिद्धमित्याशङ्क्यावस्थावत्त्वादिलिङ्गादित्याह—अत्र हीति ॥ ननु नाकाशशब्दः क्वचिज्जीवे प्रयुज्यत इत्युक्तं विनिगमनकारणमित्याशङ्क्याह—यथा चादृष्टोऽपीति ॥ यद्यप्यस्ति दहरविद्यावाक्यशेषे जीवपरामर्शः, तथापि न तद्बलेन दहरो जीवः शक्यते ग्रहीतुम्, दहरोक्तानां धर्माणां जीवेऽसंभवादित्याह—नैतदेवं स्यादिति ॥ का तर्हि गतिः जीवपरामर्शस्येत्याशङ्क्याह—पठिष्यति चेति ॥ जीवपरामर्शो जीवस्य स्वाधारपरमात्मन एवोपासनार्थ इत्यर्थः ॥

१. T. वाकाशशब्दः   २. A. जीवस्यापि स्वाधारः परमात्मैव

भाष्यम्

## उत्तराच्चेत् आविर्भूतस्वरूपस्तु ॥ १-३-१९ ॥

इतरपरामर्शाद्या जीवाशङ्का जाता सा असंभवान्निराकृता । अथेदानीं मृतस्येवामृतसेकात् पुनः समुत्थानं जीवाशङ्कायाः क्रियते उत्तरस्मात्प्राजापत्याद्वाक्यात् । तत्र हि "य आत्मापहतपाप्मा" इत्यपहतपाप्मत्वादिगुणकमात्मानमन्वेष्टव्यं विजिज्ञासितव्यं च प्रतिज्ञाय "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मा" इति ब्रुवन्नक्षिस्थं द्रष्टारं जीवमात्मानं निर्दिशति । "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति च तमेव पुनः पुनः परामृश्य "य एष स्वप्ने महीयमानश्चरत्येष आत्मा" इति "तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष

प्रकटार्थविवरणम्

उत्तराच्चेत् आविर्भूतस्वरूपस्तु ॥

सूत्रसङ्गतिमाह—[इतर]परामर्शाद्येति ॥ दहरविद्यां समाप्य इन्द्रविरोचनाख्यायिका ; तस्यां जीवस्य प्राजापत्याद्वाक्यादपहतपाप्मत्वाद्यवगमाद्वे सिद्धो हेतुरिति भावः । कथं वा प्राजापत्ये वाक्ये जीवोपदेशः सिद्ध इत्याशङ्क्याह—तत्र हीति ॥ इन्द्रविरोचनौ किल देवासुरराजौ ब्रह्मविद्यावित्सया प्रजापतिमाजग्मतुः ; आगत्य च द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः ; ततः प्रजापतिना किमिच्छन्तावावसतमिति पृष्टौ प्रोचतुः—य आत्मा अपहतपाप्मादिविशेषणः तमावां विविदिषाव इति ; प्रजापतिस्तु तथैवाभ्यनुज्ञाय "य एषोऽक्षिणि" इति प्रथमे पर्यायेऽक्षिस्थानं द्रष्टारं ब्रुवन् जीवमेव निर्दिशतीत्यर्थः । द्वितीयतृतीयपर्याययोरप्यवस्थावस्थलिङ्गेन जीव एव निर्दिष्ट इत्याह—एतं त्वेव त इति ॥ प्रजापतिना जीवो निर्दिष्टः, न तु तस्यापहतपाप्मत्वादिगुणत्वम्—इत्याशङ्क्-

१. A. अत्र

२. T¹. गमादहं भावादित्यपि.
TM and A. गमादित्यपि.

३. TM omits किल

४. A omits एतं ... निर्दिष्ट इत्याह

५. T¹ adds सत्यं

६. TM. पाप्मादि

### भाष्यम्

आत्मा" इति च जीवमेवावस्थान्तरगतं व्याचष्टे । तस्यैव चापहतपाप्मत्वादि दर्शयति—"एतदमृतमभयमेतद्ब्रह्म" इति । "नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि" इति च सुषुप्तावस्थायां दोषमुपलभ्य "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात्" इति चोपक्रम्य, शरीरसंबन्धनिन्दापूर्वकं "एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इति जीवमेव शरीरात्समुत्थितमुत्तमपुरुषं दर्शयति । तस्मादस्ति संभवो जीवे पारमेश्वराणां धर्माणाम् । अतः "दहरोऽस्मिन्नन्तराकाशः" इति जीव एवोक्त इति चेत्कश्चिद्ब्रूयात्, तं प्रति ब्रूयात्—"आविर्भूतस्वरूपस्तु" इति । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः; नोत्तरस्मादपि वाक्यादिह जीवस्याशङ्का संभवतीत्यर्थः । कस्मात्? यतस्तत्राप्याविर्भूतस्वरूपो जीवो विवक्ष्यते । आविर्भूतं स्वरूपमस्येत्याविर्भूतस्वरूपः; भूतपूर्वगत्या जीववचनम् ।

### प्रकटार्थविवरणम्

क्याह—तस्यैव चेति ॥ प्रकृष्टधर्माद्यनुष्ठानाज्जीवस्याप्यपहतपाप्मत्वादि संभवतीत्यर्थः । चतुर्थेऽपि पर्याये शरीरात्समुत्थितत्वालिङ्गात् जीव एव निर्दिष्ट इत्याह—नाह खल्वित्यादिना ॥ अहेति निपातः खेदार्थे । खिद्यमानः इन्द्रः प्रोवाचायं सुप्तोऽयमहमस्मीत्येवं नात्मानं संप्रति जानाति । नो एवेमानि भूतानि विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामीत्येवं सुषुप्तावस्थायां दोषमुपलभ्य उपसन्नमिन्द्रं प्रजापतिरुवाच एतमेव तुभ्यं पुनरपि व्याख्यास्यामि, नैतस्मादन्यमित्युपक्रम्य मघवन्मर्त्यं वा इदं शरीरमित्यादिनिन्दापूर्वकं जीवमेव दर्शयतीत्यर्थः । "तस्मात्" इत्यादिना पूर्वपक्षमुपसंहृत्य सिद्धान्तसूत्रभागं योजयति । नन्वाविर्भूतस्वरूपश्चेत् कथं जीवो विवक्ष्यत इत्याशङ्क्याह—भूतपूर्वगत्येति ॥ अविद्यातत्कार्यप्रतिबिम्बितत्वेन च चिद्धातोर्जीवभावोऽभूदिति बिम्बभूतब्रह्म-

१. T, T[1], P and TM. विद्यामायः

भाष्यम्

एतदुक्तं भवति—"य एषोऽक्षिणि" इत्यक्षिलक्षितं द्रष्टारं निर्दिश्य, उदशरावब्राह्मणेनैनं शरीरात्मताया व्युत्थाप्य "एतं त्वेव ते" इति पुनःपुनस्तमेव व्याख्येयत्वेनाकृष्य स्वप्नसुषुप्तोपन्यासक्रमेण "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति यदस्य पारमार्थिकं स्वरूपं परं ब्रह्म, तद्रूपतयैनं जीवं व्याचष्टे, न जैवेन रूपेण। यत्तत्परं ज्योतिरुपसंपत्तव्यं श्रुतम्, तत्परं ब्रह्म। तच्चापहतपाप्मत्वादिधर्मकम्, तदेव च जीवस्य पारमार्थिकं स्वरूपम् "तत्त्वमसि" इत्यादिशास्त्रेभ्यः, नेतरदुपाधिकल्पितम्। यावदेव हि स्थाणाविव पुरुषबुद्धिं द्वैतलक्षणा-

प्रकटार्थविवरणम्

ख्यावगमेऽपि जीवाभिधानमित्यर्थः। पर्यायचतुष्टयात्मकस्य प्राजापत्यवाक्यस्य संक्षेपतोऽभिप्रायमाह—एतदुक्तं भवतीति॥ उदशराव आत्मानमवेक्ष्य "यदात्मनो न विजानीथस्तन्मे प्रब्रूतम्" इत्यादिना यथोदकशरावे शरीरप्रतिबिम्बं व्यभिचारित्वादनात्मा तथा बिम्बभूतं शरीरमप्यनात्मेति दर्शितम्। प्रसिद्धजीवानुवादेन तस्य ब्रह्मतां व्याचचक्षे प्रजापतिरिति ब्रह्मण एव तत्रापहतपाप्मत्वादिधर्मकत्वमित्यर्थः। "परं ज्योतिरुपसंपद्य" इति ज्योतिस्तत्रोपसंपत्तव्यं भाति, न ब्रह्मेत्याशङ्क्याह—यत्तत्परमिति॥ स्वेन रूपेणेति विशेषणादित्यर्थः। नन्वेकरसत्वाद्ब्रह्मणः कुतोऽपहतपाप्मत्वादिधर्मकत्वम्, कुतस्तरां तद्रूपेण जीवस्यापहतपाप्मत्वादिधर्मकत्वमित्याशङ्क्याह—तच्चापहतेति॥ पापादिप्रतिषेधस्यैकरसताविरोधित्वादित्यर्थः। तर्हि विरुद्धधर्माक्रान्तत्वान्न ब्रह्म जीवस्य स्वरूपत्वेनोपदेष्टुं शक्यमित्याशङ्क्याह—तमेव चेति॥ यथा बिम्बप्रतिबिम्बयोः विरुद्धधर्माक्रान्तत्वेऽपि प्रतिबिम्बं बिम्बमेवेति वाक्येन विरुद्धांशपर्युदासेन स्वरूपैक्यं बोध्यते तद्वदित्यर्थः। ननु संसारित्वस्य तात्त्विकत्वान्न पर्युदासः कर्तुं शक्यत इत्याशङ्क्याह—नेतरदिति॥ अविद्यान्वयव्यतिरेकाभ्यां संसारित्वस्याविद्योपाध्यधीनत्वमेव दर्शयति—यावदेव हीति॥

१. TM. तं मे
२. A. व्याचष्टे
३. T¹. तथैव
TM and A. तदेव

भाष्यम्

मविद्यां निवर्तयन्कूटस्थनित्यदृक्स्वरूपमात्मानम् "अहं ब्रह्मास्मि" इति न प्रतिपद्यते तावज्जीवस्य जीवत्वम् । यदा तु देहेन्द्रियमनोबुद्धिसंघाताद्व्युत्थाप्य श्रुत्या प्रतिबोध्यते, नासि त्वं देहेन्द्रियमनोबुद्धिसंघातः, नापि संसारी, किं तर्हि तद्यत्सत्यं स आत्मा चैतन्यमात्रस्वरूपस्तत्त्वमसीति ; तदा कूटस्थनित्यदृक्स्वरूपमात्मानं प्रतिबुध्यास्माच्छरीराद्यभिमानात्समुत्तिष्ठन्स एव कूटस्थनित्यदृक्स्वरूप आत्मा भवति । "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतिभ्यः । तदेव चास्य पारमार्थिकं स्वरूपम्, येन शरीरात्समुत्थाय स्वेन रूपेणाभिनिष्पद्यते । कथं पुनः स्वं च रूपं स्वेनैव च निष्पद्यत इति संभवति कूटस्थनित्यस्य ? सुवर्णादीनां तु द्रव्यान्तरसंपर्कादभिभूतस्वरूपाणामनभिव्यक्तासाधारणविशेषाणां क्षारप्रक्षेपादिभिः शोध्यमानानां स्वरूपेणाभिनिष्पत्तिः स्यात् ; तथा नक्षत्रादीनामहन्यभिभूतप्रकाशानामभिभावकवियोगे रात्रौ स्वरूपेणाभिनिष्पत्तिः स्यात् ; न तु तथात्मचैतन्यज्योतिषो नित्यस्य केनचिदभिभवः संभवत्यसंसर्गित्वाद्व्योम्न इव, दृष्टविरोधाच्च ; दृष्टिश्रुतिमतिविज्ञाततयो हि जीवस्य स्वरूपम् ;

प्रकटार्थविवरणम्

ननु ज्ञानाद्ब्रह्मीभावः तर्हि न जीवस्य ब्रह्म निजं रूपमित्याशङ्क्याह—तदेव चास्येति ॥ प्रतिबन्धमलविगमापेक्षया भवतिरौपचारिकमित्यर्थः । कूटस्थनित्यत्वादसङ्गत्वाच्च मलसंसर्ग एव नोपपद्यत इति मन्वानो विप्रतिषेधमाह—कथं पुनरिति ॥ इतश्च नात्मनि मलप्रतिबन्धसंभव इत्याह—दृष्टविरोधाच्चेति ॥ "विज्ञानघन एव" इत्यादिश्रुतेश्चिन्मात्रस्वभावस्तावदात्मा ; तच्च चैतन्यं चक्षुरादिद्वारेण व्यज्यमानं दृष्ट्यादिशब्दवाच्यम् ; तच्चेत्प्रतिबद्धं सर्वो व्यवहारो विरुध्येतेत्यर्थः । यथासङ्गस्याप्याकाशस्य तत्र तत्रोदकप्रतिबिम्बितस्य मिथ्यैव तद्गतचलनादिधर्मभागित्वम्, तथा चितोऽसङ्गत्वेऽपि तत्तत्राविद्या-

१. T¹. द्रष्ट्रादि

२. T and TM. बन्धं
A. बन्धः

३. T. तं तन्त्र

भाष्यम्

तत्र शरीरादसमुत्थितस्यापि जीवस्य सदा निष्पन्नमेव दृश्यते ; सर्वो हि जीवः पश्यञ्शृण्वन्मन्वानो विजानन् व्यवहरति, अन्यथा व्यवहारानुपपत्तेः ; तच्चेच्छरीरात्समुत्थितस्य निष्पद्येत, प्राक्समुत्थानाद्दृष्टो व्यवहारो विरुध्येत ; अतः किमात्मकमिदं शरीरात्समुत्थानम्, किमात्मिका वा स्वरूपेणाभिनिष्पत्तिरिति ; अत्रोच्यते—प्राग्विवेकविज्ञानोत्पत्तेः शरीरेन्द्रियमनोबुद्धिविषयवेदनोपाधिभिरविभक्तमिव जीवस्य दृष्ट्यादिज्योतिःस्वरूपं भवति ; यथा शुद्धस्य स्फटिकस्य स्वाच्छ्यं शौक्ल्यं च स्वरूपं प्राग्विवेकग्रहणाद्रक्तनीलाद्युपाधिभिरविविक्तमिव भवति ; प्रमाणजनिततविवेकग्रहणात्तु पराचीनः स्फटिकः स्वाच्छ्येन शौक्ल्येन च स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते प्रागपि तथैव सन् ; तथा देहाद्युपाध्यविविक्तस्यैव सतो जीवस्य श्रुतिकृतं विवेकविज्ञानं शरीरात्समुत्थानम्, विवेकविज्ञानफलं स्वरूपेणाभिनिष्पत्तिः केवलात्मस्वरूपावगतिः । तथा विवेकाविवेकमात्रेणैवात्मनोऽशरीरत्वं

प्रकटार्थविवरणम्

प्रतिबिम्बिततया मिथ्यैव तत्कार्यसंसृष्टता घटते । तदवगमे[१] च बिम्बभूतब्रह्मात्मैक्यावगमेन स्वरूपाभिनिष्पत्तिरित्याह— अत्रोच्यत इति ॥ यद्यात्मचिचैतन्यं सदा व्यक्तमेव, न तत्र प्रतिबन्धसंभव इति तत्राह—प्राग्विवेकविज्ञानोत्पत्तेरिति ॥ नास्ति विशुद्धज्ञानस्वभाव आत्मा, न प्रकाशते चेति व्यवहारार्हत्वं चितोऽविद्याकृतः प्रतिबन्धः तत एव च देहादिभिः मिथ्यैव तादात्म्यमनुभूयते । तदिदमाह—अविविक्तमेवेति ॥ मिथ्यासंसृष्टत्वे दृष्टान्तमाह—यथा शुद्धस्येति ॥ दार्ष्टान्तिकमाह[२]—तथा देहादीति ॥ ननु शरीरात्समुत्थानं नामोत्क्रमणम्, न तु लक्ष्यपदार्थविषयं विवेकज्ञानं सशरीरत्वमपि तात्त्विकं न त्वविद्याकृतमित्याशङ्क्याह—तथा विवेकेति ॥ अशरीरमिति शरीरसंबन्धराहितम् । अथ च शरीरेष्ववस्थितमिति परस्परपराहतिपरिहा-

१. A. तदुपगमे २. T, T[1] and P. दार्ष्टान्तिकमतमाह

भाष्यम्

सशरीरत्वं च मन्त्रवर्णात् "अशरीरं शरीरेषु" इति, "शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते" इति च सशरीरत्वाशरीरत्वविशेषाभावस्मरणात् । तस्माद्विवेकविज्ञानाभावादनाविर्भूतस्वरूपः सन्विवेकविज्ञानादाविर्भूतस्वरूप इत्युच्यते । न त्वन्यादृशावाविर्भावानाविर्भावौ स्वरूपस्य संभवतः, स्वरूपत्वादेव । एवं मिथ्याज्ञानकृत एव जीवपरमेश्वरयोर्भेदः, न वस्तुकृतः ; व्योमवदसङ्गत्वाविशेषात् । कुतश्चैतदेवं प्रतिपत्तव्यम्? यतः "य एषोऽक्षिणि पुरुषो दृश्यते" इत्युपदिश्य "एतदमृतमभयमेतद्ब्रह्म" इत्युपदिशति । योऽक्षिणि प्रसिद्धो द्रष्टा द्रष्टृत्वेन विभाव्यते, सोऽमृताभयलक्षणाद्ब्रह्मणोऽन्यश्चेत्स्यात्, ततोऽमृताभयब्रह्मसामानाधिकरण्यं न स्यात् । नापि प्रतिच्छायात्मायमक्षिलक्षितो

प्रकटार्थविवरणम्

राय विवेकस्वभावपर्यालोचनया अशरीरत्वम्, अविद्याकृतं तु सशरीरत्वमत्रावगम्यत इत्यर्थः । ननु स्वकर्मोपार्जिते शरीरे दुःखाद्युपयोगस्यावर्जनीयत्वान्न जीवतः स्वरूपाविर्भावसंभव इत्याशङ्क्याह—शरीरस्थोऽपीति ॥ अशरीरो यथा न लिप्यते शरीरदोषेण तथा सशरीरस्यापि व्याप्रियमाणे शरीरे न कर्तृत्वं स्वात्मनि गम्यते । अत एव न लिप्यत इति सशरीरत्वाशरीरत्वयोः विशेषाभावस्मरणात् जीवतोऽपि स्वरूपाविर्भावो न विरुध्यत इत्यर्थः। उपसंहरति—तस्मादिति ॥ ज्ञानाज्ञानकृतावाविर्भावानाविर्भावावित्येवं स्थिते सति भेदोऽप्यंशांशिभावादिकृतो निरस्तो भवतीत्याशङ्क्याह—एवं मिथ्येति॥ इतोऽपि ब्रह्मणोऽन्यो जीवः प्रतिपाद्यो न भवतीत्यभ्युपगन्तव्यमित्याह—कुतश्चेति ॥ श्रुतिलिङ्गाभ्यां केवलं जीवलिङ्गं बाध्यत इति जीवो ब्रह्मतया व्याख्यायते, न ततोऽप्यतिरिक्तत्वेनेत्यर्थः । ननु न जीवो ब्रह्मतया व्याख्यायते, किं तु छाययेत्याशङ्क्याह—नापि प्रतिच्छायेति ॥ आत्मान्वेषणाय प्रवृत्तयोर्देवासुरराजयोरनात्मोपदेशो मृषावादित्वमेव स्यादित्यर्थः । ननु प्रथमे पर्याये जागरिताभिमानी विश्वो निर्दिष्टः; द्वितीये तु स्वप्नाभिमानी तैजसः; ततो

१. T, TM, A and P. जीवत्व

भाष्यम्

निर्दिश्यते, प्रजापतेर्मृषावादित्वप्रसङ्गात् । तथा द्वितीयेऽपि पर्याये "य एषः स्वप्ने महीयमानश्चरति" इति न प्रथमपर्यायनिर्दिष्टादक्षिपुरुषाद्द्रष्टुरन्यो निर्दिष्टः, "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इत्युपक्रमात् । किं च 'अहमद्य स्वप्ने हस्तिनमद्राक्षं नेदानीं तं पश्यामि' इति दृष्टमेव प्रतिबुद्धः प्रत्याचष्टे । द्रष्टारं तु तमेव प्रत्यभिजानाति 'य एवाहं स्वप्नमद्राक्षं स एवाहं जागरितं पश्यामि' इति । तथा तृतीयेऽपि पर्याये "न हि खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि" इति सुषुप्तावस्थायां विशेषविज्ञानाभावमेव दर्शयति, न विज्ञातारं प्रतिषेधति । यत्तु तत्र "विनाशमेवापीतो भवति" इति, तदपि विशेषविज्ञानविनाशाभिप्रायमेव न विज्ञातृविनाशाभिप्रायम्; "नाह विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्" इति श्रुत्यन्तरात् । तथा चतुर्थेऽपि पर्याये "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात्" इत्युपक्रम्य "मघवन्मर्त्यं वा इदं शरीरम्" इत्यादिना प्रपञ्चेन शरीराद्युपाधिसंबन्धप्रत्याख्यानेन संप्रसादशब्दोदितं जीवम् "स्वेन रूपेणाभिनिष्पद्यते" इति ब्रह्मस्वरूपापन्नं दर्शयन्न परस्माद्ब्रह्मणोऽमृताभयस्वरूपादन्यं जीवं दर्शयति ॥

प्रकटार्थविवरणम्

जीवभेदप्रतिपादने तात्पर्ये प्रजापतेर्लक्ष्यते इत्याशङ्क्याह—तथा द्वितीयेऽपीति ॥ अवस्थाभेद एव न त्ववस्थावतो भेदः । प्रत्यभिज्ञायमानत्वाच्चेत्याह—किं चाहमिति ॥ नन्विन्द्रेण द्रष्टुः प्रतिषेधान्न तस्य ब्रह्मतया व्याख्यानमित्याशङ्क्याह—तथा तृतीयेऽपीति ॥ एवंविधमिति बुद्धिवृत्तिरूपमेव ज्ञानं सुषुप्तौ नास्ति, न स्वरूपस्फुरणस्याप्यभावः परामर्शासंभवप्रसङ्गादिति भावः । विज्ञातुरात्मनः स्वरूपभूतायाः विज्ञातेः स्वरूपान्यथाभावो नास्ति, विनाशहेत्वभावादित्यर्थः । यच्च अगादि चतुर्थे पर्याये जीवमेव दर्शयतीति तत्राह—तथा चतुर्थेऽपीति ॥

१. T[1]. अहमयं विध



33

भाष्यम्

केचित्तु परमात्मविवक्षायाम् "एतं त्वेव ते" इति जीवाकर्षणमन्याय्यं मन्यमाना एतमेव वाक्योपक्रमसूचितमपहतपाप्मत्वादिगुणकमात्मानं ते भूयोऽनुव्याख्यास्यामीति कल्पयन्ति । तेषाम् 'एतम्' इति संनिहितावलम्बिनी सर्वनामश्रुतिर्विप्रकृष्येत; भूयःश्रुतिश्चोपरुध्येत; पर्यायान्तराभिहितस्य पर्यायान्तरेणानभिधीयमानत्वात् । "एतं त्वेव ते" इति च प्रतिज्ञाय प्राक्चतुर्थात्पर्यायादन्यमन्यं व्याचक्षाणस्य प्रजापतेः प्रतारकत्वं प्रसज्येत । तस्माद्यदविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृत्वभोक्तृत्वरागद्वेषादिदोषकलुषितमनेकानर्थयोगि, तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपद्यते, सर्पादिविलयनेनेव रज्ज्वादीन् । अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्ते, अस्मदीयाश्च केचित् । तेषां सर्वेषामात्मैकत्वसम्यग्दर्शनप्रतिपक्षभूतानां प्रतिबोधायेदं शारीरकमारब्धम्—एक एव परमेश्वरः कूटस्थनित्यो विज्ञानधातुरविद्यया, मायया मायाविवत्, अनेकधा विभाव्यते, नान्यो विज्ञानधातुरस्तीति । यत्त्विदं परमेश्वरवाक्ये जीवमाशङ्क्य प्रतिषेधति सूत्रकारः—"नासंभवात्" इत्यादिना, तत्रायमभिप्रायः—नित्यशुद्धबुद्धमुक्तस्वभावे कूटस्थनित्ये एकस्मिन्नसङ्गे परमात्मनि तद्विपरीतं जैवं रूपं व्योम्नीव तलमलादि परिकल्पितम्; तदात्मैकत्वप्रतिपादन-

प्रकटार्थविवरणम्

एकदेशिव्याख्यां प्रत्याख्याति— केचित्त्वित्यादिना ॥ यस्माद्वाक्यपौर्वापर्यालोचनया जीवानुवादेन ब्रह्मभाव एव विवक्षितः तस्मादित्युपसंहारः । ये त्वेतन्नानुमन्यन्ते तेषां शारीरमेवोत्तरमित्याह — अपरे त्वित्यादिना ॥ अविद्याप्रतिबिम्बितत्वेनानेकजीवभावेन मायाप्रतिबिम्बितत्वेन चेश्वरभावेनेति योजना ।[१] ननु सूत्रकारो जैवं वाक्यार्थं प्रतिषेधंस्तत्त्वतो भिन्नं मन्यत इत्याशङ्क्याह—यत्त्विदमिति ॥ परमात्मन्युपाधिप्रविष्टे यत् जैवं रूपं तन्निराचिकीर्षया विधेयतत्पदार्थसमर्थने सूत्रकारः प्रवृत्तो

१. A. इयं त्विति

भाष्यम्

परैर्वाक्यैर्न्यायोपेतैर्द्वैतवादप्रतिषेधैश्चापनेष्यामीति—परमात्मनो जीवादन्यत्वं द्रढयति ; जीवस्य तु न परस्मादन्यत्वं प्रतिपिपादयिषति ; किं त्वनुवदत्येवाविद्याकल्पितं लोकप्रसिद्धं जीवभेदम् ; एवं हि स्वाभाविककर्तृत्वभोक्तृत्वानुवादेन प्रवृत्ताः कर्मविधयो न विरुध्यन्त इति मन्यते । प्रतिपाद्यं तु शास्त्रार्थमात्मैकत्वमेव दर्शयति—"शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यादिना । वर्णितश्चास्माभिर्विद्वदविद्वद्भेदेन कर्मविधिविरोधपरिहारः ॥

## अन्यार्थश्च परामर्शः ॥ १-३-२० ॥

अथ यो दहरवाक्यशेषे जीवपरामर्शो दर्शितः—"अथ य एष संप्रसादः" इत्यादिः, स दहरे परमेश्वरे व्याख्यायमाने न जीवोपासनोपदेशः, नापि प्रकृतविशेषोपदेश इत्यनर्थकत्वं प्राप्नोतीत्यत आह—अन्यार्थोऽयं जीवपरामर्शो न जीवस्वरूपपर्यवसायी ; किं तर्हि ?

प्रकटार्थविवरणम्

नोद्देश्यस्य तात्त्विकभेदप्रतिपादन इति भावः । निराचिकीर्षितं चेज्जैवं रूपम्, कथं तर्हि निरधिकारिणां विधीनां प्रामाण्यमित्याशङ्क्याह—एवं हि स्वाभाविकेति ॥ ननु न क्वापि जीवब्रह्मणोरैक्यं दर्शयति सूत्रकारः, किं तु सर्वत्र भेदमेव ; अतो नैक्यं तस्य विवक्षितमित्याशङ्क्याह—प्रतिपाद्यं त्विति ॥ नन्वैक्यं चेत्प्रतिपाद्यं तर्हि अवश्यं कर्मविधिविरोधः प्रबन्धेन परिहरणीयः । स च न सूत्रकारेण मुखतः परिहृतः, नापि भाष्यकारेणेत्याशङ्क्याह—वर्णितेति ॥ तदेवं जीवानुवादेन तस्य ब्रह्मात्मताप्रतिपादने विरोधानुपलम्भात्, प्राजापत्ये च वाक्ये ब्रह्मातिरिक्तस्य जीवस्याप्रतिपाद्यत्वात् न तदवष्टम्भेनापि दहरवाक्ये जीवप्रतिपादनं शङ्कितव्यमिति स्थितम् ॥

अन्यार्थश्च परामर्शः ॥

एवं प्रासङ्गिकं प्राजापत्यव्याख्यानं परिसमाप्य प्रकृतदहरवाक्यशेषस्य गतिं दर्शयितुं शङ्कामाह—अथ यो दहरेत्यादिना ॥ ननु जीववाचके

भाष्यम्

परमेश्वरस्वरूपपर्यवसायी । कथम्? संप्रसादशब्दोदितो जीवो जागरितव्यवहारे देहेन्द्रियपञ्जराध्यक्षो भूत्वा, तद्वासनानिर्मितांश्च स्वप्नान्नाडीचरोऽनुभूय, श्रान्तः शरणं प्रेप्सुरुभयरूपादपि शरीराभिमानात्समुत्थाय, सुषुप्तावस्थायां परं ज्योतिराकाशशब्दितं परं ब्रह्मोपसंपद्य, विशेषविज्ञानवत्त्वं च परित्यज्य, स्वेन रूपेणाभिनिष्पद्यते । यदस्योपसंपत्तव्यं परं ज्योतिः, येन स्वेन रूपेणायमभिनिष्पद्यते, स एष आत्मापहतपाप्मत्वादिगुण उपास्यः—इत्येवमर्थोऽयं जीवपरामर्शः परमेश्वरवादिनोऽप्युपपद्यते ॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ १-३-२१ ॥

यदप्युक्तम्, "दहरोऽस्मिन्नन्तराकाशः" इत्याकाशस्याल्पत्वं श्रूयमाणं परमेश्वरे नोपपद्यते, जीवस्य त्वाराग्रोपमितस्याल्पत्वमवकल्पत इति, तस्य परिहारो वक्तव्यः । उक्तो ह्यस्य परिहारः परमेश्वरस्यापेक्षिकमल्पत्वमवकल्पत इति, "अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च" इत्यत्र; स एवेह परिहारोऽनुसंधातव्य इति सूचयति । श्रुत्यैवेदमल्पत्वं प्रत्युक्तं प्रसिद्धेनाकाशेनोपमिमानया "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इति ॥

प्रकटार्थविवरणम्

संप्रसादशब्दे श्रूयमाणे कथं परमेश्वरपरत्वं वाक्यस्येत्याह—कथमिति ॥
वाक्ययोजनापूर्वकं परमेश्वरे तात्पर्यमाह—संप्रसादेत्यादिना ॥

अल्पश्रुतेरिति चेत्तदुक्तम् ॥

इदानीं दहरश्रुतेः गतिं दर्शयितुमुपक्रमते—यदप्युक्तमित्यादिना ॥
तदुक्तमित्यस्यार्थान्तरमाह—श्रुत्यैवेदमिति ॥

भाष्यम्

# अनुकृतेस्तस्य च ॥ १-३-२२ ॥

" न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ "

इति समामनन्ति । यत्र यं भान्तमनुभाति सर्वं यस्य च भासा सर्वमिदं विभाति, स किं तेजोधातुः कश्चित्, उत प्राज्ञ आत्मेति विचिकित्सायां तेजोधातुरिति तावत्प्राप्तम् । कुतः? तेजोधातूनामेव सूर्यादीनां भानप्रतिषेधात् । तेजःस्वभावकं हि चन्द्रतारकादि तेजःस्वभावक एव सूर्ये भासमानेऽहनि न भासत इति प्रसिद्धम् । तथा सह सूर्येण सर्वमिदं चन्द्रतारकादि यस्मिन्न भासते, सोऽपि तेजःस्वभाव एव कश्चिदित्यवगम्यते । अनुभानमपि तेजःस्वभावक एवोपपद्यते, समानस्वभावकेष्वनुकारदर्शनात्; 'गच्छन्तमनुगच्छति' इतिवत् । तस्मात्तेजोधातुः कश्चिदित्येवं प्राप्ते ब्रूमः—

प्रकटार्थविवरणम्

अनुकृतेस्तस्य च ॥

आथर्वणगतं वाक्यं पठति—न तत्रेति ॥ सतिसप्तमीदर्शनात् [1]विषयसप्तमीदर्शनाच्च संशयमाह—तत्र यं भान्तमित्यादिना ॥ पूर्वत्रात्मभुत्यपगतपाप्मत्वादिलिङ्गप्रमाणविरोधादाकाशशब्दस्य रूढिपरित्यागेनेश्वरे [2]वृत्तिरुक्ता । तथेहापि [3]सतिसप्तमीपक्षे योग्यानुपलब्धिविरोधान्न भातीत्यस्य वर्तमानार्थतापरित्यागेन यस्मिन् सति सूर्यो न भास्यति स तेजोधातुः [4]कश्चिदुपास्य उपदिश्यत इति पूर्वपक्षमाह—तेजोधातुरिति तावत्प्राप्तमिति ॥

१. A omits विषय...नाच्च
२. A. प्रवृत्तिः
३. A omits सति
४. TM omits कश्चित्...भविष्यति

## भाष्यम्

प्राज्ञ एवायं भवितुमर्हति । कस्मात्? अनुकृतेः । अनुकरणमनुकृतिः; यदेतत् "तमेव भान्तमनुभाति सर्वम्" इत्यनुभानम्, तत्प्राज्ञपरिग्रहेऽवकल्पते; "भारूपः सत्यसंकल्पः" इति हि प्राज्ञमात्मानमामनन्ति; न तु तेजोधातुं कंचित्सूर्यादयोऽनुभान्तीति प्रसिद्धम्; समत्वाच्च तेजोधातूनां सूर्यादीनां न तेजोधातुमन्यं प्रत्यपेक्षास्ति, यं भान्तमनुभायुः । न हि प्रदीपः प्रदीपान्तरमनुभाति । यदप्युक्तं समानस्वभावकेष्वनुकारो दृश्यत इति, नायमेकान्तो नियमः; भिन्नस्वभावकेष्वपि ह्यनुकारो दृश्यते; यथा सुतप्तोऽयःपिण्डोऽग्न्यनुकृतिरग्निं दहन्तमनुदहति, भौमं वा रजो वायुं वहन्तमनुवहतीति अनुकृतेरित्यनुभानमसूसुचत् । तस्य चेति चतुर्थं पादमस्य श्लोकस्य सूचयति । "तस्य भासा सर्वमिदं विभाति" इति तद्धेतुकं भानं सूर्यादेरुच्यमानं प्राज्ञमात्मानं गमयति । "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति हि प्राज्ञमात्मानमामनन्ति । तेजोऽन्तरेण सूर्यादितेजो विभातीत्य-

## प्रकटार्थविवरणम्

प्रतिज्ञापदमध्याहृत्य सौत्रं हेतुं योजयति—प्राज्ञ एवायमिति ॥ यदि सतिसप्तम्यङ्गीकारेण कदाचित्सूर्यादेः यस्मिन् सति भानं न भविष्यति स तेजोधातुः परिगृह्यते तदा तदनुभानं नोपपद्यते[1]; न ह्यभिभावुकानुकारः कचित् प्रसिद्धः; अतः सूर्याद्यविरोधी परमात्मैवेह विवक्षित इति भावः । किं च प्रसिद्धावद्योतकेन सर्वनाम्ना परामर्शो वाक्यान्तरसिद्धपरमात्मपरिग्रह एव युक्तः, नाप्रसिद्धतेजोधातुपरिग्रह इत्याह—[2]भारूप इत्यादिना ॥ सूर्यादयो न तेजोधातुमनुभान्ति, तदवान्तरजातीयत्वात् प्रदीपवदित्याह—समत्वाच्चेति ॥ परोक्तं व्यभिचारेण परिहरति—नायमेकान्त इति ॥ सूत्रस्यैकं भागं व्याख्याय भागान्तरमवतारयति—अनुकृतेरितीति ॥ पूर्वं सर्वशब्दं प्रकृतविषयं परिगृह्य

१. TM and A. नोपपद्येत   २. TM. भूतरूपं

भाष्यम्

प्रसिद्धं विरुद्धं च; तेजोऽन्तरेण तेजोऽन्तरस्य प्रतिघातात्। अथ वा न सूर्यादीनामेव श्लोकपरिपठितानामिदं तद्धेतुकं विभानमुच्यते? किं तर्हि? "सर्वमिदम्" इत्यविशेषश्रुतेः सर्वस्यैवास्य नामरूपक्रियाकारकफलजातस्य याभिव्यक्तिः, सा ब्रह्मज्योतिःसत्तानिमित्ता; यथा सूर्यादिज्योतिःसत्तानिमित्ता सर्वस्य रूपजातस्याभिव्यक्तिः, तद्वत्। "न तत्र सूर्यो भाति" इति च तत्रशब्दमाहरन्प्रकृतग्रहणं दर्शयति। प्रकृतं च ब्रह्म "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम्" इत्यादिना; अनन्तरं च

"हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः॥" इति।

कथं तज्ज्योतिषां ज्योतिरित्यत इदमुत्थितम्—"न तत्र सूर्यो भाति" इति। यदप्युक्तं सूर्यादीनां तेजसां भानप्रतिषेधस्तेजोधातावेवान्यस्मिन्नवकल्पते, सूर्य इवेतरेषामिति; तत्र स एव तेजोधातु-

प्रकटार्थविवरणम्

व्याख्यातम्। इदानीं सर्वशब्दस्यासङ्कुचितवृत्तितामुपादाय व्याचष्टे—अथ वेत्यादिना॥ किं च प्रकरणादपि ब्रह्मैव ग्राह्यमित्याह—न तत्र सूर्यो भातीति चेति॥ किं च स्पष्टं ब्रह्माभिधायकपूर्वमन्त्रस्याकाङ्क्षापूरकत्वादस्त्युत्तरो मन्त्रो ब्रह्मपर इत्याह—अनन्तरं चेत्यादिना॥ हिरण्मये ज्योतिर्मये; अन्नमयाद्यपेक्षया परे कोशे आनन्दमये; पुच्छप्रतिष्ठाभूतं यत् ब्रह्म; विरजमागन्तुकमलरहितम्; निष्कलं निरवयवं तच्छुभ्रं स्वभावतो निर्मलम्; ज्योतिषां सूर्यादीनां ज्योतिर्भासकम्; तच्चात्मविदां अनुभवसिद्धमित्यर्थः। सूर्याभिभावके तेजोधातौ प्रमाणान्तरसिद्धे सति तस्येह ग्रहणं न्याय्यं न वेति चिन्तावतारः स्यात्; तत्सद्भावे प्रमाणाभावात् स एव नास्तीत्याह— तत्र स एवेति॥ एवं तावत्परोक्तं निरस्य इदानीं त [illegible] विषयसप्तमीयं तं सूर्यादयो न भास-

१. T[1]. नास्तरं　　२. A omits न्याय्यं

भाष्यम्

रन्यो न संभवतीत्युपपादितम् । ब्रह्मण्यपि चैषां भानप्रतिषेधोऽवकल्पते; यतो यदुपलभ्यते तत्सर्वं ब्रह्मणैव ज्योतिषोपलभ्यते; ब्रह्म तु नान्येन ज्योतिषोपलभ्यते स्वयं ज्योतिःस्वरूपत्वात्, येन सूर्यादयस्तस्मिन्भायुः; ब्रह्म ह्यन्यद्व्यनक्ति, न तु ब्रह्मान्येन व्यज्यते। "आत्मनैवायं ज्योतिषास्ते" "अगृह्यो न हि गृह्यते" इत्यादिश्रुतिभ्यः ॥

## अपि च स्मर्यते ॥ १-३-२३ ॥

अपि चेदृग्रूपं प्राज्ञस्यैवात्मनः स्मर्यते भगवद्गीतासु—

"न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥" इति,
"यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥" इति च ॥

## शब्दादेव प्रमितः ॥ १-३-२४ ॥

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" इति श्रूयते । तथा
"अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥ एतद्वै तत्" इति च ।

प्रकटार्थविवरणम्

यन्तीति णिजर्थाध्याहारेण सूर्यादेरगोचरः स्वयंप्रकाशः सर्वस्य चिदाभासेन भासकः परमात्मात्र प्रतिपाद्य इति रहस्यमाह—ब्रह्मण्यपि चैषामिति ॥

अपि च स्मर्यते ॥

णिजर्थाध्याहारेण सूर्याद्यविषयत्वे स्मृतिसंवादमाह — अपि चेदृग्रूपमिति ॥ सर्वाभासकत्वेऽपि स्मृतिसंवादमाह—यदादित्यगतमिति ॥ मामकं मदीयं यच्चैतन्यज्योतिः, सत्ता[तत्सत्ता]धीनसद्भावत्वादित्यर्थः ॥

शब्दादेव प्रमितः ॥

काण्ववाक्यं पठति— अङ्गुष्ठमात्र इति ॥ आत्मनि शरीरे मध्ये हृदये अधूमकं ज्योतिरिवाप्रकम्प्यप्रकाशरूपः कालत्रयपरिच्छेद्यस्य नियन्ता

## भाष्यम्

तत्र योऽयमङ्गुष्ठमात्रः पुरुषः श्रूयते स किं विज्ञानात्मा, किं वा परमात्मा इति संशयः। तत्र परिमाणोपदेशात्तावद्विज्ञानात्मेति प्राप्तम्। न ह्यनन्तायामविस्तारस्य परमात्मनोऽङ्गुष्ठपरिमाणमुपपद्यते; विज्ञानात्मनस्तूपाधिमत्त्वात्संभवति कयाचित्कल्पनयाङ्गुष्ठमात्रत्वम्। स्मृतेश्च—

"अथ सत्यवतः कायात्पाशबद्धं वशं गतम्।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्॥" इति॥

न हि परमेश्वरो बलाद्यमेन निष्कष्टुं शक्यः; तेन तत्र संसार्यङ्गुष्ठमात्रो निश्चितः; स एवेहापीत्येवं प्राप्ते ब्रूमः—

परमात्मैवायमङ्गुष्ठमात्रपरिमितः पुरुषो भवितुमर्हति। कस्मात्? शब्दात्, "ईशानो भूतभव्यस्य" इति। न ह्यन्यः परमेश्वराद्भूतभव्यस्य निरङ्कुशमीशिता। "एतद्वै तत्" इति च प्रकृतं पृष्टमिहानुसंदधाति; एतद्वै तद्यत्पृष्टं ब्रह्मेत्यर्थः। पृष्टं चेह ब्रह्म

"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद॥" इति।

"शब्दादेव" इत्यभिधानश्रुतेरेवेशान इति परमेश्वरोऽयं गम्यत इत्यर्थः॥

## प्रकटार्थविवरणम्

स एवाद्य वर्तते; श्वोऽपि स एव भविता; एतद्वै तद्यत्पृष्टं नचिकेतसा। परिमाणेशानशब्दाभ्यां संशयमाह—तत्र योऽयमिति॥ पूर्वत्रानुमानादिलिङ्गेन विषयसप्तमीं परिगृह्य णिजर्थाध्याहारेण सूर्यादेरगोचरो ब्रह्मेत्युक्तम्; तथेहापि परिमाणलिङ्गेन जीवं परिगृह्येशानोऽस्मीति चेतो धारयेदिति विध्यध्याहारेणोपासनपरं वाक्यमिति पूर्वपक्षमाह—तत्र परिमाणोपदेशादिति॥ किं च स्मृतिसंवादादप्यङ्गुष्ठमात्रो जीव इत्याह—स्मृतेश्चेति॥ प्रकरणानुगृहीतेन निरङ्कुशैश्वर्यलिङ्गेन केवलं जीवलिङ्गमवबाध्य पारमेश्वरमेवेदं वाक्यमिति सिद्धान्तमाह—परमात्मैवायमित्यादिना॥ [1]एवकारेण श्रुतिरेव लिङ्गबाधिकेति सूचितेत्याह—शब्दादेवेति॥

१. A omits एव......रित्यादिना

भाष्यम्

कथं पुनः सर्वगतस्य परमात्मनः परिमाणोपदेश इत्यत्र ब्रूमः—

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ १-३-२५ ॥

सर्वगतस्यापि परमात्मनो हृदयेऽवस्थानमपेक्ष्याङ्गुष्ठमात्रत्वमिदमुच्यते; आकाशस्येव वंशपर्वापेक्षमरत्निमात्रत्वम् । न ह्यञ्जसातिमात्रस्य परमात्मनोऽङ्गुष्ठमात्रत्वमुपपद्यते । न चान्यः परमात्मन इह ग्रहणमर्हति ईशानशब्दादिभ्य इत्युक्तम् । ननु प्रतिप्राणिभेदं हृदयानामनवस्थितत्वात्तदपेक्षमप्यङ्गुष्ठमात्रत्वं नोपपद्यत इत्यत उत्तरमुच्यते—मनुष्याधिकारत्वादिति; शास्त्रं ह्यविशेषप्रवृत्तमपि मनुष्यानेवाधिकरोति, शक्तत्वात्, अर्थित्वात्, अपर्युदस्तत्वात्, उपनयनादिशास्त्राच्चेति वर्णितमेतदधि-

प्रकटार्थविवरणम्

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥

शङ्कानिरासकतया सूत्रमवतारयति—कथं पुनरित्यादिना ॥ अरत्निः समुष्टिः करः । स एव सकनिष्ठिकोऽरत्निः । उक्तेऽर्थे जैमिनीयतन्त्रसंमतिमाह—वर्णितमेतदिति ॥ अधिकारलक्षणे षष्ठे अध्याये वर्णितमिदं मनुष्याधिकारत्वं शास्त्रस्य । तथा हि—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादि श्रूयते । तत्र संशयः—किं तिर्यगादीनामप्यधिकारः, किं वा मनुष्याणामेवेति । तत्र तिर्यगादीनामपि सुखप्राप्तिदुःखपरिहारयोः अर्थित्वादविशेषश्रवणाच्च अस्त्यधिकार इति पूर्वः पक्षः । सिद्धान्तस्तु तिर्यगादीनां विधिनिषेधविवेककारणविधुरतया द्रव्यहीनतयानुष्ठानासमर्थत्वान्नास्त्यधिकार इति निर्णीतम् । तथा त्रैवर्णिकेष्वपि यस्याप्रतिसमाधेयमङ्गवैकल्यं न तस्याधिकारः, यथा बाधिरस्य प्रैषश्रवणे, पङ्गोर्विष्णुक्रमणेषु, अन्धस्याज्यावेक्षणे । तदेवं

१. T, T¹, P and TM omit स्वर्गकामः

२. T¹, P, TM and A add चाधिकारं प्रतिपाद्य

३. TM. तमेवं

भाष्यम्

कारलक्षणे । मनुष्याणां च नियतपरिमाणः कायः; औचित्येन नियतपरिमाणमेव चैषामङ्गुष्ठमात्रं हृदयम्; अतो मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्यहृदयावस्थानापेक्षमङ्गुष्ठमात्रत्वमुपपन्नं परमात्मनः । यदप्युक्तम्—परिमाणोपदेशात्स्मृतेश्च संसार्येवायमङ्गुष्ठमात्रः प्रत्येतव्य इति, तत्प्रत्युच्यते—"स आत्मा तत्त्वमसि" इत्यादिवत् संसारिण एव सतोऽङ्गुष्ठमात्रस्य ब्रह्मत्वमिदमुपदिश्यत इति । द्विरूपा हि वेदान्तवाक्यानां प्रवृत्तिः—क्वचित्परमात्मस्वरूपनिरूपणपरा; क्वचिद्विज्ञानात्मनः परमात्मैकत्वोपदेशपरा । तदत्र विज्ञानात्मनः परमात्मनैकत्वमुपदिश्यते; नाङ्गुष्ठमात्रत्वं कस्यचित् । एतमेव चार्थं परेण स्फुटीकरिष्यति—

"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ।
तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतम् ॥"

इति ॥

प्रकटार्थविवरणम्

सामर्थ्यादियुक्तस्याधिकार इति अस्तु मनुष्याधिकारं शास्त्रम्, ततः किमित्याशङ्क्याह—मनुष्याणां चेति ॥ पूर्वमङ्गुष्ठमात्रशब्द उपाधिं निमित्तीकृत्य परमात्मनं लक्षयतीत्युक्तम् । इदानीं अङ्गुष्ठमात्रशब्दो जीववाचक एवास्तु; तथापि परमात्मपरमेवेदं वाक्यमित्येतद्दर्शयितुं उपक्रमते — यदप्युक्तमित्यादिना ॥ इतश्चायमेव वाक्यार्थः; स्पष्टेनास्पष्टनिर्णयादित्याह—एतमेव चार्थमिति ॥ धैर्येणेति ॥ शान्त्यादिगुणमवलम्ब्य प्रवृहेत् पृथक्कुर्यात्[1], इत्यन्वयव्यतिरेकाभ्यां परिशोधयेत् । तं च विविक्तं चित्प्रतिबिम्बं शुद्धममृतं बिम्बस्थानीयं ब्रह्मैव जानीयादित्यर्थः ॥

१. P adds इति

भाष्यम्

## तदुपर्यपि बादरायणः संभवात् ॥ १-३-२६ ॥

अङ्गुष्ठमात्रश्रुतिर्मनुष्यहृदयापेक्षया, मनुष्याधिकारत्वाच्छास्त्रस्येत्युक्तम्; तत्प्रसङ्गेनेदमुच्यते। बाढम्, मनुष्यानधिकरोति शास्त्रम्; न तु मनुष्यानेवेतीह ब्रह्मज्ञाने नियमोऽस्ति। तेषां मनुष्याणामुपरिष्टाद्ये देवादयः, तानप्यधिकरोति शास्त्रमिति बादरायण आचार्यो मन्यते। कस्मात्? संभवात्। संभवति हि तेषामप्यर्थित्वाद्यधिकारकारणम्; तत्रार्थित्वं तावन्मोक्षविषयं देवादीनामपि संभवति विकारविषयविभूत्यनित्यत्वालोचनादिनिमित्तम्; तथा सामर्थ्यमपि तेषां संभवति, मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वाद्यवगमात्; न च तेषां कश्चि-

प्रकटार्थविवरणम्

### तदुपर्यपि बादरायणः संभवात् ॥

इह निर्गुणब्रह्मविद्या विषयः। तस्यां किं देवादीनामप्यधिकारोऽस्त्युत नास्तीत्यर्थित्वसामर्थ्यादिसंभवासंभवाभ्यां विचारः। ननु समन्वयाध्याये नायं विचारो युक्तः, अधिकारचिन्तायाः समन्वयेऽनुपयोगादित्याशङ्क्य प्रासङ्गिकत्वमाह—अङ्गुष्ठमात्रश्रुतिरिति ॥ सिद्धान्तेनैवोपक्रमते—तेषां मनुष्यणामिति ॥ ननु देवानां विचित्रानन्दभोगभागिनां वैराग्याभावान्न मोक्षेऽर्थित्वमित्याशङ्क्याह — तत्रार्थित्वं तावदिति ॥ वैषयिकसुखस्यानित्यत्वपारतन्त्र्यादिदोषवत्त्वेन तत्र वैराग्योपपत्तौ परमपुरुषार्थत्वेन मोक्षेऽर्थित्वमुपपन्नम्। ननु इन्द्रायेति चतुर्थ्यन्तपदप्रयोग एव देवता; तस्याश्च विग्रहाभावान्नास्ति ज्ञानसाधनानुष्ठाने तथा सामर्थ्यमित्याशङ्क्याह—तथा सामर्थ्यमपीति ॥ ननु "नावेदविन्मनुते तं बृहन्तम्" इत्यादेः तेषां वेदाभावेन प्रतिषेध इत्याशङ्क्याह—न च तेषामिति ॥ जन्मान्तराधीतवेदस्मरणसंभवादित्यर्थः। ननु

१. T omits तत्रार्थित्वं ... शङ्क्याह

२. TM and A. कस्मात्

३. A omits तथा ... विकार इत्याशङ्क्याह

भाष्यम्

त्प्रतिषेधोऽस्ति ; न चोपनयनशास्त्रेणैषामधिकारो निवर्त्येत, उपनयनस्य वेदाध्ययनार्थत्वात्, तेषां च स्वयंप्रतिभातवेदत्वात् । अपि चैषां विद्याग्रहणार्थं ब्रह्मचर्यादि दर्शयति—"एकशतं ह वै वर्षाणि मघवा-न्प्रजापतौ ब्रह्मचर्यमुवास", "भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्म" इत्यादि । यदपि कर्मस्वनधिकारकारणमुक्तम्—"न देवानां देवतान्तराभावात्" इति, "न ऋषाणामार्षेयान्तराभावात्" इति, न तद्विद्यास्वस्ति । न हीन्द्रादीनां विद्यास्वधिक्रियमाणानामिन्द्राद्युद्देशेन किंचित्कृत्यमस्ति ; न च भृग्वादीनां भृग्वादिसगोत्रतया ; तस्माद्देवादीनामपि विद्यास्वधिकारः केन वार्यते ? देवाद्यधिकारेऽप्यङ्गुष्ठमात्रश्रुतिः स्वाङ्गुष्ठापेक्षया न विरुध्यते ॥

प्रकटार्थविवरणम्

उपनीतस्य वैदिकानुष्ठाने अधिकारात् देवानां तदभावान्नाधिकार इत्याशङ्क्याह—न चोपनयनेति ॥ तर्ह्युपनयनस्य वैयर्थ्यं लिखितपाठेनापि वेदपरिचयात् इत्यप्यवाच्यम् "आचार्याधीनो वेदमधीष्व" इति नियमविधानात् । न च गुरुमुखादेव श्रुतो वेदः फलवदर्थज्ञानजनकः, स्मर्यमाणादपि सम्यगर्थावबोधदर्शनात् ; देवता जन्मान्तरानुभूतं न स्मरति, संसारित्वात् अस्मदादिवदित्यनुमानमप्रमाणम्[1] । पिशाचादीनां बालादिदेहानुप्रविष्टानां जन्मान्तराधीतवेदानुस्मरणोच्चारणादिदर्शनात् ; देवताया अपि तथा संभवात् ; संबन्धो भवतीति वैदिकसाधनानुष्ठानम् । श्रौतं च लिङ्गं साधनानुष्ठानेऽस्तीत्याह—अपि चेति ॥ ननु ब्रह्मविद्या देवादीन्नाधिकरोति, वेदार्थत्वात् अग्निहोत्रादिवत् । अग्निहोत्रादौ चानाधिकारकारणं वर्णितं पूर्वतन्त्रे । तत्राह—यदपीति ॥ अर्थित्वादिसंपन्नस्य पुरुषस्य फलवत्यस्ति[2] स्वाभाविकी प्रवृत्तिरिति न्यायेनानुगृहीतम् "तद्यो यो देवानां प्रत्यबुध्यत" इत्यादिब्रह्मविद्यासंबन्धलिङ्गमनुमानं बाधित्वाधिकारं गमयतीति भावः । ननु देवादीनामपि चेदधिकारः कथमङ्गुष्ठश्रुतिरित्याशङ्क्याह—देवाद्यधिकारेऽपीति ॥

१. A. देहप्रविष्टानां　　　२. T and T¹. फलवति

भाष्यम्

# विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ १-३-२७॥

स्यादेतत्—यदि विग्रहवत्त्वाद्यभ्युपगमेन देवादीनां विद्यास्वधिकारो वर्ण्येत, विग्रहवत्त्वादृत्विगादिवदिन्द्रादीनामपि स्वरूपसंनिधानेन कर्माङ्गभावोऽभ्युपगम्येत; तदा च विरोधः कर्मणि स्यात्; न हीन्द्रादीनां स्वरूपसंनिधानेन यागेऽङ्गभावो दृश्यते; न च संभवति, बहुषु यागेषु युगपदेकस्येन्द्रस्य स्वरूपसंनिधानतानुपपत्तेरिति चेत्, नायमस्ति विरोधः। कस्मात्? अनेकप्रतिपत्तेः। एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः संभवति। कथमेतदवगम्यते? दर्शनात्। तथा हि—"कति देवाः" इत्युपक्रम्य "त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा" इति निरुच्य "कतमे ते" इत्यस्यां पृच्छायाम् "महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः" इति निर्ब्रुवती श्रुतिरेकैकस्य देवतात्मनो युगपदनेकरूपतां दर्शयति। तथा त्रयस्त्रिंशतो-

प्रकटार्थविवरणम्

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥

मन्त्रादिप्रामाण्यावष्टम्भेन विग्रहवत्त्वमङ्गीकृत्य पूर्वमधिकारो निरूपितः। तेषां चान्यपराणामविरोधे प्रामाण्यमिष्टम्। विद्यते चेहाविरोध इत्याह—स्यादेतदिति ॥ योग्यानुपलब्ध्या संप्रदानकारकदेवताभावे निश्चिते अननुष्ठानमेव स्यादृत्विगभाव इवेति भावः। किं च युगपदेकस्य कर्णाटलाटादिदेशगतहविर्भोक्तृत्वमपि न जाघटतीत्याह — न च संभवतीति ॥ सिद्धान्तभागमवतारयति—नायमस्तीति ॥ शिलोपश्छान्दसः त्रीणि शतानीत्यर्थे। "अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रः प्रजापतिश्च" इति त्रयस्त्रिंशद्देवाः। पुनः शाकल्येन कति देवा इति पृष्टे षडेवेति याज्ञवल्क्यस्योत्तरम्। षण्णामग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां महिमानस्त्रयस्त्रिंशद्देवाः, न ततो

१. A. मद्दोः

### भाष्यम्

ऽपि षडाद्यन्तर्भावक्रमेण "कतम एको देव इति प्राणः" इति प्राणैकरूपतां देवानां दर्शयन्ती तस्यैवैकस्य प्राणस्य युगपदनेकरूपतां दर्शयति। तथा स्मृतिरपि—

"आत्मनो वै शरीराणि बहूनि भरतर्षभ।
योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत्॥
प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत्।
संक्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिव॥"

इत्येवंजातीयका प्राप्ताणिमाद्यैश्वर्याणां योगिनामपि युगपदनेकशरीरयोगं दर्शयति; किमु वक्तव्यमाजानसिद्धानां देवानाम्? अनेकरूपप्रतिपत्तिसंभवाच्चैकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छतीति। परैश्च न दृश्यते, अन्तर्धानादिक्रियायोगात्—इत्युपपद्यते॥

### प्रकटार्थविवरणम्

भिद्यन्ते। पुनरप्यग्न्यादिकमेकीकृत्य त्रयो लोका एव[1] त्रयो देवा उक्ताः। पुनरन्नप्राणौ द्वावेव देवौ त्रयाणां तत्रान्तर्भावात्; पुनरप्यध्यर्ध एको देवः; सन्नि[2] हि वायौ[3] सर्वमिदं[4]मध्याप्नौ[5] वृद्धिं प्राप्नोतीति। एवं षडाद्यन्तर्भावः। श्रुतिषु दर्शनादिति व्याख्याय स्मृतिषु दर्शनादिति व्याचष्टे—तथा स्मृतिरपीति॥

"अणिमा लघिमा चैव महिमा प्राप्तिरीशिता।
प्राकाम्यं च वशित्वं च यत्र कामावसायिता॥"

आजानो देवलोकः। तत्रैवोत्पन्नानां भवत्येवमनेकरूपप्राप्तिः। ततः प्रकृते किं[6] परिहृतमित्याशङ्क्याह—अनेकरूपप्रतिपत्तीति॥ अयोग्यत्वाच्च योग्यानुपलब्धिविरोधोऽपि नास्तीत्याह—परैश्चेति॥ सन्निधानेनैवाङ्गत्वमिति

१. A omits एव
२. T, P, TM and A. सन्ति
३. T, P, TM and A. वायो
४. A omits इदं
५. T¹. मध्यमौ
६. T, T¹ and TM. प्रकृतेरिदं परि

भाष्यम्

"अनेकप्रतिपत्तेर्दर्शनात्" इत्यस्यापरा व्याख्या—विग्रहवतामपि कर्माङ्गभावचोदनास्वनेका प्रतिपत्तिर्दृश्यते; कचिदेकोऽपि विग्रहवाननेकत्र युगपदङ्गभावं न गच्छति, यथा बहुभिर्भोजयद्भिर्नैको ब्राह्मणो युगपद्भोज्यते; कचिच्चैकोऽपि विग्रहवाननेकत्र युगपदङ्गभावं गच्छति, यथा बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो युगपन्नमस्क्रियते; तद्वदिहोद्देशपरित्यागात्मकत्वाद्यागस्य विग्रहवतीमप्येकां देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत्परित्यक्ष्यन्तीति विग्रहवत्त्वेऽपि देवतानां न किंचित्कर्मणि विरुध्यते ॥

## शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ १-३-२८ ॥

मा नाम विग्रहवत्त्वे देवादीनामभ्युपगम्यमाने कर्मणि कश्चिद्विरोधः प्रसञ्जि; शब्दे तु विरोधः प्रसज्येत । कथम्? औत्पत्तिकं हि शब्दस्यार्थेन संबन्धमाश्रित्य "अनपेक्षत्वात्" इति वेदस्य प्रामाण्यं स्थापितम् । इदानीं तु विग्रहवती देवताभ्युपगम्यमाना यद्यप्यैश्वर्ययोगाद्युगपदनेककर्मसंबन्धीनि हवींषि भुञ्जीत, तथापि विग्रहयोगादस्मदादिवज्जननमरणवती सेति, नित्यस्य शब्दस्य नित्येनार्थेन नित्ये

प्रकटार्थविवरणम्

सर्वत्र नैकरूपमेव प्रतिपत्तिः, व्यवहितमप्युद्दिश्य बहूनां नमस्करणदर्शनादित्यर्थान्तरमाह—अनेकप्रतिपत्तेरिति ॥

शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥

कर्मण्यविरोधमङ्गीकृत्य विरोधान्तरमुद्भावयति[1]—मा नामेति ॥ औत्पत्तिकसूत्रे हि वाच्यवाचकसंबन्धो नित्योऽङ्गीकृतः । अस्यैकं नामेति द्रव्यमानिर्दिश्य सङ्केतेऽवश्यमिदं तद्वाच्ययोः नैसर्गिकसंबन्धस्याभ्युपगन्तव्यत्वादित्याद्युपपत्त्या[2] । यदा च पौरुषेयः संबन्धो न भवति तदा पुरुषबुद्ध्यपेक्षाभावा-

१. T, P, TM and A. थान्तरमपनयति २. T. इत्याद्युपलब्ध्या

भाष्यम्

संबन्धे प्रतीयमाने यद्वैदिके शब्दे प्रामाण्यं स्थितम्, तस्य विरोधः स्यादिति चेत्, नायमप्यस्ति विरोधः; कस्मात्? अतः प्रभवात्। अत एव हि वैदिकाच्छब्दाद्देवादिकं जगत्प्रभवति ॥

ननु "जन्माद्यस्य यतः" इत्यत्र ब्रह्मप्रभवत्वं जगतोऽवधारितम्, कथमिह शब्दप्रभवत्वमुच्यते? अपि च यदि नाम वैदिकाच्छब्दादस्य प्रभवोऽभ्युपगतः, कथमेतावता विरोधः शब्दे परिहृतः? यावता वसवो रुद्रा आदित्या विश्वे देवा मरुत इत्येतेऽर्था अनित्या एव, उत्पत्तिमत्त्वात्; तदनित्यत्वे च तद्वाचिनां वैदिकानां वस्वादिशब्दानामनित्यत्वं केन निवार्यते? प्रसिद्धं हि लोके देवदत्तस्य पुत्र उत्पन्ने यज्ञदत्त इति तस्य नाम क्रियत इति; तस्माद्विरोध एव शब्द इति चेत्, न; गवादिशब्दार्थसंबन्धनित्यत्वदर्शनात्। न हि गवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वं स्यात्। द्रव्यगुणकर्मणां हि व्यक्तय एवोत्पद्यन्ते, नाकृतयः। आकृतिभिश्च शब्दानां संबन्धः, न व्यक्तिभिः, व्यक्तीनामानन्त्यात्संबन्धग्रहणानुपपत्तेः।

प्रकटार्थविवरणम्

दनपेक्षलक्षणं प्रामाण्यं स्थापितम्। "तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" इति सूत्रावयवेन, तत्तव विरुध्यते, संबन्ध्यनित्यत्वेन संबन्धानित्यत्वादिति भावः। सिद्धान्तत्वेन[1] सूत्रभागमवतारयति— नायमप्यस्तीति ॥ जगत्कारणत्वेन प्रागेव सिद्धत्वात् शब्दानां नानित्यत्वमित्यर्थः ॥

पूर्वापरविरोधं शङ्कते— नन्विति ॥ हेतुश्चायमसाधक इत्याह— अपि चेति ॥ न वस्वादिव्यक्तयो वस्वादिशब्दवाच्याः, किं तु सामान्यानि तानि, गोत्ववत्; अतो नार्थानित्यत्वेन शब्दानित्यत्वमिति परिहरति— न गवादिशब्दार्थेति ॥ ननु व्यक्तिभिरेव किं न संबन्ध इत्याशङ्क्याह— व्यक्तीनामानन्त्यादिति ॥ सामान्यद्वारेण संबन्धग्रहणं चेत्, तदेव तर्ह्यस्तु शक्तिगोचरः; लाघवाव्यभिचाराभ्याम्; तन्नान्तरीयसिद्धत्वेनानन्यलभ्यत्वाभावाच्च न शक्ति[व्यक्तिशक्ति]कल्पनावकाशः ॥

१. TM. सिद्धान्तत्वात्

भाष्यम्

व्यक्तिषूत्पद्यमानास्वप्याकृतीनां नित्यत्वान्न गवादिशब्देषु कश्चिद्विरोधो दृश्यते । तथा देवादिव्यक्तिप्रभवाभ्युपगमेऽप्याकृतिनित्यत्वान्न कश्चिद्वस्वादिशब्देषु विरोध इति द्रष्टव्यम् । आकृतिविशेषस्तु देवादीनां मन्त्रार्थवादादिभ्यो विग्रहवत्त्वाद्यवगमादवगन्तव्यः । स्थानविशेषसंबन्धनिमित्ता चेन्द्रादिशब्दाः सेनापत्यादिशब्दवत् । ततश्च यो यस्तत्तत्स्थानमधितिष्ठति स स इन्द्रादिशब्दैरभिधीयत इति न दोषो भवति । न चेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववदुपादानकारणाभिप्रायेणोच्यते । कथं तर्हि, स्थिते वाचकात्मना नित्ये शब्दे नित्यार्थसंबन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिः 'अतः प्रभवः' इत्युच्यते । कथं पुनरव-

प्रकटार्थविवरणम्

व्यक्तयो व्यवहारार्हालक्षणावर्त्मना पदात् ।
औपाधिकस्तु देवत्वादि जात्यभावे भवेद्बलात् ॥

ननु लक्षणया व्यक्तिप्रतीतिरप्यङ्गीकृता चेत्, तर्हि लाक्षणिकार्थस्यानित्यत्वेन शब्दानित्यत्वमित्याशङ्क्याह— व्यक्तिषु त्विति ॥ "युगपदनेकत्र कार्त्स्न्येन वर्तमाना जातिः" इति लक्षणादिन्द्रादीनां पूर्वापरव्यक्त्यनुगता जातिः न विरुध्यत इति भावः । प्रयोगोऽपि—वस्वादिशब्दा जातिवाचकाः, बहुषु प्रयुज्यमानाखण्डशब्दत्वात्, पटादिशब्दवत् । तथा जातिः स्वतन्त्रा, अनेकार्थानुगतत्वात्, सर्वगतत्वाद्वा, मृदाकाशवदिति । पिण्डस्य सर्वगतत्वेऽपि नष्टव्यक्तिदेशे स्वातन्त्र्येणावस्थानं विनाशो वा स्यादमूर्तस्य स्वातन्त्र्येण गमनादर्शनात् । अतः सर्वव्यक्त्युच्छित्तावपि अवान्तरप्रलये जातिसद्भावान्न वाच्यवाचकसंबन्धनित्यताव्याघातः ; किं त्वेकशक्तित्वेऽपि नावान्तरप्रलये कश्चिद्विरोध इत्याह— स्थानविशेषेति ॥ यश्चोद्भावितः पूर्वापरविरोधः तं प्रत्याह—न चेदमिति ॥ उत्तरं पदमवतारयति—कथं पुनरिति ॥

१. T¹. वस्वादिजात्य-
२. T¹. लाक्षणिकार्यत्वावि
A. लक्षणिकत्वानि
३. T¹. न
४. TM. किं त्वोत्पत्तिशक्ति
A. किं तेने[नैक]शक्ति

भाष्यम्

गम्यते शब्दात्प्रभवति जगदिति ? प्रत्यक्षानुमानाभ्याम्; प्रत्यक्षं हि श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात्; अनुमानं स्मृतिः, प्रामाण्यं प्रतिसापेक्षत्वात्; ते हि शब्दपूर्वां सृष्टिं दर्शयतः। "एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजाः" इति श्रुतिः। तथान्यत्रापि "स मनसा वाचं मिथुनं समभवत्" इत्यादिना तत्र तत्र शब्दपूर्विका सृष्टिः श्राव्यते। स्मृतिरपि—

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥" इति।

उत्सर्गोऽप्ययं वाचः संप्रदायप्रवर्तनात्मको द्रष्टव्यः, अनादिनिधनाया अन्यादृशस्योत्सर्गस्यासंभवात्। तथा—

प्रकटार्थविवरणम्

"एते असृग्रमिन्दवस्तिरःपवित्रमाशवः।
विश्वान्यभि सौभगा॥"

इत्यस्या ऋचः पदशो देवादिकं जागत्ससर्ज प्रजापतिः। एतानि च पदानि कथंचित् देवादिप्रत्यायकत्वात् तत्र प्रयुक्तानि। तथा हि—एतच्छब्दस्य सर्वनाम्नः सर्वदैकरूपत्वेन देवानामुपस्थापकत्वम्। न हि कदाचिन्नव वसवः। उक्तं हि—"तस्माद्यावन्त एवाग्रे देवास्तावन्त इदानीम्" इति। अन्वहं सृजत इत्यसृग्रम्। अस्माच्छब्दान्मनुष्याननुस्मृत्य ससर्ज। चन्द्रलोकनिवासिनः पितरः इन्दव इवेतीन्दवः। इन्दवशब्दात् पितॄननुस्मृत्य ससर्ज। ग्रहेषु सोमाधारपात्रेषु तिरोभावेन दशापवित्रं निधीयते। अस्ति च विधिः "दशापवित्रेण ग्रहान् पायति" इति। तेन तिरःपवित्रशब्दात् ग्रहान् बुद्धिस्थान् ससर्ज। अश्नुवते व्याप्नुवन्ति। "ऋचः सामानि" इति आशवशब्दात् बुद्धिस्थं स्तोत्रान्तरम्। विशन्तीति विश्वानि। शस्त्रशब्दवाच्या ऋचः। प्रगीतं हि शस्त्रं यादृच्छिकत्वात्। "अभि सौभगा" इति शब्दादन्याः पश्वाद्याः प्रजा बुद्धिस्थाः

१. A. प्रापयतीति    २. TM. ग्रहात्

भाष्यम्

"नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥" इति ॥
"सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥" इति च ।

अपि च चिकीर्षितमर्थमनुतिष्ठंस्तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षमेतत् ; तथा प्रजापतेरपि स्रष्टुः पूर्वं वैदिकाः शब्दा मनसि प्रादुर्बभूवुः, पश्चात्तदनुगतानर्थान्ससर्जेति गम्यते । तथा च श्रुतिः—"स भूरिति व्याहरत् । स भूमिमसृजत" इत्येवमादिका भूरादिशब्देभ्य एव मनसि प्रादुर्भूतेभ्यो भूरादिलोकान्सृष्टान्दर्शयति ॥

किमात्मकं पुनः शब्दमभिप्रेत्येदं शब्दप्रभवत्वमुच्यते ? स्फोटमित्याह । वर्णपक्षे हि तेषामुत्पन्नप्रध्वंसित्वान्नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यनुपपन्नं स्यात् ; उत्पन्नप्रध्वंसिनश्च वर्णाः, प्रत्युच्चारणमन्यथा चान्यथा च प्रतीयमानत्वात् ; तथा हि—अदृश्यमानोऽपि पुरुषविशेषोऽध्ययनध्वनिश्रवणादेव विशेषतो निर्धार्यते 'देवदत्तोऽयमधीते'

प्रकटार्थविवरणम्

ससर्जेति छन्दोगब्राह्मणवाक्यार्थः । प्रजापतिर्मनसा वाचं त्रयीलक्षणां मिथुनं मन्त्रब्राह्मणद्वन्द्वभूतं समभवत् अन्वभूत् । अव्यक्तरूपेण वा मनसा मिथुनीभूतां त्रयीविहितसृष्टिक्रममन्वालोचयदित्यर्थः । "प्रत्यक्षानुमानाभ्याम्" इत्यस्य प्रसिद्धार्थमाह—अपि चेत्यादिना ॥ प्रजापतिः शब्दविकल्पितं ससर्ज बुद्धिपूर्वकस्रष्टृत्वादस्मदादिवदित्यर्थः ॥

शब्दमेव निरूपयति—किमात्मकं पुनरिति ॥ वैयाकरण आह—स्फोटमिति ॥ स्फुट्यते व्यज्यते वर्णैरिति स्फोटः । स ह्यर्थसृष्टौ कारणं नित्यत्वात् ; न वर्णाः, तेषामनित्यत्वादित्यर्थः । ननु वर्णानित्यत्वमसिद्धमित्याशङ्क्याह—उत्पन्नप्रध्वंसिनश्चेति ॥ ननु उदात्तानुदात्तादिभावेन यो

भाष्यम्

'यज्ञदत्तोऽयमधीते' इति; न चायं वर्णविषयोऽन्यथात्वप्रत्ययो मिथ्याज्ञानम्, बाधकप्रत्ययाभावात् । न च वर्णेभ्योऽर्थावगतिर्युक्ता; न ह्येकैको वर्णोऽर्थं प्रत्याययेत्, व्यभिचारात्; न च वर्णसमुदायप्रत्ययोऽस्ति, क्रमवर्तित्वाद्वर्णानाम्; पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितोऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यतीति यद्युच्येत, तन्न; संबन्धग्रहणापेक्षो हि शब्दः स्वयं प्रतीयमानोऽर्थं प्रत्याययेत्, धूमादिवत्; न च पूर्ववर्णानुभवजनितसंस्कारसहितस्यान्त्यवर्णस्य प्रतीतिरस्ति, अप्रत्यक्षत्वात्संस्काराणाम्; कार्यप्रत्यायितैः संस्कारैः सहितोऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यतीति चेत्, न; संस्कारकार्यस्यापि स्मरणस्य

प्रकटार्थविवरणम्

वर्णेष्वन्यथात्वप्रत्ययः स विभ्रम इत्याशङ्क्याह—न चायमिति ॥ किं च वर्णेभ्योऽर्थावगत्यनुपपत्त्यापि स्फोटो वक्तव्य इत्याह—न च वर्णेभ्य इति ॥ एकैकवर्णोच्चारणेऽर्थप्रतीतेरदर्शनाद्वर्णान्तरोच्चारणस्य वैयर्थ्याच्चेत्यर्थः । अस्तु समुदितेभ्योऽर्थप्रत्ययः इत्याशङ्क्याह—न चेति ॥ वर्णानामुच्चारणस्य क्रमवत्त्वादुच्चारणानन्तरं योग्यानुपलब्ध्यभावावगमात् न समुदायप्रतीतिरित्यर्थः । यथाग्नेयादीनां क्रमवर्तिनामपि संस्कारद्वारा साहित्यं तथा वर्णेषु भविष्यतीत्याह— पूर्ववर्णजनितेति ॥ प्रत्यक्षदृष्टशब्दपरित्यागेन बालस्याप्रत्यक्षसंस्कारेषु व्युत्पत्त्यभावात् श्रोतुश्चार्थावगमात् पूर्वक्षणे संस्कारानवगमात् न संस्कारपक्षोऽपि समञ्जस इत्याह—तन्नेति ॥ वर्णस्मृतिलक्षणकार्यदर्शनात् तत्कारणसंस्कारावगमात् तत्सहितोऽन्त्यो वर्णः श्रोत्रात् प्रत्येष्यत इति चेन्नानवगतसंस्काराणां साहित्यं क्रमेणैवानुमानादित्याह—न संस्कारेति ॥ शब्दादर्थबोधप्रसिद्ध्यो स्फोटमुपपाद्य प्रत्य-

१. T and A omit न चायमिति... प्रत्यय इत्याशङ्क्याह

२. A. क्रमवत्त्वमुच्चा

३. TM and A omit तत्कार...मात्

४. T, P, A and TM. चेत्तदाप्यनवगत

५. TM and A. शब्दार्थ

६. T, T[1], P and TM add अनुपपत्त्या

भाष्यम्

क्रमवर्तित्वात्; तस्मात्स्फोट एव शब्दः। स चैकैकवर्णप्रत्ययाहितसंस्कारबीजेऽन्त्यवर्णप्रत्ययजनितपरिपाके प्रत्ययिन्येकप्रत्ययविषयतया झटिति प्रत्यवभासते; न चायमेकप्रत्ययो वर्णविषया स्मृतिः, वर्णानामनेकत्वादेकप्रत्ययविषयत्वानुपपत्तेः; तस्य च प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वान्नित्यत्वम्, भेदप्रत्ययस्य वर्णविषयत्वात्। तस्मान्नित्याच्छब्दात्स्फोटरूपादभिधायकात्क्रियाकारकफललक्षणं जगदभिधेयभूतं प्रभवतीति॥

"वर्णा एव तु शब्दः" इति भगवानुपवर्षः। ननूत्पन्नप्रध्वंसित्वं वर्णानामुक्तम्; तन्न, त एवेति प्रत्यभिज्ञानात्; सादृश्यात्प्रत्यभि-

प्रकटार्थविवरणम्

क्षमेव स्फोटे प्रमाणमाह — स चैकैकेति॥ वर्णप्रत्ययेनाहितो निक्षिप्तः संस्कार एव बीजं यस्मिन् अन्तःकरणे। तथान्त्यवर्णप्रत्ययेन जनितः परिपाकः पौष्कल्यं यस्मिन् तस्मिन्मनसि एकं पदम् एकं वाक्यमित्येवं शीघ्रं प्रत्यवभासत इत्यर्थः। नन्वेकं पदमित्यादावपि न वर्णातिरिक्तं किंचिदालम्बनं भातीत्याशङ्क्याह—न चायमिति॥ अनेकेष्वेकत्वबुद्धेः विभ्रमत्वप्रसङ्गात् पदादिबुद्धिगोचरः स्फोट एवेत्यर्थः। तस्य नित्यत्वे प्रामाण्यमाह—तस्य चेति॥ ननु तदेवेदं पदमिति प्रत्यभिज्ञानात् न नित्यत्वसिद्धिः, उदात्तादिभेदप्रत्ययादित्याशङ्क्याह—भेदप्रत्ययस्येति॥

आचार्यसंप्रदायमुपादाय सिद्धान्तमाह—वर्णा एव त्विति॥ गौरित्युक्ते गकारौकारविसर्गातिरिक्तस्य स्वतन्त्रस्य परतन्त्रस्य वा श्रोत्रेणाग्रहणादित्यर्थः। प्रत्यभिज्ञया च स्थायित्वावगमान्न क्षणिकत्वम्। तस्याः भ्रान्तत्वं शङ्कते—सादृश्यादिति॥ त एवामी केशा इति प्रत्यभिज्ञा भवेत्; भ्रान्तिः पुनर्वचन[वपन]ग्राहक-

१. A. विसर्जनीयाति-

२. TM. भ्रान्तः

३. A omits वपनग्राहकं

## भाष्यम्

ज्ञानं केशादिष्विवेति चेत्, न; प्रत्यभिज्ञानस्य प्रमाणान्तरेण बाधानुपपत्तेः; प्रत्यभिज्ञानमाकृतिनिमित्तमिति चेत्, न; व्यक्तिप्रत्यभिज्ञानात्; यदि हि प्रत्युच्चारणं गवादिव्यक्तिवदन्या अन्या वर्णव्यक्तयः प्रतीयेरन्, तत आकृतिनिमित्तं प्रत्यभिज्ञानं स्यात्; न त्वेतदस्ति; वर्णव्यक्तय एव हि प्रत्युच्चारणं प्रत्यभिज्ञायन्ते; द्विर्गोशब्द उच्चारित इति हि प्रतिपत्तिः; न तु द्वौ गोशब्दाविति। ननु वर्णा अप्युच्चारणभेदेन भिन्नाः प्रतीयन्ते, देवदत्तयज्ञदत्तयोरध्ययनध्वनिश्रवणादेव भेदप्रतीतेरित्युक्तम्; अत्राभिधीयते—सति वर्णविषये निश्चिते प्रत्यभिज्ञाने, संयोगविभागाभिव्यङ्ग्यत्वाद्वर्णानाम्, अभिव्यञ्जक-

## प्रकटार्थविवरणम्

प्रमाणविरोधात्; न तथा त एवैते गकारादय इति प्रत्यभिज्ञाया बाधकं किंचित् दृश्यत इत्याह—न प्रत्यभिज्ञानस्येति ॥ तर्हि गोत्वादिप्रत्यभिज्ञावद्गत्वादि-सामान्यविषयं प्रत्यभिज्ञानमस्तु; वर्णास्त्वनित्या एवेत्याह—प्रत्यभिज्ञानमाकृतिनिमित्तमिति ॥ सिद्धे निरुपाधिकव्यक्तिभेदे अनुगताकारः प्रत्ययः सामान्यमवलम्बते; अन्यथा घटाकाशो[1] महाकाश इत्यत्रापि प्रसङ्गात्; नेह व्यक्तिभेदे प्रमाणमस्ति। ततः 'सोऽयं देवदत्तः' इतिवत् 'त एवामी गकारादयः' इति प्रत्यभिज्ञा व्यक्तिमेवावलम्बत इत्याह—न व्यक्तिप्रत्यभिज्ञानादिति॥ अस्त्येव व्यक्तिभेदे प्रमाणमित्याह—ननु वर्णा अपीति॥ सत्यमस्ति भेदप्रत्ययः; तथापि प्रत्यभिज्ञाया निरपेक्षस्वरूपविषयत्वेन दुर्बलत्वाद्यथैकस्यामाकाशव्यक्तौ घटाकाशः कूपाकाश इति वर्तुलत्व[2]-दीर्घत्वादिप्रत्ययौ व्यञ्जकवैचित्र्यनिमित्तः, तथा व्यञ्जकवायुसंयोगविभाग-वैचित्र्यनिमित्तो वर्णेषु वैचित्र्यप्रत्यय इत्याह—अत्राभिधीयत इत्यादिना ॥ किं चानन्ता गकारव्यक्तयः कल्पनीयाः; तासु च प्रत्यभिज्ञानसिद्धये गत्वं सामान्यं कल्पनीयम्; तत्राप्युदात्तादिभेदप्रत्ययनिर्वाहाय परोपाधिकत्वं वक्त-

१. T, T¹ and P. पटा-    २. T¹, P, TM and A. वर्तुलत्वात्

## भाष्यम्

वैचित्र्यनिमित्तोऽयं वर्णविषयो विचित्रः प्रत्ययः, न स्वरूपनिमित्तः; अपि च वर्णव्यक्तिभेदवादिनापि प्रत्यभिज्ञानसिद्धये वर्णाकृतयः कल्पयितव्याः; तासु च परोपाधिको भेदप्रत्यय इत्यभ्युपगन्तव्यम्; तद्वरं वर्णव्यक्तिष्वेव परोपाधिको भेदप्रत्ययः, स्वरूपनिमित्तं च प्रत्यभिज्ञानमिति कल्पनालाघवम् । एष एव च वर्णविषयस्य भेदप्रत्ययस्य बाधकः प्रत्ययः, यत्प्रत्यभिज्ञानम् । कथं ह्येकस्मिन्काले बहूनामुच्चारयतामेक एव सन्गकारो युगपदनेकरूपः स्यात्—उदात्तश्चानुदात्तश्च स्वरितश्च सानुनासिकश्च निरनुनासिकश्चेति । अथ वा ध्वनिकृतोऽयं प्रत्ययभेदो न वर्णकृत इत्यदोषः । कः पुनरयं ध्वनिर्नाम? यो दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य; कर्णपथमवतरति प्रत्यासीदतश्च

## प्रकटार्थविवरणम्

व्यम्; ततो वरमेकस्यां गकारव्यक्तौ परोपाधिकत्वकल्पनमित्याह—अपि चेति ॥ नन्वबाधितव्यक्तिभेदप्रत्ययान्न कल्पनागौरवमित्याशङ्क्याह—एष एव चेति ॥ ननु बाधोऽगतिका गतिः । एकत्वं नानात्वं चास्त्वित्याशङ्क्याह—कथं ह्येकस्मिन्निति ॥ युगपदेकस्यानेकरूपत्वानुपपत्तितर्कसहकृतमेकत्वप्रत्यभिज्ञानं भेदप्रत्ययबाधकमिति भावः । पूर्वं हृत्कण्ठादिप्रदेशैः वाय्वसंयोगस्य व्यञ्जकत्वमङ्गीकृत्य भेदप्रत्ययो न वर्णस्वरूपनिबन्धन इत्यभाणि । स्वमतमिदानीमाह—अथ वेति ॥ यथा मणिकृपाणदर्पणादिषु प्रतिबिम्बितं मुखं वर्तुलत्वादितद्धर्मविशिष्टं भाति, तथा उदात्तादिधर्मवत्सु ध्वनिषु प्रतिबिम्बिता वर्णाः तद्धर्मत्वविशिष्टा भान्तीत्यर्थः । ध्वनिस्वरूपं प्रश्नपूर्वकमाह—कः पुनरयमिति ॥ वर्णातिरिक्तः शब्दो ध्वनिरित्यर्थः । स एव प्रत्यासन्नस्य पुंसो स्वधर्माध्यारोपे निमित्तमित्याह—प्रत्यासीदतश्चेति ॥ नन्वव्यक्ता वर्णा

१. A. वायोः गतिः एकत्वं

२. A. प्रत्ययमिति भावः

३. TM omits हृत्

भाष्यम्

पटुमृदुत्वादिभेदं वर्णेष्वासञ्जयति ; तन्निबन्धनाश्चोदात्तादयो विशेषाः, न वर्णस्वरूपनिबन्धनाः, वर्णानां प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वात् ; एवं च सति सालम्बना उदात्तादिप्रत्यया भविष्यन्ति ; इतरथा हि वर्णानां प्रत्यभिज्ञायमानानां निर्भेदत्वात्संयोगविभागकृता उदात्तादिविशेषाः कल्प्येरन्, संयोगविभागानां चाप्रत्यक्षत्वान्न तदाश्रया विशेषा वर्णेष्वध्यवसातुं शक्यन्त इत्यतो निरालम्बना एवैत उदात्तादिप्रत्ययाः स्युः । अपि च नैवैतदभिनिवेष्टव्यमुदात्तादिभेदे वर्णानां प्रत्यभिज्ञायमानानां भेदो भवेदिति ; न ह्यन्यस्य भेदेनान्यस्याभिद्यमानस्य भेदो भवितुमर्हति ; न हि व्यक्तिभेदेन जातिं भिन्नां मन्यन्ते । वर्णेभ्यश्चार्थ-

प्रकटार्थविवरणम्

एव ध्वनयः, कुतो भेदसिद्धिरित्याशङ्कयाह—वर्णानामिति ।। ननु वायुसंयोगविभागयोः व्यञ्जकत्वं हित्वा किं ध्वनीनां व्यञ्जकत्वपरिकल्पनेनेत्याशङ्कयाह—एवं च सतीति ।। उदात्तादीनां[1] वायुधर्मत्वे सत्यश्रावणानां[2] च श्रावणमेवात्र-[भ्रमेऽत्र] प्रतिभासायोगात्[3] ; अन्यथा चक्षुषा रसभ्रमस्यापि प्रसङ्गात् । अतः श्रावणध्वनीनामेव व्यञ्जकत्वे तद्धर्मसमानानिर्वचनीयधर्मान्तरसमारोपात् सालम्बना उदात्तादिप्रत्ययाः भविष्यन्तीत्यर्थः । ननु न वर्णमात्रं क्वापि[4] प्रत्यभिज्ञायते, किं तूदात्तादिधर्मविशिष्टतया ; अतः उदात्तादेः समारोपकल्पनानुपपत्तेरित्याशङ्कयाह— अपि च नैवैतदिति ।। खण्डमुण्डाद्युपरक्तं गोत्वं प्रत्यभिज्ञायत इत्येतावता न खण्डादिभेदभिन्नत्वं तात्त्विकमिति भावः । एवं प्रत्यभिज्ञाप्रमाणेन वर्णानां स्थायित्वमुपपाद्य इदानीमर्थप्रत्यायकत्वमुपपादयन् स्फोटं[5] विघटयति— वर्णेभ्यश्चेति ।। कल्पनामसहमानः उक्तमुद्रा-

१. A. उदात्तानां
२. T, T² and P. सत्याभा
३. TM. च श्रावणे भेत्रप्रति
A. चाश्रावणे यत्र प्रति
४. A. ननु वर्णमात्रं क्वापि न
५. T. स्फोटत्वं

## भाष्यम्

प्रतीतेः संभवात् स्फोटकल्पनानर्थिका । न कल्पयाम्यहं स्फोटम्, प्रत्यक्षमेव त्वेनमवगच्छामि, एकैकवर्णग्रहणाहितसंस्कारायां बुद्धौ झटिति प्रत्यवभासनादिति चेत्, न; अस्या अपि बुद्धेर्वर्णविषयत्वात्; एकैकवर्णग्रहणोत्तरकाला हीयमेका बुद्धिर्गौरिति समस्तवर्णविषया, नार्थान्तरविषया; कथमेतदवगम्यते? यतोऽस्यामपि बुद्धौ गकारादयो वर्णा अनुवर्तन्ते, न तु दकारादयः; यदि ह्यस्या बुद्धेर्गकारादिभ्योऽर्थान्तरं स्फोटो विषयः स्यात्, ततो दकारादय इव गकारादयोऽप्यस्या बुद्धेर्व्यावर्तेरन्; न तु तथास्ति; तस्मादियमेकबुद्धिर्वर्णविषयैव स्मृतिः। नन्वनेकत्वाद्वर्णानां नैकबुद्धिविषयतोपपद्यत इत्युक्तम्, तत्प्रति ब्रूमः—संभवत्यनेकस्याप्येकबुद्धिविषयत्वम्, पङ्क्तिः वनं सेना दशत् शतं सहस्रम् इत्यादिदर्शनात्; या तु गौरित्येकोऽयं शब्द इति बुद्धिः, सा बहुष्वेव वर्णेष्वेकार्थावच्छेदनिबन्धनौपचारिकी वनसेनादिबुद्धिवदेव।

## प्रकटार्थविवरणम्

वयति—न कल्पयाम्यहमिति ॥ यस्यां बुद्धौ य आकारः परिस्फुरति स तस्या आलम्बनम्; नेह वर्णातिरिक्तः कश्चिदाकारो भातीत्याह— नास्या अपीति ॥ अनेकस्य निरुपाधिकैकबुद्धिविषयत्वाभावेऽपि सोपाधिकैकबुद्धिविषयत्वं न विरुध्यत इत्याह—संभवत्यनेकस्यापीति ॥ ननु देशविशेषोपाधिवशात् पङ्क्त्यादिबुद्धिरुपपन्ना; वर्णेषु तु पदादिबुद्धौ नास्त्युपाधिरित्याशङ्क्याह—या तु गौरितीति ॥ एकपदार्थबुद्धिजनकत्वोपाधौ वर्णेष्वेव पदव्यवहारः, एकसंसर्गबुद्धिजनकत्वोपाधेः[धौ] पदेष्वेव वाक्यव्यवहार इत्यादि द्रष्टव्यम् । न चेतरेतराश्रयत्वं क्रमविशेषवतां वर्णानामर्थप्रत्ययजनकत्वात्; अर्थप्रत्ययदर्शनेनतत्सामर्थ्यमनुमायैकपदव्यवहारादित्यर्थः। वर्णातिरिक्तपदान-

१. T and TM. जनकत्वेऽपि.... ष्ट-वाक्य.
A. जनकत्वेऽपि विशिष्टवाक्य.

२. TM. भाग इत्यत्राह
T, T¹, P and TM मग्न इत्यत्राह

### भाष्यम्

अत्राह—यदि वर्णा एव सामस्त्येनैकबुद्धिविषयतामापद्यमानाः पदं स्युः, ततो जारा राजा कपिः पिकः इत्यादिषु पदविशेषप्रतिपत्तिर्न स्यात् । त एव हि वर्णा इतरत्र चेतरत्र च प्रत्यवभासन्त इति ; अत्र वदामः—सत्यपि समस्तवर्णप्रत्यवमर्शे, यथा क्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति, एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति ; तत्र वर्णानामविशेषेऽपि क्रमविशेषकृता पदविशेषप्रतिपत्तिर्न विरुध्यते ; वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीता गृहीतार्थविशेषसंबन्धाः सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तं तमर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना । स्फोटवादिनस्तु दृष्टहानिः, अदृष्टकल्पना च ; वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात् ॥

### प्रकटार्थविवरणम्

भ्युपगमे व्यवहारभङ्ग इत्याह—अत्राह यदीति ॥ क्रमविशेषः पदविशेषनियामकः, अन्यथा स्फोटविशेषाभिव्यक्तिरपि न स्यादित्याह—अत्र वदाम इत्यादिना ॥ ननु वर्णानां क्रमोऽपि न संभवति, तत्राह—वृद्धव्यवहारे चेति ॥ नित्यत्वसर्वगतत्वाभ्यां देशकालक्रमाभावे व्यञ्जकानां क्रमवत्त्वात् आकाशवदौपाधिकक्रमवतां वर्णानां यथासङ्गतिग्रहं शाब्दे व्यवहारेऽर्थप्रत्यायकत्वमुपपद्यते । लाघवं चास्मिन्पक्षे भवतीत्यर्थः । उक्तं हि—

> "यावन्तो यादृशा ये च यदर्थप्रतिपादकाः ।
> वर्णाः प्रज्ञातसामर्थ्याः ते तथैवावबोधकाः ॥"

इति । स्फोटवादिनस्तु दृष्टं यद्वर्णानामर्थप्रत्यायकत्वं तस्य हानिः, अदृष्टस्य च स्फोटस्य कल्पना ; सा च गौरवदुष्टेत्याह—वर्णाश्चेम इति ॥

१. T, T[1], P and TM omit अत्राह. ३. A. पदानां

२. A omits पदविशेष

भाष्यम्

अथापि नाम प्रत्युच्चारणमन्येऽन्ये वर्णाः स्युः, तथापि प्रत्यभिज्ञालम्बनभावेन वर्णसामान्यानामवश्याभ्युपगन्तव्यत्वात्, वर्णेष्वर्थप्रतिपादनप्रक्रिया रचिता सा सामान्येषु संचारयितव्या । ततश्च नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यविरुद्धम् ॥

प्रकटार्थविवरणम्

वर्णान् सर्वगतान्नित्यान् सर्वत्र व्यक्तियोगतः ।
स्वतन्त्रेन्द्रियवेद्यत्वाद्भव्यं भाट्टविदो विदुः ॥
प्राभाकरादयः प्राहुः गुणान् खसमवायतः ।
नामरूपश्रुतेनैव द्रव्यतास्तीति मामकाः ॥

प्रौढवादेन वर्णानामनित्यत्वमभ्युपगम्याह--अथापि नामेति ॥ नित्यानि वर्णसामान्यानि क्रमविशेषवन्ति यस्मिन्नर्थे वृद्धव्यवहारे गृहीतसङ्गतिकानि तमर्थमेकस्मृत्यारूढानि प्रत्याययिष्यन्तीति नास्माकं काचित्क्षतिरित्यर्थः । ननु नायं प्रौढवादः, प्रमाणवत्त्वात्; तथाहि—शब्दोऽनित्यः, सामान्यवत्त्वे सति अस्मदादिबाह्यप्रत्यक्षाविषयत्वात्, पटवत्; न ध्वनिभागे सिद्धसाधनत्वात्; विमत इति विशेषणे भागासिद्धः तवान्त्यातिरिक्तानामप्रत्यक्षत्वात्, तस्यैव पक्षत्वे व्यर्थविशेषणत्वात्, योग्यतानङ्गीकाराच्चासिद्धः; तथा सामान्येषु अनैकान्तिकः, सन् घटः, सन् पटः इतिवत् सद्घटत्वं सत्पटत्वम् इत्यनुगतप्रत्ययात्; न च स्वरूपसत्तानिमित्तोऽनुगमः, तदपलापापातात्, द्रव्यस्य द्रव्याश्रयत्ववत् सामान्यस्य सामान्याश्रयत्वेऽप्यनवस्थापरिहारात् गोत्वं गोत्वमिति [गौरिति] प्रत्यययोरिव सत्ता सतीति प्रत्यययोरवैलक्षण्यात् न सत्तान्तरप्रसङ्गः । यच्चेदमनुमानम्—शब्दोऽनित्यः, तीव्रत्वादिधर्मोपेतत्वात्, दुःखवत्, तत्र व्यधिकरणासिद्धो हेतुः; तीव्रत्वादिरहितवर्णानुपलम्भासिद्धौ गोत्वस्यापि खण्डादिधर्मकत्वप्रसङ्गाद्व्यभिचारात्; अतद्धर्मत्वे समः समाधिः, प्रत्येकं तीव्रत्वादेरवर्तनात् भागासिद्धिश्च कार्यत्वादनित्यत्वसाधने वेदवादिनं प्रत्यसिद्धिः । न च नित्यत्वे

१. A. वर्णाः
२. A. नित्याः
३. A. गुणाः
४. T, T[1], P and TM. वादे
५. TM. गतः
६. A. तत्राप्यपि.

भाष्यम्

# अत एव च नित्यत्वम् ॥ १-३-२९ ॥

स्वतन्त्रस्य कर्तुरस्मरणादिभिः स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य "अतः प्रभवात्" इति

प्रकटार्थविवरणम्

सदोपलम्भापातात् कार्यत्वं व्यञ्जकभावाभावाभ्यां उपलम्भानुपलम्भसिद्धेः। यच्च विरचितं शब्दा न प्रतिनियतसंस्कारसंस्कार्याः समानेन्द्रियग्राह्यसमानदेशधर्मापन्नत्वे सति युगपदिन्द्रियसंबद्धत्वात्, पटादिवत् इति, तत्रानैकान्तिको हेतुः, सर्वगततया मनःसंसृष्टानन्तात्मसु युगपदनुपलम्भेन प्रतिनियतव्यञ्जकव्यङ्ग्यत्वात्[१]। अथ सर्वगतत्वेऽप्यसंसर्गः, तर्हि वर्णानामपि प्रतिबिम्बितानामेव श्रोत्रसंबन्धादसिद्धो हेतुः। एतेन योग्यानुपलम्भादभावावगमः प्रत्युक्तः। यदगाद्युदयनेन—"वर्णात्मकाः शब्दा आत्ममनो विषयसंबन्धातिरिक्तसंस्कारानिरपेक्षेण श्रोत्रेण व्यज्यन्ते श्रावणत्वात् ध्वनिधर्मवत्" इति, तत्र सति वर्णसम्बन्धे व्यञ्जकनैरपेक्ष्यसाधने सिद्धसाधनं संबन्धार्थत्वात् व्यञ्जकस्य। किं च दर्पणस्य व्यञ्जकमन्तरेण चाक्षुषत्वे दृष्टमित्येतावता न प्रतिबिम्बस्य चाक्षुषत्वे नैरपेक्ष्यानुमानम्। अतो[२]ऽप्रयोजकतापि। तस्मान्नित्या वर्णाः, ध्वन्याद्यन्यत्वे सति श्रावणत्वात्, शब्दत्ववदिति स्थितम् ॥

श्रोत्रज्ञेयत्वमज्ञात्वा शब्दैकाकारधीर्यतः।
शब्दशब्दो वदेत्तस्माज्जातिं वर्णानुगामिनीम् ॥

अत एव च नित्यत्वम् ॥

वृत्तानुवादपूर्वकं सूत्रं व्याचष्टे—कर्तुरस्मरणादिभिरिति ॥ वेदोऽपौरुषेयः, अस्मर्यमाणकर्तृकत्वादात्मवत्; मुक्तकश्लोकानामवधारितं चेत् पौरुषेयत्वम् तर्हि स्मृत एव कर्ता; सामान्येन नावधारितश्चेत् न विपक्षत्वम्; न च सन्दिग्धासिद्धिः, कर्तुरननुभवादेवास्मरणनिश्चयात्। तथा वेदोऽपौरुषेयः, असर्वज्ञवचनत्वाभावे सति धर्मादिप्रमाणत्वात्, परपरिकल्पितेश्वरबुद्धिवत्।

१. T, T[1], P and TM. व्यज्यते २. A omits अतो

### भाष्यम्

परिहृत्य इदानीं तदेव वेदनित्यत्वं स्थितं द्रढयति—अत एव च नित्यत्वमिति । अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वाद्वेदशब्दे

### प्रकटार्थविवरणम्

तथा विमतो व्यवहारः, पूर्वपूर्वव्यवहारानुस्मृतिनिबन्धनः, अभिधानाभिधेयव्यवहारत्वात् जात्यभिधानव्यवहारत्वाद्वा इदानीन्तनव्यवहारवत् इत्यादिहेतुभिः वेदस्य नित्यत्वं सिद्धम् । तद्विरोधे जैमिनीयैरुद्भाविते "अतः प्रभावात्" इत्यनेन परिहारमभिधाय इदानीं तेनैव हेतुना काणादादीन् प्रति वेदस्यापौरुषेयत्वं द्रढयति—वेदोऽपौरुषेयः, जगत्कारणत्वात्, ईश्वरवत्—इति प्रयोगः। नन्वदृष्टे व्यभिचारः न; वाच्यमुपलभ्य वाचकविरचना हि पौरुषेयता; न तादृश्यदृष्टेऽस्तीति कथं विपक्षता । यत्रानुमेनिरे काणादाः—वैदिक्यानुपूर्वी प्रणेतृपूर्विका इदंप्रथमा वा, वर्णानुपूर्वीत्वात्, संप्रतिपन्नवदिति[2] । तत्रादिमादिपदार्थस्वभावव्यवस्थापितप्रणेतृपूर्विकाव्यवस्थत्वात् संप्रतिपन्नवत् । अतीतकल्पानुपूर्वी चेदंप्रथमा आनुपूर्वीत्वात् संप्रतिपन्नवत्—इत्यतिप्रसङ्गलक्षणप्रतिकूलतर्कसद्भावादनुकूलतर्काभावाच्चाप्रयोजकत्वम् । यच्च वेदवाक्यमाप्तप्रणीतं तद्विपरीतागमस्वीकारित्रैवार्णिकेभ्योऽधिकैः त्रैवर्णिकैः प्रमाणत्वेनाद्रियमाणवाक्यत्वात्, आयुर्वेदवाक्यवदिति, तत्राप्तप्रणीतत्वे सन्दिग्धे प्रामाण्यनिश्चयाभावात् तार्किकाणां सन्दिग्धासिद्धो हेतुः । बौद्धशास्त्रमाप्तप्रणीतं तद्विपरीतागमस्वीकारिभिः बौद्धेभ्योऽधिकैः बौद्धैः प्रमाणत्वेनाद्रियमाणवाक्यत्वात् आयुर्वेदवदित्यतिप्रसङ्गश्च । वेदवाक्यमाप्तप्रणीतं हेतुदर्शनशून्यमहाजनपरिगृहीतत्वात् आयुर्वेदवदित्यसङ्गतम्, चन्द्रप्रादेशत्वादित्योदयवाक्यादौ व्यभिचारात्, असिद्धेश्च । वेदोऽनाप्तप्रणीतः आप्ताप्रणीतवाक्यत्वात् संप्रतिपन्नवत् इत्यपि न प्राप्नोति अनुकूलतर्काभावात्; श्रेयोऽर्थिभिः परिगृहीतत्वात्,

१. A. व्यवहाराच ।
२. TM. adds तत्रादिमिति
३. T. आस्मादि
४. TM. adds प्रणेतृव्यवस्थापितं
T. व्यवस्थापितं
५. A. इति कल्पा
६. T. प्रमाणपूर्वत्वात्
७. A omits बौद्धेभ्योऽधिकैः
८. A omits च
९. TM. श्रेयोर्थिभिः

भाष्यम्

नित्यत्वमपि प्रत्येतव्यम् । तथा च मन्त्रवर्णः—“यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम्” इति स्थितामेव वाचमनुविन्नां दर्शयति । वेदव्यासश्चैवं स्मरति—

“युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥” इति ॥

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ १-३-३० ॥

अथापि स्यात्—यदि पश्वादिव्यक्तिवद्देवादिव्यक्तयोऽपि संततयैवोत्पद्येरन्निरुध्येरंश्च, ततोऽभिधानाभिधेयाभिधातृव्यवहाराविच्छेदा-

प्रकटार्थविवरणम्

अबाध्यार्थबोधनशक्तिमत्त्वानुपपत्तिबाधात्र । यदपरमनुममे — गवादिपदं संकेतपूर्वकतयैव व्यवहारपदं पदत्वात् संप्रतिपन्नवदिति, तत्र वृद्धव्यवहारे प्रवृत्तिलिङ्गेन शक्तिमनुमाय व्यवहारान्तरे गवादिपदानां व्यवहार्यत्वस्य प्रत्यक्षत्वात्तद्बाधः । प्रयोगश्च विमतं गवादिशब्दार्थसंबन्धज्ञानं वृद्धव्यवहारपुरस्सरं गवादिशब्दार्थसंबन्धज्ञानत्वात् इदानींतनवत्; तस्मात्पदानां पदार्थैः तद्बुद्धिजननसामर्थ्यलक्षणस्य[1] संबन्धस्य स्वाभाविकत्वादानुपूर्व्याश्चेदंप्रथमताभावात्सिद्धं वेदस्य नित्यत्वम् । पुराणादिषु तु वाक्यरचनायाः[2] पुरुषधीप्रभवत्वात् पौरुषेयतेष्यत इत्यलम्[3] । वेदनित्यत्वे श्रुतिस्मृतिसंवादमाह—तथा च मन्त्रवर्ण इति ॥ पूर्वं केचन यजमानाः यज्ञमाहात्म्येन वाचो वेदस्य पदवीयं स्थानमायन् वेदावस्थानयोग्यत्वं प्राप्ताः सन्तः । तां वाचमन्वविन्दन् अनुलेभिरे पश्चात्, इति स्थितामेव वाचं लब्धां दर्शयतीत्यर्थः ॥

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥

सूत्रनिरस्यां[4]शङ्कामाह — अथापि स्यादिति ॥ अवान्तरप्रलये व्यक्तीनां नाशेऽपि जातीनां सद्भावाद्भवति वाच्यवाचकसंबन्धाविच्छेदः; महाप्रलये तु

१. A. लक्षणसंब
२. T. रचनायां
३. TM. इत्येवं
४. TM and A. निरस्यां

भाष्यम्

त्संबन्धनित्यत्वेन विरोधः शब्दे परिह्रियते । यदा तु खलु सकलं त्रैलोक्यं परित्यक्तनामरूपं निर्लेपं प्रलीयते, प्रभवति चाभिनवमिति श्रुतिस्मृतिवादा वदन्ति, तदा कथमविरोध इति । तत्रेदमभिधीयते—समाननामरूपत्वादिति। तदापि संसारस्यानादित्वं तावदभ्युपगन्तव्यम् । प्रतिपादयिष्यति चाचार्यः संसारस्यानादित्वम्—"उपपद्यते चाप्युपलभ्यते च" इति । अनादौ च संसारे यथा स्वापप्रबोधयोः प्रलयप्रभवश्रवणेऽपि पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहारान्न कश्चिद्विरोधः, एवं कल्पान्तरप्रभवप्रलययोरपीति द्रष्टव्यम् । स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते—"यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवै-

प्रकटार्थविवरणम्

जातीनामपि लयात् संकेत एवापूर्वः कर्तव्य इति कथं न नित्यताव्याघात इत्यर्थः। परिहारत्वेन सूत्रभागमवतारयति—तत्रेदमभिधीयत इति ॥ सत्यपि महाप्रलये पूर्वोत्तरकल्पयोः सामाननामरूपत्वात् सर्वदैकरूप्यं व्यवहारस्य नित्यत्वं न विरुध्यते ब्रह्मवत् नित्यत्वाभावेऽपीति भावः । ननु परमेश्वरस्याद्यः प्रपञ्चसर्गो महासर्गः स्वीकृतश्चेर्हि ततः पूर्वं सर्गान्तराभावात् केन समाननामरूपत्वमित्याशङ्क्याह—तदापीति ॥ मुक्तवद्भूत्वदोषपरिहारायेत्यर्थः । ननु सूत्रकृतानुक्तत्वादनादित्वमित्याशङ्क्याह—प्रतिपादयिष्यति चेति ॥ अस्त्वनादित्वम्, तथापि विनष्टसमानोत्पादेनास्ति दृष्टान्त इत्याशङ्क्याह—अनादौ चेति॥ सुषुप्ते रूपादीनां विषयत्वम्, चक्षुरादीनां विषयित्वम्, यद्यपि नष्टं तथापि जागरणे नियमेनैव व्यवहारो दृश्यते । न हि चक्षुषो रसो विषयो भवति। तथा कल्पान्तरीयशब्दार्थव्यवहारस्य लयेऽपि कल्पान्तरे तथैव प्रादुर्भविष्यतीत्यर्थः । दृष्टान्तं श्रुत्या द्रढयति—स्वापप्रबोधयोश्चेति ॥ महान्धकारपिहितानामिव घटादीनां विशेषाभिव्यक्त्यभिप्रायेणैकीभावाभिधानं चिद्विष-

१. A. तदानीमिति

२. A omits तथापि

३. T, P, TM and A. जागरणे

भाष्यम्

कथा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति । स्यादेतत्—स्वापे पुरुषान्तरव्यवहाराविच्छेदात्स्वयं च सुप्तप्रबुद्धस्य पूर्वप्रबोधव्यवहारानुसंधानसंभवादविरुद्धम्; महाप्रलये तु सर्वव्यवहारोच्छेदाज्जन्मान्तरव्यवहारवच्च कल्पान्तरव्यवहारस्यानुसंधातुमशक्यत्वाद्वैषम्यमिति । नैष दोषः सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसंधानोपपत्तेः । यद्यपि प्राकृताः प्राणिनो न जन्मान्तरव्यवहारमनुसंदधाना दृश्यन्त इति, तथापि न प्राकृतवदीश्वराणां भवितव्यम् । यथा हि प्राणित्वाविशेषेऽपि मनुष्यादिस्तम्बपर्यन्तेषु ज्ञानैश्वर्यादिप्रतिबन्धः परेण परेण भूयान्भवन्दृश्यते, तथा मनुष्यादिष्वेव हिरण्यगर्भपर्यन्तेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेण परेण भूयसी भवतीत्येतच्छ्रुतिस्मृतिवादेष्वसकृदेवानुकल्पादौ

प्रकटार्थविवरणम्

यत्वाकारोदयाभिप्रायेण जागरणे प्राणशब्दत्राच्यात् परमात्मनो निर्गमाभिधानम्, अन्यथा महाप्रलयादविशेषापातात्; तस्मात्सुषुप्तेः जातिव्यक्त्योः त्रिद्विपर्यंतवमात्रविलयः; अवान्तरप्रलये व्यक्तीनाम्; महाप्रलये तूभयोरपीति विभागो द्रष्टव्यः । अनुसन्धानसंभवासंभवाभ्यां दृष्टान्तदार्ष्टान्तिकयोः वैलक्षण्यमाह—स्यादेतत्स्वाप इति ॥ हिरण्यगर्भादीनामनुसन्धानसंभवात् न वैषम्यमित्याह—नैष दोष इति ॥ यदप्युक्तम्—मरणानन्तरमुत्पन्नानां जन्मान्तरीयानुसन्धानं न दृश्यते, तथात्र विप्रकर्षात्कल्पान्तरीयानुसन्धानमपि न संभवतीति तत्राह—न प्राकृतवदीश्वराणामिति ॥ अतिप्रसङ्गसहकृतागमबाधितं सामान्यतोदृष्टानुमानमिति भावः । ननु पूर्वकल्पे ये हिरण्यगर्भादयो बभूवुः तेषां

१. A. धानात्
२. A. विषयमात्र

भाष्यम्

प्रादुर्भवतां पारमैश्वर्यं श्रूयमाणं न शक्यं नास्तीति वदितुम् । ततश्चातीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणामीश्वराणां हिरण्यगर्भादीनां वर्तमानकल्पादौ प्रादुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धवत्कल्पान्तरव्यवहारानुसंधानोपपत्तिः । तथा च श्रुतिः—

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" ॥ इति ।

स्मरन्ति च शौनकादयः "मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्दाशतय्यो दृष्टाः" इति । प्रतिवेदं चैवमेव काण्डर्ष्यादयः स्मर्यन्ते । श्रुतिरप्यृषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति—"यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति

प्रकटार्थविवरणम्

कल्पान्ते मुक्तत्वात् कथं कल्पान्तरेऽनुसन्धानमित्याशङ्क्याह—ततश्चातीतेति ॥ पुरुषविशेषाणामनुसन्धानं संभवतीत्येवं स्थिते ये पूर्वकल्पे हिरण्यगर्भादिप्राप्तिनिमित्तं कर्माचेरुस्तेषां यजमानानां हिरण्यगर्भादिभावनायुक्तानां परमेश्वरानुग्रहात् घटतेऽनुसन्धानमित्यर्थः । हिरण्यगर्भस्य परमेश्वरानुग्रहे श्रुतिमाह—तथा चेति ॥ नैकस्यैव प्रतिभानं येनाविश्वासः स्यात्, किन्तु तत्तच्छाखाद्रष्टारोऽन्येऽपि प्रादुर्बभूवुरित्याह—स्मरन्ति चेति ॥ दाशतय्यो दशमण्डलयोगिन्य ऋचः । "संख्याया अवयवे तयप्" स्वार्थे । ताश्च—

"ऋचां दशसहस्राणि ऋचां पञ्चशतानि च ।
ऋचामशीतिः पादश्च पारणं संप्रकीर्तितम् ॥"

इत्यनुवाकानुक्रमण्यां श्रीशौनकेन महर्षिणोक्तसंख्याका द्रष्टव्या इत्यर्थः । किं चार्षिज्ञानपूर्वकमनुष्ठानं वदन्ती श्रुतिः तांस्तानृषीन्मन्त्रद्रष्टॄन् गमयतीत्याह—श्रुतिरपीति ॥ अविदितान्यार्षेयच्छन्दोदैवतब्राह्मणानि यस्य मन्त्रस्य तेनेति विग्रहः । तस्मात्कल्पान्तरीयानुसन्धानेन व्यवहारप्रवर्तकानां संभवात् पूर्वकल्पतुल्य एवोत्तरः कल्प इति फलितार्थः । किं च सृष्टिनिमित्ता

१. A. प्रतिसन्धानं
२. T, T, P and TM. ऋर्च
३. A. पीत्यादिना
४. A. तार्षेय
५. T and A. कल्प एव

भाष्यम्

गर्तं वा प्रतिपद्यते" इत्युपक्रम्य "तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इति। प्राणिनां च सुखप्राप्तये धर्मो विधीयते; दुःखपरिहाराय चाधर्मः प्रतिषिध्यते; दृष्टानुश्रविकसुखदुःखविषयौ च रागद्वेषौ भवतः, न विलक्षणविषयौ इत्यतो धर्माधर्मफलभूतोत्तरा सृष्टिर्निष्पद्यमाना पूर्वसृष्टिसदृश्येव निष्पद्यते। स्मृतिश्च भवति—

"तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः॥
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते॥" इति।

प्रलीयमानमपि चेदं जगच्छक्त्यवशेषमेव प्रलीयते; शक्तिमूलमेव च प्रभवति; इतरथाकस्मिकत्वप्रसङ्गात्। न चानेकाकाराः शक्तयः शक्याः

प्रकटार्थविवरणम्

दृष्टमहिम्नापि पूर्वसदृश्येवोत्तरसृष्टिरित्याह—प्राणिनां चेति॥ काम्यमानसुखप्राप्तये धर्मोऽनुष्ठितः पूर्वकल्पे; द्वेषविषयदुःखपरिहाराय चाधर्मः परित्यक्तः; तयोश्चेत् स्वरूपं कल्पान्तरे व्यभिचरेत्, तदा अकृताभ्यागमकृतविप्रणाशप्रसङ्ग इति भावः। यच्चोक्तं निर्लेपं प्रलीयत इति तदपि नास्तीत्याह—प्रलीयमानमपि चेदमिति॥ वाच्यवाचकशक्त्योरवशिष्टत्वाच्च शब्दार्थसंबन्धानित्यताप्रसङ्ग इति भावः। ननु शक्तिरपि प्रतिकल्पमन्यथा वाच्यवाचकयोः किं न स्यादित्याशङ्क्याह—न चानेकाकारा इति॥ गौरवप्रसङ्गादित्यर्थः॥

ननु विलम्बतां तावद्विलयः; स्थितिकाल एव[1] शक्तिसद्भावे किं मानम्? तत्रार्थापत्तिः प्रमाणमिति मेनिरे मीमांसकाः। करतलानलसंयोगे स्फोटोदयदर्शनात् तस्य च तावन्मात्रादसंभवात् प्रतिबन्धकाभावस्य सहकारित्वमवकल्पते। न प्रतिबन्धदशायामपि[2] प्रसक्तेः। अतोऽस्ति किंचिदतीन्द्रियं व्यवस्थापकं सा शक्तिरिति गीयते। तत्राहुः नैयायिकादयः—प्रतिबन्धकाभावेनैव दृष्टेन सहकारिणा व्यवस्थोपपत्तौ नातीन्द्रिया शक्तिः कल्पनीयेति। तत्राहुः—

१. A. एव　　　२. T, P and TM. न तुरायां
A. चतुरायामपि

भाष्यम्

कल्पयितुम् । ततश्च विच्छिद्य विच्छिद्याप्युद्भवतां भूरादिलोकप्रवाहाणाम्, देवतिर्यङ्मनुष्यलक्षणानां च प्राणिनिकायप्रवाहाणाम्, वर्णा-

प्रकटार्थविवरणम्

सत्यमेतद्यदि प्रतिबन्धकाभावस्य सहकारित्वमवकल्पते ; न तु तदस्ति ; तथा सति प्रतिबन्धकशब्दार्थाभावापातात् । तथा हि—सति पुष्कलकारणे कार्योत्पादविरोधी प्रतिबन्धकः ; इतरथा कारणाभावादेव कार्याभावोपपत्तेः मन्त्रादिषु प्रतिबन्धकवार्ता न स्यात् । न च तदभावे तद्भाव इति प्रतिबन्धकत्वं मण्यादेर्न स्यात् । यथोक्तम्—"प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः" इति—तदसत् ; विसामग्रीशब्दाभिधेयप्रतिबन्धकाभावाभावो हि प्रतिबन्धकभाव एव ; न[1] च स एव तस्य हेतुः ; न चान्यस्य प्रतिबन्धकत्वप्रसिद्धिरस्ति । किञ्च सिद्धे प्रतिबन्धकाभावस्य कारणत्वे तद्वैकल्यापादकः सिध्यति । सिद्धे च तस्मिंस्तदभावः कारणमितीतरेतराश्रयं स्यात् । न च तस्य कारणत्वे मानं व्यतिरेकाभावात्, उत्तम्भकसन्निधाने सत्यपि प्रतिबन्धके कार्यदर्शनात् । यच्चोक्तम्—उत्तम्भकाभावविशिष्ट एव प्राक्तनो मणिः प्रतिबन्धक इति, तत्रेदं वक्तव्यम्—किं क्वचित्प्रतिबन्धके[2] सति तत्संसर्गाभावः कारणं किं वा तस्यात्यन्ताभावः ? आद्ये देशान्तरे उत्तम्भकसंसर्गे वह्नेः दाहो न स्यात् ; अन्त्ये च क्वचित्प्रतिबन्धेऽन्यत्रापि कार्यानुदयप्रसङ्गः । तस्मात्प्रतिबन्धकाभावस्य कारणत्वानुपपत्तेः कार्य[3]भावाभावव्यवस्थासिद्धये प्रतिबन्ध[4]व्यवहारसिद्धये च शक्तिरभ्युपगन्तव्या । तस्याश्च प्रतिबन्धो ध्वंसः ; प्रतिबन्धकापसरणकारणे[5] [सरणे कारणे] पुनरुदयः । शक्तिभेदाच्चान्यत्र कार्यदर्शनमविरुद्धम् । औष्ण्यादेः प्रतिबन्धकल्पनं तु बालवल्गनम् । पूर्ववदुपलब्धेरतीन्द्रियातिशयकल्पने चापसिद्धान्तः । तदेवं सर्वभावानां शक्तिमत्त्वात्[6]प्रलयेऽपि मूलकारणे तान् [तां] विहाय नामरूपं विलीयत इति सूक्तम् । अस्तु शक्तिशेष एव लयः ; ततः[7] किमित्यत आह—ततश्च विच्छिद्य विच्छिद्यापीति ॥ दृष्टान्तं स्पष्टयति—

१. T, P, TM and A omit न च स एव

२. T, P, TM and A omit के सति ...तस्मात्प्रतिबन्ध ।

३. A. कार्यभावव्यव

४. A. न्धाकाभावसिद्धये

५. T[1]. कारणात्

६. A omits शक्तिमत्त्वात्

७. TM omits ततः

भाष्यम्

श्च धर्मफलव्यवस्थानां चानादौ संसारे नियतत्वमिन्द्रियविषयसंबन्धनियतत्ववत्प्रत्येतव्यम् ; न हीन्द्रियविषयसंबन्धादेर्व्यवहारस्य प्रतिसर्गमन्यथात्वं षष्ठेन्द्रियविषयकल्पं शक्यमुत्प्रेक्षितुम् । अतश्च सर्वकल्पानां तुल्यव्यवहारत्वात्कल्पान्तरव्यवहारानुसंधानक्षमत्वाच्चेश्वराणां समाननामरूपा एव प्रतिसर्गं विशेषाः प्रादुर्भवन्ति । समाननामरूपत्वाच्चावृत्तावपि महासर्गमहाप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छब्दप्रामाण्यादिविरोधः । समाननामरूपतां च श्रुतिस्मृती दर्शयतः—

"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चान्तरिक्षमथो सुवः ॥" इति ।

यथा पूर्वस्मिन्कल्पे सूर्याचन्द्रमःप्रभृति जगत्कॢप्तं तथास्मिन्नपि कल्पे परमेश्वरोऽकल्पयदित्यर्थः । तथा "अग्निर्वा अकामयत । अन्नादो देवानाँ स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत् ।" इति नक्षत्रेष्टिविधौ योऽग्निर्निरवपत्, यस्मै वाग्नये निरवपत्, तयोः समाननामरूपतां दर्शयतीत्येवंजातीयका श्रुतिरिहोदाहर्तव्या ।

प्रकटार्थविवरणम्

न हीति ॥ षष्ठेन्द्रियस्य मनसो नास्त्यसाधारणो विषयः, सुखादेरपि साक्षिमात्रवेद्यत्वाभ्युपगमात् । तत्तुल्यमत्यन्तासदन्यथात्वं प्रतिदिनं[प्रतिकल्पं] न हि शक्यं कल्पयितुमित्यर्थः । उक्तं संक्षेपेणोपसंहृत्य सूत्रं योजयति— अतश्च सर्वकल्पानामित्यादिना ॥ वेदेषु वेदविषया दृष्टयो येषां यत् [यानि] वेददर्शनानि पूर्वं बभूवुः तेषां शर्वर्यन्ते प्रलयान्ते तान्येव परमेश्वरः संपादयतीत्यर्थः । वसन्तर्तुचिह्नानि नवपल्लवादीनि । पर्यये संवत्सरपरिवर्तने चक्षुराद्यभिमानिनो ये देवा अतीतास्ते सांप्रतैः देवैः तुल्याः ॥

१. A omits तेषां

भाष्यम्

स्मृतिरपि—

"ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥
यथाभिमानिनोऽतीतास्तुल्यास्ते सांप्रतैरिह ।
देवा देवैरतीतैर्हि रूपैर्नामभिरेव च ॥"

इत्येवंजातीयका द्रष्टव्या ॥

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ १-३-३१ ॥

इह देवादीनामपि ब्रह्मविद्यायामस्त्यधिकार इति यत्प्रतिज्ञातं तत्पर्यावर्त्यते ; देवादीनामनधिकारं जैमिनिराचार्यो मन्यते ; कस्मात्? मध्वादिष्वसंभवात् । ब्रह्मविद्यायामधिकाराभ्युपगमे हि विद्यात्वाविशेषान्मध्वादिविद्यास्वप्यधिकारोऽभ्युपगम्येत ; न चैवं संभवति ; कथम्? "असौ वा आदित्यो देवमधु" इत्यत्र मनुष्या आदित्यं मध्वध्यासेनोपासीरन् ; देवादिषु ह्युपासकेष्वभ्युपगम्यमानेष्वादित्यः कमन्यमादित्यमुपासीत? पुनश्चादित्यव्यपाश्रयाणि पञ्च रोहितादीन्यमृतान्युपक्रम्य, वसवो रुद्रा आदित्या मरुतः साध्याश्च पञ्च देवगणाः क्रमेण तत्तदमृतमुपजीवन्तीत्युपदिश्य "स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति" इत्यादिना वस्वाद्युपजीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति ; वस्वाद-

प्रकटार्थविवरणम्

मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥

एवं तावद्देवानां विग्रहवत्त्वे सर्गप्रलयाभ्युपगमे च नास्ति कर्मणि शब्दे च विरोध इत्युपपाद्य पुनर्मूलाधिकरणसिद्धान्तमाक्षिपति सूत्रद्वयेन— मध्वादिष्वित्यादिना ॥ रोहितं शुक्लं कृष्णं परःकृष्णं मध्ये चञ्चलं चेति पञ्च-

१. T[1] omits कृष्णं

भाष्यम्

यस्तु कानन्यान्वस्वादीनमृतोपजीविनो विजानीयुः ? कं वान्यं वस्वादिमहिमानं प्रेप्सेयुः ? तथा "अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः" "वायुर्वाव संवर्गः" "आदित्यो ब्रह्मेत्यादेशः" इत्यादिषु देवतात्मोपासनेषु न तेषामेव देवतात्मनामधिकारः संभवति; तथा "इमावेव गौतमभरद्वाजावयमेव गौतमोऽयं भरद्वाजः" इत्यादिष्वप्यृषिसंबन्धेषूपासनेषु न तेषामेवर्षीणामधिकारः संभवति ॥

कुतश्च देवादीनामनधिकारः—

# ज्योतिषि भावाच्च ॥ १-३-३२ ॥

यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बम्भ्रमज्जगदवभासयति, तस्मिन्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते; लोकप्रसिद्धेर्वाक्यशेषप्रसिद्धेश्च । न च ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण चेतनतयार्थित्वादिना वा योगोऽवगन्तुं शक्यते, मृदादिवदचेतनत्वावगमात् । एतेनाग्न्यादयो व्याख्याताः ॥

स्यादेतत्—मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवादीनां विग्रहवत्त्वाद्यवगमादयमदोष इति चेत्, नेत्युच्यते; न हि तावल्लोको नाम

प्रकटार्थविवरणम्

रूपाणि; सप्तसु शीर्षण्यप्राणेषु; द्वयोर्द्वयोः गौतमादिदृष्ट्योपासनम् । दक्षिणः कर्णः गौतमः, वामो भरद्वाजः, चक्षुर्दक्षिणं विश्वामित्रः, वामं जमदग्निः इत्यादि॥

ज्योतिषि भावाच्च ॥

"यावदादित्यः पुरस्तादुदेता" इत्यादिवाक्यशेषादस्त्यचेतनमादित्यादिशब्दवाच्यम्, ततः किमित्याशङ्क्याह—न च ज्योतिर्मण्डलस्येति "

विग्रहवत्त्वे प्रमाणं शङ्कते—स्यादेतदिति ॥ सिद्धान्तवाद्युक्तं प्रमाणं दूषयति—नेत्युच्यत इत्यादिना ॥ "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यादिभिः विनियुक्ता मन्त्राः साङ्गकर्मानुष्ठापकप्रयोगविधिप्राहिताः कर्मतत्साधनाभिधा-

१. T and P. कण्ठः

भाष्यम्

किंचित्स्वतन्त्रं प्रमाणमस्ति ; प्रत्यक्षादिभ्य एव ह्यविचारितविशेषेभ्यः प्रमाणेभ्यः प्रसिद्ध एवार्थो लोकात्प्रसिद्ध इत्युच्यते ; न चात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति ; इतिहासपुराणानामपि पौरुषेयत्वात्प्रमाणान्तरमूलमाकाङ्क्षति ; अर्थवादा अपि विधिनैकवाक्यत्वात् स्तुत्यर्थाः सन्तो न पार्थगर्थ्येन देवादीनां विग्रहादिसद्भावे कारणभावं प्रतिपद्यन्ते ; मन्त्रा अपि श्रुत्यादिविनियुक्ताः प्रयोगसमवायिनोऽभिधानार्था न कस्यचिदर्थस्य प्रमाणमित्याचक्षते ; तस्मादभावो देवादीनामधिकारस्य ॥

## भावं तु बादरायणोऽस्ति हि ॥ १-३-३३ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । बादरायणस्त्वाचार्यो भावमधिकारस्य देवादीनामपि मन्यते । यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रास्वसंभवोऽधिकारस्य, तथाप्यस्ति हि शुद्धायां ब्रह्मविद्यायां संभवः, अर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य । न च क्वचिदसंभव इत्येतावता यत्र संभवस्तत्राप्यधिकारोऽपोद्येत । मनुष्याणामपि न सर्वेषां ब्राह्मणादीनां सर्वेषु राजसूयादिष्वधिकारः संभवति । तत्र यो न्यायः सोऽत्रापि भविष्यति । ब्रह्मविद्यां च प्रकृत्य भवति दर्शनं श्रौतं देवाद्यधिकारस्य सूचकम्—“तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्” इति,

प्रकटार्थविवरणम्

नार्थाः नाज्ञातज्ञापका इत्याचक्षते मीमांसका इत्यर्थः । यस्मान्नास्ति विग्रहादिसद्भावे प्रमाण तस्मादित्युपसंहारः ॥

भावं तु बादरायणोऽस्ति हि ॥

ब्रह्मविद्या देवादीनधिकरोति, विद्यात्वात्, मध्वादिविद्यावत् इत्यत्राप्रयोजकतामुक्त्वातिप्रसङ्गसहकृतलिङ्गबाधं दर्शयति—न च क्वचिदसंभव इति ॥

भाष्यम्

"ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" इति, "इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणाम्" इत्यादि च। स्मार्तमपि गन्धर्वयाज्ञवल्क्यसंवादादि ॥

यदप्युक्तम् "ज्योतिषि भावाच्च" इति, अत्र ब्रूमः—ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाः शब्दाश्चेतनावन्तमैश्वर्याद्युपेतं तं तं देवतात्मानं समर्पयन्ति, मन्त्रार्थवादादिषु तथा व्यवहारात्। अस्ति ह्यैश्वर्ययोगाद्देवतानां ज्योतिराद्यात्मभिश्चावस्थातुं यथेष्टं च तं तं विग्रहं ग्रहीतुं सामर्थ्यम्। तथाहि श्रूयते सुब्रह्मण्यार्थवादे— "मेधातिथिर्मेषेति मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार" इति। स्मर्यते च—"आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह" इति। मृदादिष्वपि चेतना अधिष्ठातारोऽभ्युपगम्यन्ते—"मृदब्रवीत्" "आपोऽब्रुवन्" इत्यादिदर्शनात्। ज्योतिरादेस्तु भूतधातोरादित्यादिष्वचेतनत्वमभ्युपगम्यते। चेतनास्त्वधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिव्यवहारादित्युक्तम् ॥

यदप्युक्तं मन्त्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादिप्रकाश-

प्रकटार्थविवरणम्

यथा चक्षुरादिशब्दा लौकिकानां गोलकादिविषया अपि शास्त्रकाराणामतिरिक्तेन्द्रियविषयाः तथादित्यादिशब्दा अपीत्याह—ज्योतिरादिविषया अपीति ॥ 'मेधातिथेर्मेष' इतीन्द्रसंबोधनम्। मन्त्रपदमेतद्व्याचष्टे ब्राह्मणवाक्यम्—मेधातिथिं ह काण्वायनमिति ॥ यच्चोक्तं मृदादिवदचेतनत्वादिति तत्राह—मृदादिष्वपीति ॥ ननु ज्योतिरादेरचेतनत्वं प्रत्यक्षसिद्धम्; कथं चेतनत्वमुच्यते इत्याशङ्क्याह — ज्योतिरादेस्त्विति ॥

मन्त्रार्थवादा न स्वार्थे प्रमाणम्, अन्यपरवाक्यत्वात् विषभक्षणादिवाक्यवदित्युक्तं स्मारयति-यदप्युक्तमिति॥ यस्मात्प्रामाण्या[प्रमाणा]द्यस्मिन्नर्थेऽबाधितः

१. A. वादानां

भाष्यम्

नसामर्थ्यमिति, अत्र ब्रूमः—प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणम्, नान्यार्थत्वमनन्यार्थत्वं वा; तथाह्यन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णाद्यस्तीत्येव प्रतिपद्यते। अत्राह—विषम उपन्यासः; तत्र हि तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति, येन तदस्तित्वं प्रतिपद्यते; अत्र पुनर्विध्युद्देशैकवाक्यभावेन स्तुत्यर्थेऽर्थवादे न पार्थगर्थ्येन वृत्तान्तविषया प्रवृत्तिः शक्याध्यवसातुम्; न हि महावाक्येऽर्थप्रत्यायके अवान्तरवाक्यस्य पृथक्प्रत्यायकत्वमस्ति; यथा 'न सुरां पिबेत्' इति नञ्वति वाक्ये पदत्रयसंबन्धात्सुरापानप्रतिषेध एवैकोऽर्थोऽवगम्यते; न पुनः सुरां पिबेदिति पदद्वयसंबन्धात्सुरापानविधिरपीति। अत्रोच्यते—विषम उपन्यासः; युक्तं यत्सुरापानप्रतिषेधे पदान्वयस्यै-

प्रकटार्थविवरणम्

प्रत्ययः तस्मात्तत्सद्भावः सिध्यति, नान्यस्यान्यपरत्वं[२] वा[नास्मिन्ननन्यार्थत्वमन्यार्थत्वं वा[१]] प्रयोजकम्, संस्कारार्थस्याप्याज्यावेक्षणस्य स्वार्थपरिच्छेदकत्वदर्शनात्। विषभक्षणवाक्यस्य तु मानान्तरविरोधादेवाप्रामाण्यमित्यभिप्रेत्याह[३]—प्रत्ययाप्रत्ययाविति॥ यत्परः शब्दः स शब्दार्थः। ननु शक्तिगोचरतोऽन्यपरत्वादप्रामाण्यमित्यस्य न्यायस्य शब्दविषयत्वाद्विलक्षणो दृष्टान्त इत्याह— विषम उपन्यास इति॥ ननु विधिवाक्यैकवाक्यभावेन विध्यपेक्षितस्तुतिलक्षणार्थवादे सति यद्यपि न स्वातन्त्र्येण कथायां तात्पर्यं निश्चेतुं शक्यम्, तथाप्यवान्तरतात्पर्यं सिद्धसंसर्गेऽप्यस्त्वित्याशङ्क्याह— न हि महावाक्य इति॥ तात्पर्यभेदे वाक्यभेदप्रसङ्गात्। "संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते" इति भावः। यत्र पदैकवाक्यता तत्रावान्तरतात्पर्यं भवेद्वाक्यभेदः; यत्र तु वाक्यस्य स्वतो वाक्यान्तरेण प्रयोजनवशेनान्वयः तत्रावान्तरतात्पर्ये प्रधानाविरोधिनि कल्प्यमानेऽपि प्रयाजादिवाक्येष्विव न वाक्यभेदो दोष इत्याह—अत्रोच्यत इत्यादिना॥ अत एव "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति जैमिनिनापि यत्र पदसमूहे विभज्यमाने नैराकाङ्क्ष्येणान्वयाप्रतिपत्तिः

१. A. नान्यस्मिन्नन्यापर  ३. A. omits अभिप्रेत्य

२. T, P, TM and A. अपरत्वं तु

भाष्यम्

कत्वादवान्तरवाक्यार्थस्याग्रहणम्; विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयं वृत्तान्तविषयं प्रतिपद्य अनन्तरं कैमर्थ्यवशेन कामं विधेः स्तावकत्वं प्रतिपद्यन्ते; यथा हि—"वायव्यँ श्वेतमालभेत भूतिकामः" इत्यत्र विध्युद्देशवर्तिनां वायव्यादिपदानां विधिना संबन्धः, नैवम् "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्येषामर्थवादगतानां पदानाम्; न हि भवति 'वायुर्वा आलभेत' इति 'क्षेपिष्ठा देवता वा आलभेत' इत्यादि। वायुस्वभावसंकीर्तनेन त्ववान्तरमन्वयं प्रतिपद्यैवं विशिष्टदेवत्यमिदं कर्मेति विधिं स्तुवन्ति। तद्यत्र सोऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति तत्र तदनुवादेनार्थवादः प्रवर्तते; यत्र प्रमाणान्तरविरुद्धस्तत्र गुणवादेन। यत्र तु तदुभयं नास्ति, तत्र किं प्रमाणान्तराभावाद्गुणवादः स्यात्, आहोस्वित्प्रमाणान्तराविरोधाद्विद्यमानवाद इति—प्रतीतिशरणैर्विद्यमानार्थवाद आश्रयणीयः, न गुणवादः। एतेन मन्त्रो व्याख्यातः। अपि च विधिभिरेवेन्द्रादिदेवत्यानि हवींषि चोदयद्भिरपेक्षितमिन्द्रादीनां स्वरूपम्; न हि स्वरूपरहिता इन्द्रादयश्चेतस्यारोपयितुं शक्यन्ते। न च चेतस्यनारूढायै तस्यै तस्यै देवतायै

प्रकटार्थविवरणम्

तदेकं वाक्यमिति सूत्रितम्। तर्हि किं सर्वत्रैवार्थवादानां स्वार्थे प्रामाण्यमिति नेत्याह—तद्यत्र स इति॥ विमतो वेदः स्वार्थेऽपि प्रमाणम्, प्रधानविधिप्रकरणपठितविरोधानुवादरहितवाक्यत्वात्, प्रयाजादिवाक्यवदिति प्रयोगः। इन्द्राद्योऽर्थवादादिप्रमाणकाः, विध्यपेक्षितातीन्द्रियार्थत्वे सति तद्गम्यत्वात्, स्वर्गवत्; तत्सिद्धस्वर्गानभ्युपगमे च व्यतिरिक्तात्मविचारानर्थक्यप्रसङ्ग इत्याह—अपि च विधिभिरेवेति॥ किं च सिद्धार्थव्युत्पत्तेरुपपादितत्वात् "अविशिष्टस्तु वाक्यार्थः" इत्युक्तत्वाच्च मन्त्रादिप्रतिपाद्या देवताभ्युपेया न चतुर्थ्य-

१. A. omits आदि

भाष्यम्

हविः प्रदातुं शक्यते। श्रावयति च—“यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्” इति। न च शब्दमात्रमर्थस्वरूपं संभवति, शब्दार्थयोर्भेदात्। तत्र यादृशं मन्त्रार्थवादयोरिन्द्रादीनां स्वरूपमवगतं न तत्तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तम्। इतिहासपुराणमपि व्याख्यातेन मार्गेण संभवन्मन्त्रार्थवादमूलत्वात्प्रभवति देवताविग्रहादि साधयितुम्; प्रत्यक्षादिमूलमपि संभवति; भवति ह्यस्माकमप्रत्यक्षमपि चिरंतनानां प्रत्यक्षम्; तथा च व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते; यस्तु ब्रूयात्—इदानींतनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमिति, स जगद्वैचित्र्यं प्रतिषेधेत्। इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात्, ततश्च राजसूयादिचोदनोपरुन्ध्यात्; इदानीमिव च कालान्तरेऽप्यव्यवस्थितप्रायान्वर्णाश्रमधर्मान्प्रतिजानीत, ततश्च व्यवस्थाविधायि शास्त्रमनर्थकं स्यात्; तस्माद्धर्मोत्कर्षवशाच्चिरंतना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते। अपि च स्मरन्ति—“स्वाध्यायादिष्टदेवतासंप्रयोगः” इत्यादि। योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम्; श्रुतिश्च योगमाहात्म्यं प्रख्यापयति—

प्रकटार्थविवरणम्

न्तप्रयोगमात्रमित्याह—न च शब्दमात्रमिति ॥ यच्चोक्तं मूलाभावादितिहासपुराणमप्रमाणमिति तत्राह—इतिहासपुराणमपीति ॥ मार्जारादिदृष्टिवत्स्वविषयेऽतिशयग्राहकमार्षेयमपि प्रत्यक्षमूलं संभवतीत्याह—प्रत्यक्षादिमूलमपीति ॥ सामान्यतोदृष्टं दूषयति अतिप्रसङ्गेन—यस्तु ब्रूयादित्यादिना ॥ व्यवस्था[1]विधायीति कृतादियुगेषु धर्मविभागशास्त्रं श्लिष्यते युज्यते। पृथिव्यप्तेजोऽनिलाकाशसमुदायेभ्यः संमुत्थितं यच्छरीरं पञ्चात्मकम्, तस्मिन् योगप्रकर्षेण जाते सतीत्यर्थः। चित्रकारादिप्रसिद्धिरपि देवताविग्रहविषया

१. T and T[1] व्यवस्थापयतीति

भाष्यम्

" पृथिव्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥ "

इति । ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम् । तस्मात्समूलमितिहासपुराणम् । लोकप्रसिद्धिरपि न सति संभवे निरालम्बनाध्यवसातुं युक्ता । तस्मादुपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्त्वाद्यवगमः । ततश्चार्थित्वादिसंभवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः । क्रममुक्तिदर्शनान्यप्येवमेवोपपद्यन्ते ॥

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ १-३-३४ ॥

यथा मनुष्याधिकारनियममपोद्य देवादीनामपि विद्यास्वधिकार उक्तः, तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः

प्रकटार्थविवरणम्

नाप्रमाणमित्याह — लोकप्रसिद्धिरपीति ॥ अधिकरणार्थमुपसंहरति — तस्मादिति ॥

शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ॥

प्रासङ्गिकीं सङ्गतिमाह— यथा मनुष्येति ॥ अधिकारनिरूपणद्वारेण पूर्वत्र मन्त्रादीनां स्वार्थे समन्वयो निरूपितः । इहापि[1] तथैव शूद्रशब्दस्य समन्वयो निरूप्यत इति प्रासङ्गिकः समन्वयेऽन्तर्भावो विज्ञेयः । ब्रह्मविद्या विषयः । तस्यां किं शूद्रस्याधिकारोऽस्त्युत नास्तीति सन्देहे पूर्ववाद्याह—

१. A. इदानीं

भाष्यम्

स्यादित्येतामाशङ्कां निवर्तयितुमिदमधिकरणमारभ्यते । तत्र शूद्रस्याप्यधिकारः स्यादिति तावत्प्राप्तम्, अर्थित्वसामर्थ्ययोः संभवात्; "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इतिवत् 'शूद्रो विद्यायामनवक्लृप्तः' इति च निषेधाश्रवणात् । यच्च कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वम्, न तद्विद्यास्वधिकारस्यापवादकं लिङ्गम् । न ह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते । भवति च लिङ्गं शूद्राधिकारस्योपोद्बलकम्; संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति—"अह हारे त्वा शूद्र तवैव सह गोभिरस्तु" इति । विदुरप्रभृतयश्च शूद्रयोनिप्रभवा अपि विशिष्टविज्ञानसंपन्नाः स्मर्यन्ते । तस्मादधिक्रियते शूद्रो विद्यास्विति । एवं प्राप्ते ब्रूमः—

न शूद्रस्याधिकारः, वेदाध्ययनाभावात् । अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते । न च शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्वकत्वाद्वेदाध्ययनस्य, उपनयनस्य च वर्णत्रयविषयत्वात् । यत्त्वर्थित्वम्, न तदसति सामर्थ्येऽधिकारकारणं भवति । सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति; शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात्, शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराकरणेन निराकृतत्वात् ।

प्रकटार्थविवरणम्

तत्र शूद्रस्यापीपि ॥ अनवक्लृप्तोऽसमर्थः । अहेति निपातः खेदार्थः । हारेण सहित इत्वा रथस्तवैव गोभिः सहास्तु शूद्र किमनेनात्यल्पेनेति रैक्वः प्रोवाच । पूर्वाधिकरणेऽर्थित्वादिसंपन्नस्य फलवति स्वाभाविकी प्रवृत्तिरिति न्यायानुगृहीतेन[तात्] "तद्यो यो देवानाम्" इति ब्रह्मविद्यासंबन्धलिङ्गात् देवादीनामधिकारो निरूपितः । तथेहाप्यर्थित्वादिसंपन्नस्य शूद्रशब्देन परामर्शलिङ्गादस्त्यधिकार इति भावः । सूत्राद्बहिरेव सिद्धान्तमाह—न शूद्रस्याधिकार इति ॥ साङ्गाध्ययनविधिरदृष्टसंस्कारवद्वेदवाक्यजनितप्रमितिमत एवोत्तरविधिष्वधिकारो नान्यस्येति नियममन्तरेणानुपपद्यमानो वैदिकेषु ब्रह्मविद्यारूपफलपर्यन्तसाधनविधिषु शूद्रस्याधिकारं वारयतीति भावः ।

## भाष्यम्

यच्चेदम् "शूद्रो यज्ञेऽनवक्लृप्तः" इति तन्न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति, न्यायस्य च साधारणत्वात्। यत्पुनः संवर्गविद्यायां शूद्रशब्द-श्रवणं लिङ्गं मन्यसे, न तल्लिङ्गम्, न्यायाभावात्। न्यायोक्ते हि लिङ्गदर्शनं द्योतकं भवति। न चात्र न्यायोऽस्ति। कामं वायं शूद्रशब्दः संवर्गविद्या-यामेवैकस्यां शूद्रमधिकुर्यात्, तद्विषयत्वात्, न सर्वासु विद्यासु। अर्थ-वादस्थत्वात्तु न क्वचिदप्ययं शूद्रमधिकर्तुमुत्सहते। शक्यते चायं शूद्र-शब्दोऽधिकृतविषयो योजयितुम्; कथमित्युच्यते—"कं वर एनमे-तत्सन्तं सयुग्वानमिव रैक्वमात्थ" इत्यस्माद्धंसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे; तामृषी रैक्वः शूद्रशब्देनानेन

## प्रकटार्थविवरणम्

संस्कृतवेदार्थज्ञानाभावेन सामर्थ्याभावस्य न्यायस्य तुल्यत्वात् यज्ञग्रहण-मुपलक्षणार्थमित्याह—न्यायस्य च साधारणत्वादिति॥ पूर्ववाद्युक्तं लिङ्गमाभासीकरोति—न तल्लिङ्गमिति॥ न्यायतः सिद्धस्यार्थस्यार्थवाद-वाक्यमुपोद्बलकं भवति, न स्वातन्त्र्येण कस्यचित्साधकमिति पूर्वमीमांसानु-कारेणोक्तम्, न रहस्याभिप्रायेण, असति विरोधेऽर्थवादस्य स्वार्थे प्रामाण्याभ्यु-पगमात्। उभयथाप्यध्ययनाभावेनासामर्थ्यान्नेदं लिङ्गं अधिकारप्रापकमिति भावः। ननु यथा "एतया निषादस्थपतिं याजयेत्" इति वचनबलादवेष्टौ निषादस्थपतेरधिकारोऽध्ययनाभावेऽपि, तथा शूद्रस्य संवर्गविद्यायां भवि-ष्यतीत्याशङ्क्याभ्युपगम्याह—कामं वायमिति॥ तथापि विद्यात्वसामान्यान्न विद्यान्तरेष्वधिकारापादकत्वमिति भावः। इदानीमभ्युपगमं परित्यजति—अर्थवादस्थत्वादिति[1]॥ निषादस्थपतिशब्दस्य विधिवाक्यस्थत्वात् घटतेऽधि-कारप्रापकत्वम्; अस्य तु शूद्रशब्दस्यार्थवादगतत्वान्न संवर्गविद्यायामप्ययं शूद्रमधिकर्तुं शक्नोतीत्यर्थः। एवं सूत्राद्बहिरेव परिहारमुक्त्वा सूत्रयोजनया परिहारान्तरं वक्तुमुपक्रमते—शक्यते चायमित्यादिना॥ जानश्रुतिर्हि

१. A. वाक्यादिति.

भाष्यम्

सूचयांबभूवात्मनः परोक्षज्ञताख्यापनायेति गम्यते, जातिशूद्रस्यानधिकारात्। कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यत इति। उच्यते—तदाद्रवणात्; शुचमभिदुद्राव, शुचा वाभिदुद्रुवे, शुचा वा रैक्वमभिदुद्रावेति शूद्रः; अवयवार्थसंभवाद्रूढ्यर्थस्य चासंभवात्। दृश्यते चायमर्थोऽस्यामाख्यायिकायाम्॥

## क्षत्त्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्॥ १-३-३५॥

इतश्च न जातिशूद्रो जानश्रुतिः यत्कारणं प्रकरणनिरूपणेन क्षत्त्रियत्वमस्योत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्त्रियेण समभिव्याहारा-

प्रकटार्थविवरणम्

बहुमदोग्ध्रीषु काले हर्म्यतले कदाचित्सुष्वाप। तस्योपरिष्टादन्तरिक्षे हंसेषु गच्छत्सु मध्ये अग्रेसरं हंसं पृष्ठगो हंसः प्रोवाच—किं न पश्यसि परमधार्मिकस्य जानश्रुतेर्ज्योतिः द्युलोकलग्नम्; तत्त्वां धक्ष्यति इत्युक्तोऽग्रेसरः प्रोवाच—कमेकं वराकं सन्तं सयुग्वानमिव रैक्वमेतद्वचनं त्वमात्थ ब्रवीषि। युग्वा गन्त्री तया सह वर्तते यो रैक्वो यस्य ज्ञानफले सकलमपि कर्मफलमन्तर्भूतं स एवास्य वचनस्य योग्यः, नायमज्ञो जानश्रुतिरित्यर्थः। रैक्वं[शोकं] प्राप्तः शोकेन वा स गृहीतः, शोकवशाद्वा रैक्वं प्रति गत इति यौगिकार्थसान्निधाने सत्यप्रतिपन्नरूढ्यर्थकल्पनाद्वरं संप्रतिपन्नयौगिकार्थकल्पनमिति भावः। ननु तस्माद्धंसवाक्यात् स्वस्यानादरश्रवणात् जानश्रुतेः शुगुत्पन्नेत्येतदेव कथमवगम्यते येनासौ शूद्रशब्देन सूच्यत इत्युच्यतेत्याशङ्क्याह—दृश्यते चायमिति॥

क्षत्त्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्॥

शूद्रशब्दस्य यौगिकत्वे हेत्वन्तरमाह—इतश्चेति॥ शुनकस्यापत्यं कापिगोत्रपुरोहितम्। राजानं चाभिप्रतारिणं नामतः, कक्षसेनस्यापत्यम्। तावुभौ भोज-

१. T, TM, P and A. द्युलोकान्तत्वात् धक्ष्य

भाष्यम्

ल्लिङ्गाद्गम्यते । उत्तरत्र हि संवर्गविद्यावाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्त्रियः संकीर्त्यते—"अथ ह शौनकं च कापेयम् अभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इति । चैत्ररथित्वं चाभिप्रतारिणः कापेययोगादवगन्तव्यम् । कापेययोगो हि चित्ररथस्यावगतः "एतेन वै चित्ररथं कापेया अयाजयन्" इति । समानान्वयानां च प्रायेण समानान्वया याजका भवन्ति । "तस्माच्चैत्ररथिर्नामैकः क्षत्त्रपतिरजायत" इति च क्षत्त्रपतित्वावगमात्क्षत्त्रियत्वमस्यावगन्तव्यम् । तेन क्षत्त्रियेणाभिप्रतारिणा सह समानायां विद्यायां संकीर्तनं जानश्रुतेरपि क्षत्त्रियत्वं सूचयति । समानानामेव हि प्रायेण समभिव्याहारा भवन्ति । क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्त्रियत्वावगतिः । अतो न शूद्रस्याधिकारः ॥

प्रकटार्थविवरणम्

नायोपविष्टौ सूपकारेण परिविष्यमाणौ ब्रह्मचारी याचितवान् भिक्षामित्येतावत्प्रतीयते वाक्यशेषे, न चैत्ररथ इत्याशङ्क्याह—चैत्ररथित्वं चेति ॥ योऽभिप्रतारी स एव चैत्ररथ इति कापेययोगादवगन्तव्यम्; तत्कथमित्याह—कापेययोगो हीति ॥ तत्तद्राजवंश्यानां तत्तत्पुरोहितवंश्या बाहुल्येन याजका भवन्ति; कापेययोगश्च पूर्वं चित्ररथस्यावगतः; तस्मादिदानीमपि कापेययोगादभिप्रतारी चैत्ररथ इत्यर्थः । तर्हि चित्ररथस्यैव क्षत्त्रियत्वं कुतः सिद्धम्, येन तत्साहचर्यात् जानश्रुतेः क्षत्त्रियत्वावगम इत्याशङ्क्याह—तस्माच्चैत्ररथिर्नामेति ॥ क्षत्ता सूतः । तस्य प्रेषणं रैक्वान्वेषणाय । एवं जानश्रुतेः क्षत्त्रियत्वावगमान्न तस्य शूद्रशब्देन परामर्शात् शूद्राधिकारप्राप्तिरिति स्थितम् ॥

१. A omits भायङ्कय

भाष्यम्

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ १-३-३६ ॥

इतश्च न शूद्रस्याधिकारः, यद्विद्याप्रदेशेषूपनयनादयः संस्काराः परामृश्यन्ते—"तं होपनिन्ये", "अधीहि भगव इति होपससाद", "ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः" इति च। "तान्हानुपनीयैव" इत्यपि प्रदर्शितैवोपनयनप्राप्तिर्भवति। शूद्रस्य च संस्काराभावोऽभिलप्यते, "शूद्रश्चतुर्थो वर्ण एकजातिः" इत्येकजातित्वस्मरणात्। "न शूद्रे पातकं किंचिन्न च संस्कारमर्हति" इत्यादिभिश्च ॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥ १-३-३७ ॥

इतश्च न शूद्रस्याधिकारः, यत्सत्यवचनेन शूद्रत्वाभावे निर्धारिते जाबालं गौतम उपनेतुमनुशासितुं च प्रववृते "नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगाः" इति श्रुतिलिङ्गात् ॥

प्रकटार्थविवरणम्

संस्कारपरामर्शात् तदभावाभिलापाच्च ॥

शूद्राधिकाराभावे लिङ्गान्तरमाह—इतश्चेत्यादिना ॥ ब्रह्मपरा वेदपारगाः। [ब्रह्मनिष्ठाः][१] कार्यब्रह्मनिष्ठाः। ननु नास्त्युपनयननियमः वैश्वानरविद्यायामभावादित्याशङ्क्याह—तान्हानुपनीयैवेति ॥ तानौपमन्यवप्रभृतीननुपनीयैवाश्वपतिः प्रोवाचेति विशेषप्रतिषेधात् उपनयनप्राप्तिः प्रदर्शिता भवतीत्यर्थः। अस्तु ततः किमित्यत आह—शूद्रस्य चेति ॥ पातकमभक्ष्यभक्षणादिकृतम् ॥

तदभावनिर्धारणे च प्रवृत्तेः ॥

किं गोत्रोऽसीति पृष्टे नाहं वेद नापि मातेति जाबालेनोक्ते गौतम आह—

१ A omits कार्यब्रह्मनिष्ठाः

भाष्यम्

## श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ १-३-३८ ॥

इतश्च न शूद्रस्याधिकारः ; यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति । वेदश्रवणप्रतिषेधः, वेदाध्ययनप्रतिषेधः, तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते । श्रवणप्रतिषेधस्तावत् "अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्" इति ; "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्" इति च । अत एवाध्ययनप्रतिषेधः, यस्य हि समीपेऽपि नाध्येतव्यं भवति स कथमश्रुतमधीयीत । भवति च वेदोच्चारणे जिह्वाच्छेदः, धारणे शरीरभेद इति । अत एव चार्थादर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति "न शूद्राय मतिं दद्यात्" इति, "द्विजातीनामध्ययनमिज्या दानम्" इति च । येषां पुनः पूर्वकृतसंस्कारवशाद्विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिः, तेषां न शक्यते फलप्राप्तिः प्रतिषेद्धुम्, ज्ञानस्यैकान्तिकफलत्वात् । "श्रावयेच्चतुरो वर्णान्" इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात् । वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम् ॥

प्रकटार्थविवरणम्

नैतत्सत्यवचनमब्राह्मणो विवक्तुमर्हति मायावित्वसंभवाच्छूद्रस्य । अतः त्वामुपनेष्ये न सत्यवचनात् अतिक्रान्तोऽसीत्यर्थः ॥

श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥

त्रपुजतु[illegible]ां सीसकलाक्षाभ्यां तप्ताभ्यामित्यर्थः । पद्यु पादयुक्तम् । दानं नित्यम् । नैमि[illegible]कं तु दानं शूद्रस्याप्यस्ति । यच्चोक्तं विदुरादीनां ज्ञानित्वं स्मर्यते पुराणेष्विति, तत्राह—येषां पुनरिति ॥ साधकस्याधिकारिचिन्ता प्रवृत्ता, न सिद्धस्येत्यर्थः । साधकस्याप्यस्त्युपायान्तरमित्याह—श्रावयेदिति ॥

१. T, T1 and P. अपि वेत्तुमर्हति

भाष्यम्

## कम्पनात् ॥ १-३-३९ ॥

अवसितः प्रासङ्गिकोऽधिकारविचारः; प्रकृतामेवेदानीं वाक्यार्थविचारणां प्रवर्तयिष्यामः।

"यदिदं किं च जगत्सर्वं प्राण एजति निःसृतम्।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति॥" इति।

एतद्वाक्यम् "एजृ कम्पने" इति धात्वर्थानुगमाल्लक्षितम्। अस्मिन्वाक्ये सर्वमिदं जगत् प्राणाश्रयं स्पन्दते, महच्च किंचिद्भयकारणं वज्रशब्दितमुद्यतम्, तद्विज्ञानाच्चामृतत्वप्राप्तिरिति श्रूयते। तत्र कोऽसौ प्राणः, किं तद्भयानकं वज्रम्, इत्यप्रतिपत्तेर्विचारे क्रियमाणे प्राप्तं तावत्प्रसिद्धेः पञ्चवृत्तिर्वायुः प्राण इति; प्रसिद्धेरेव चाशनिर्वज्रं स्यात्; वायोश्चेदं माहात्म्यं संकीर्त्यते; कथम्? सर्वमिदं जगत् पञ्चवृत्तौ वायौ

प्रकटार्थविवरणम्

कम्पनात् ॥

सङ्गतिं कथयति—अवसित इति ॥ काठकवाक्यं पठति—यदिदमिति ॥ एजतिधात्वर्थस्य कम्पनस्य सूत्रकारेण ग्रहणात् एजतिपदयुक्तमेतत् वाक्यं सूत्रितमित्यर्थः। आपातप्रतिपन्नमर्थमाह—अस्मिन् वाक्य इति ॥ पूर्वत्र साङ्गाध्ययनविध्यन्यथानुपपत्त्या शूद्रश्रवणालिङ्गस्य बाधो दर्शितः; इह तु प्राण इति श्रुतिरमृतत्वं च लिङ्गम्; तयोर्विरोधे श्रुतिरेव बलीयसीत्यभिप्रेत्याह—प्रसिद्धेः पञ्चवृत्तिरिति ॥ ननु "अत एव प्राणः" इत्यत्र ब्रह्मलिङ्गेन श्रुतेर्बाधो दर्शितः। इहापि सर्वमिदं जगत्प्राणे निस्सृतं प्रतिष्ठितमेजतीति जगदाश्रयत्वं ब्रह्मलिङ्गं प्रतीयत इत्याशङ्क्याह—वायोश्चेदमिति ॥ प्रतिष्ठाय प्राणनिमित्तां प्रतिष्ठां लब्ध्वा जगच्चलतीति प्रसिद्धम्; ततो नेदं ब्रह्मलिङ्गं

१. T omits इति

भाष्यम्

प्राणशब्दिते प्रतिष्ठायैजति; वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यम्यते; वायौ हि पर्जन्यभावेन विवर्तमाने विद्युत्स्तनयित्नुवृष्ट्यशनयो विवर्तन्त इत्याचक्षते; वायुविज्ञानादेव चेदममृतत्वम्; तथा हि श्रुत्यन्तरम्—"वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद" इति; तस्माद्वायुरयमिह प्रतिपत्तव्य इत्येवं प्राप्ते ब्रूमः—

ब्रह्मैवेदमिह प्रतिपत्तव्यम्; कुतः? पूर्वोत्तरालोचनात्; पूर्वोत्तरयोर्हि ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे; इहैव कथमकस्मादन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहि? पूर्वत्र तावत्

"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन॥"

इति ब्रह्म निर्दिष्टम्; तदेवेहापि संनिधानात्, "जगत्सर्वं प्राण एजति" इति च लोकाश्रयत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते; प्राणशब्दोऽप्ययं परमात्मन्येव प्रयुक्तः, "प्राणस्य प्राणम्" इति दर्शनात्। एजयितृत्वमपीदं परमात्मन एवोपपद्यते, न वायुमात्रस्य;

प्रकटार्थविवरणम्

स्पष्टमिति भावः। वज्रशब्दादपि न ब्रह्म परिग्राह्यमित्याह— वायुनिमित्तमेव चेति॥ व्यष्टिः विशेषः व्यावृत्तं रूपम्; समष्टिः समनुगताकारः। यस्मात्समष्टिव्यष्ट्यात्मकं त[त्मकसू]त्रात्मज्ञानादमृतत्वं श्रुतम्, तस्मादित्युपसंहारः॥

उत्सूत्रमेव सिद्धान्तमाह—ब्रह्मैवेदमिति॥ पूर्वापरवाक्यैकवाक्यतानुगृहीतसकललोकाश्रयत्वलिङ्गं प्राणश्रुतेः बाधकमिति भावः। किं च ब्रह्मणि लाक्षणिकोऽपि प्राणशब्दो नात्यन्तमप्रसिद्ध इत्याह—प्राणशब्दो ह्ययमिति॥ इदानीं सूत्रं योजयितुमुपक्रमते—एजयितृत्वमपीत्यादिना॥ सवायुकस्य जगतः कम्पनश्रवणादपि न वायुः प्राण इत्यर्थः। कथं तर्हि वज्रशब्दः सङ्गच्छत

१. A omits अपि

भाष्यम्

तथा चोक्तम्—

"न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥" इति ।

उत्तरत्रापि

"भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥"

इति ब्रह्मैव निर्देक्ष्यते, न वायुः, सवायुकस्य जगतो भयहेतुत्वाभिधानात्; तदेवेहापि संनिधानात् "महद्भयं वज्रमुद्यतम्" इति च भयहेतुत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते; वज्रशब्दोऽप्ययं भयहेतुत्वसामान्यात्प्रयुक्तः; यथा हि 'वज्रमुद्यतं ममैव शिरसि निपतेद्यद्यहमस्य शासनं न कुर्याम्' इत्यनेन भयेन जनो नियमेन राजादिशासने प्रवर्तते, एवमिदमग्निवायुसूर्यादिकं जगदस्मादेव ब्रह्मणो बिभ्यत् नियमेन स्वव्यापारे प्रवर्तत इति भयानकं वज्रोपमितं ब्रह्म । तथा च ब्रह्मविषयं श्रुत्यन्तरम्—"भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः" इति । अमृतत्वफलश्रवणादपि ब्रह्मैवेदमिति गम्यते; ब्रह्मज्ञानाद्ध्यमृतत्वप्राप्तिः । "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति मन्त्रवर्णात् । यत्तु वायुविज्ञानात्क्वचिदमृतत्वमभिहितम्, तदापेक्षिकम्; तत्रैव प्रकरणान्तरकरणेन परमात्मानमभिधाय "अतोऽन्यदार्तम्" इति वाय्वादेरार्तत्वाभिधानात् । प्रकरणादप्यत्र परमात्मनिश्चयः;

"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥"

इति परमात्मनः पृष्टत्वात् ॥

प्रकटार्थविवरणम्

इत्याशङ्क्याह—वज्रशब्दोऽप्ययमिति ॥ किं च निरुपचरितामृतत्वश्रवणाच्च प्राणो ब्रह्मैवेत्याह—अमृतत्वेत्यादिना ॥

भाष्यम्

## ज्योतिर्दर्शनात् ॥ १-३-४० ॥

" एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते " इति श्रूयते। तत्र संशय्यते, किं ज्योतिःशब्दं चक्षुर्विषयतमोपहं तेजः, किं वा परं ब्रह्मेति। किं तावत्प्राप्तम्? प्रसिद्धमेव तेजो ज्योतिःशब्दमिति। कुतः? तत्र ज्योतिःशब्दस्य रूढत्वात्। "ज्योतिश्चरणाभिधानात्" इत्यत्र हि प्रकरणात् ज्योतिःशब्दः स्वार्थं परित्यज्य ब्रह्मणि वर्तते; न चेह तद्वत्किंचित्स्वार्थपरित्यागे कारणं दृश्यते। तथा च नाडीखण्डे—"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति मुमुक्षोरादित्यप्राप्तिरभिहिता। तस्मात्प्रसिद्धमेव तेजो ज्योतिःशब्दमिति। एवं प्राप्ते ब्रूमः—

प्रकटार्थविवरणम्

### ज्योतिर्दर्शनात् ॥

ज्योतिःश्रुतिब्रह्मप्रकरणाभ्यां संशयमाह—तत्रेत्यादिना ॥ पूर्वत्रैकस्याः प्राणश्रुतेः लिङ्गप्रकरणाभ्यां बाधो दर्शितः; इह तु—ज्योतिरिति श्रुतिः क्त्वाप्रत्ययात् पूर्वापरभावश्च लिङ्गम्; प्रकरणं चाभिनिष्पन्नस्वरूपापेक्षयोपपन्नम्; अतोऽर्चिरादिमार्गेऽर्चिरपेक्षया पर आदित्यः ज्योतिःश्रुत्याभिधीयत इत्याह—प्रसिद्धमेव तेज इति ॥ ननु ब्रह्मप्रकरणगतो ज्योतिःशब्दः पूर्वं ब्रह्मण्येव व्यवस्थापितः; तथायमपि भविष्यतीत्याशङ्क्याह—ज्योतिश्चरणेति ॥ द्युसंबन्धात्प्रत्यभिज्ञायमानस्य[1] प्रकृतस्य परामर्शकयच्छब्दसामानाधिकरण्यात् तत्र ज्योतिःशब्दस्य स्वार्थत्यागोऽङ्गीकृतः, तथेह बलवत्कारणं नोपलभ्यत इति भावः। इतश्चार्चिरादिमार्गस्थ आदित्यो ज्योतिरित्याह—तथा चेति ॥ शरीरादुत्थितस्योपसंपत्तव्यं[2] ज्योतिरादित्याख्यमेव रश्मिनाडीसंबन्धप्रतिपादके खण्डे दृष्टमित्यर्थः। सिद्धान्तत्वेन सूत्रमवतारयति—एवं प्राप्ते ब्रूम इत्यादिना ॥

१. A. प्रतिज्ञायमान-  २. T, T¹, P and TM. सत्तव्यं

भाष्यम्

परमेव ब्रह्म ज्योतिःशब्दम् । कस्मात् ? दर्शनात् । तस्य हीह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते ; "य आत्माऽपहतपाप्मा" इत्यपहतपाप्मत्वादिगुणकस्यात्मनः प्रकरणादावन्वेष्टव्यत्वेन विजिज्ञासितव्यत्वेन च प्रतिज्ञानात् ; "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति चानुसंधानात् । "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति चाशरीरतायै ज्योतिःसंपत्तेरस्याभिधानात् । ब्रह्मभावाच्चान्यत्राशरीरतानुपपत्तेः "परं ज्योतिः" "स उत्तमः पुरुषः" इति च विशेषणात् । यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति, नासावात्यन्तिको मोक्षः, गत्युत्क्रान्तिसंबन्धात् । न ह्यात्यन्तिके मोक्षे गत्युत्क्रान्ती स्त इति वक्ष्यामः ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १-३-४१ ॥

"आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" इति श्रूयते । तत्किमाकाशशब्दं परं ब्रह्म किं वा

प्रकटार्थविवरणम्

शरीरात्समुत्थाय त्वंपदार्थलक्ष्यं विविच्य ज्योतिरुपसंपद्य तत्पदलक्ष्यं निर्धार्यानन्तरं स्वरूपाभिनिष्पत्तिर्वाक्यार्थज्ञानफलमित्ययमर्थोऽस्य वाक्यस्योपक्रमबलादवगम्यते ; कथंकारमर्चिरादिमार्गग्रहणमिति भावः । किं च सुखदुःखोपकरणमनःशरीरव्यावृत्तयेऽस्याः ज्योतिःसंपत्तेरभिधानात् अर्चिरादिमार्गगतस्य च मनसैतान् पश्यन्निति मनोवियोगाभावात् ब्रह्मैव ज्योतिरित्याह—अशरीरं वावेति ॥ परत्वादिविशेषणाच्च ब्रह्मैव ज्योतिरित्याह—परं ज्योतिरिति ॥ नाडीखण्डेऽर्चिरादिमार्गपर्यवर्णनमुचितमुपासनप्रकरणस्थत्वादित्यभिप्रेत्याह—नासावात्यन्तिक इति ॥

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥

छान्दोग्यवाक्यं पठित्वा आकाशश्रुतेर्नामरूपव्यतिरेकाच्च संशयमाह—तत्किमाकाशशब्दमिति ॥ पूर्वत्रोपक्रमानुसारेणार्थान्तरे प्रसिद्धोऽपि ज्योतिः-

१. A omits प्रसिद्धः

भाष्यम्

प्रसिद्धमेव भूताकाशमिति विचारे भूतपरिग्रहो युक्तः, आकाशशब्दस्य तस्मिन् रूढत्वात् ; नामरूपनिर्वहणस्य चावकाशदानद्वारेण तस्मिन् योजयितुं शक्यत्वात्, स्रष्टृत्वादेश्च स्पष्टस्य ब्रह्मलिङ्गस्याश्रवणादिति । एवं प्राप्त इदमुच्यते—

परमेव ब्रह्मेहाकाशशब्दं भवितुमर्हति ; कस्मात्? "ते यदन्तरा तद्ब्रह्म" इति हि नामरूपाभ्यामर्थान्तरभूतमाकाशं व्यपदिशति ; न च ब्रह्मणोऽन्यन्नामरूपाभ्यामर्थान्तरं संभवति, सर्वस्य विकारजातस्य नामरूपाभ्यामेव व्याकृतत्वात् । नामरूपयोरपि निर्वहणं निरङ्कुशं न ब्रह्मणोऽन्यत्र संभवति, "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इत्यादि ब्रह्मकर्तृकत्वश्रवणात् । ननु जीवस्यापि प्रत्यक्षं नामरूपविषयं निर्वोढृत्वमस्ति ; बाढमस्ति ; अभेदस्त्विह विवक्षितः । नामरूपनिर्वहणाभिधानादेव च स्रष्टृत्वादि ब्रह्मलिङ्गमभिहितं भवति ।

प्रकटार्थविवरणम्

शब्दः स्वार्थात् प्रच्यावितः, तथेहाकाशोपक्रमबलात् ब्रह्मादिशब्दः स्वार्थात् प्रच्याव्यतामित्यभिप्रेत्याह—भूतपरिग्रहो युक्त इति ॥ बलवदपवादकमपि नोपलभ्यत इत्याह—नामरूपनिर्वहणस्य चेति ॥

भूताकाशस्य नामरूपप्रपञ्चान्तर्गतत्वादेव ततोऽर्थान्तरत्वानुपपत्तेः निरङ्कुशस्य तन्निर्वाहकत्वस्याप्ययोगात् ब्रह्मैवाकाशपदलक्ष्यमित्याह-परमेव ब्रह्मेति ॥ नामरूपनिर्वहणं ब्रह्मलिङ्गमेव न भवतीत्याह— ननु जीवस्यापीति ॥ सत्यं जीवस्यापि नामरूपनिर्वाहकत्वं साक्षात्कृतमस्ति ; किं तु परमेश्वराभेदाभिप्रायेणेत्याह — बाढमस्तीति ॥ यच्चोक्तं न स्रष्टृत्वादि ब्रह्मलिङ्गमिहास्तीति तत्राह—नामरूपेति ॥ ननु बहूनि चेद्ब्रह्मवादस्य लिङ्गानि सन्ति तर्हि "आकाशस्तल्लिङ्गात्" इत्यनेनास्य विचारितत्वात् न पृथगारम्भ इत्याशङ्क्याह—

१. A. दुत्पादकमपि    २. A. ब्रह्मणि

भाष्यम्

"तद्ब्रह्म तदमृतं स आत्मा" इति च ब्रह्मवादस्य लिङ्गानि। "आकाशस्तल्लिङ्गात्" इत्यस्यैवायं प्रपञ्चः ॥

# सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १-३-४२ ॥

व्यपदेशादित्यनुवर्तते। बृहदारण्यके षष्ठे प्रपाठके "कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इत्युपक्रम्य भूयानात्मविषयः प्रपञ्चः कृतः। तत्किं संसारिस्वरूपमात्रान्वाख्यानपरं वाक्यम्, उतासंसारिस्वरूपप्रतिपादनपरमिति विशयः। किं तावत्प्राप्तम्? संसारिस्वरूपमात्रविषयमेवेति; कुतः? उपक्रमोपसंहाराभ्याम्। उपक्रमे "योऽयं विज्ञानमयः प्राणेषु" इति शारीरलिङ्गात्, उपसंहारे च "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु" इति तदपरित्यागात्; मध्येऽपि बुद्धान्ताद्यवस्थोपन्यासेन तस्यैव प्रपञ्चनादिति। एवं प्राप्ते ब्रूमः—

प्रकटार्थविवरणम्

आकाशस्तल्लिङ्गादिति ॥ अस्यैव साधकोऽयं विचारः। इह हि आकाशस्य सिद्धवद्ब्रह्मणि वृत्तिमाश्रित्य तत्र संशयादिप्रवृत्तिः। अतो नास्य तद्बलेनारम्भाक्षेप इति भावः ॥

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥

उभयलिङ्गदर्शनात् संशयमाह—तत्किं संसारीति ॥ पूर्वत्र बहुतरलिङ्गावगमेन ब्रह्मपरत्वं निर्णीतम्[१]। इह तु आदिमध्यावसानेषु जीवलिङ्गानामेव बहुत्वात् जीवकथनपरं वाक्यमित्याह—किं तावदित्यादिना ॥ "कतम आत्मा" इति जनकेन पृष्टे याज्ञवल्क्यः[वल्क्येन] "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्वर्तमानः" इति प्राणाद्यवच्छिन्नो जीव एवोक्तः; ततो जागरणाद्यवस्थावत्त्वेन चेत्यर्थः ॥

१. T and T¹. वर्णितम्

भाष्यम्

परमेश्वरोपदेशपरमेवेदं वाक्यम्, न शारीरमात्रान्वाख्यानपरम्; कस्मात्? सुषुप्तावुत्क्रान्तौ च शारीराद्भेदेन परमेश्वरस्य व्यपदेशात्। सुषुप्तौ तावत् "अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" इति शारीराद्भेदेन परमेश्वरं व्यपदिशति; तत्र पुरुषः शारीरः स्यात्, तस्य वेदितृत्वात्; बाह्याभ्यन्तरवेदनप्रसङ्गे सति तत्प्रतिषेधसंभवात्; प्राज्ञः परमेश्वरः, सर्वज्ञत्वलक्षणया प्रज्ञया नित्यमवियोगात्। तथोत्क्रान्तावपि "अयं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति" इति जीवाद्भेदेन परमेश्वरं व्यपदिशति; तत्रापि शारीरो जीवः स्याच्छरीरस्वामित्वात्; प्राज्ञस्तु स एव परमेश्वरः। तस्मात्सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्परमेश्वर एवात्र विवक्षित इति गम्यते। यदुक्तमाद्यन्तमध्येषु शारीरलिङ्गात्तत्परत्वमस्य वाक्यस्येति, अत्र ब्रूमः—उपक्रमे तावत् "योऽयं विज्ञानमयः प्राणेषु" इति न संसारिस्वरूपं विवक्षितम्; किं तर्हि अनूद्य संसारिस्वरूपं

प्रकटार्थविवरणम्

पदान्तराधिकरणे[राध्याहारेण] सूत्रं योजयति—परमेश्वर इत्यादिना॥ ननु 'अयं पुरुषः' इति कार्यकारणसंघात एवोच्यते न जीव इत्याशङ्क्याह—तत्र पुरुष इति॥ तर्हि सुषुप्ते विशेषविज्ञानाभावात् प्रकर्षेणाज्ञरूपेण संपन्नो जीव एवोच्यत इत्याशङ्क्याह—प्राज्ञः परमेश्वर इति॥ निरतिशयप्रज्ञाशालिनि प्रसिद्धः प्राज्ञशब्दो नाज्ञं ब्रूयात्। अतः सर्वज्ञत्वश्रवणप्रमाणिकया प्रज्ञयावियोगादीश्वर एव प्राज्ञ इत्यर्थः। उत्सर्जन् संभृतशकटवत् शब्दं कुर्वन्। योऽयं विज्ञानमयो जीवः प्राणेषु हृद्यन्तर्वर्तमानः स ज्योतिःपुरुषः स्वप्रकाशः परमात्मेति प्रसिद्धानुवादेनाप्रसिद्धब्रह्मात्मता प्रतिपाद्यत इत्याह—उपक्रमे तावदिति॥ ध्यायन्त्यां बुद्धौ ध्यायतीव, लेलायन्त्यां चलन्त्यां बुद्धौ चलतीव, न तु साक्षाच्चलतीत्यर्थः। मध्ये तर्हि जाग-

१ A. चलन्तीव

भाष्यम्

परेण ब्रह्मणास्यैकतां विवक्षति; यतः "ध्यायतीव लेलायतीव" इत्येवमाद्युत्तरग्रन्थप्रवृत्तिः संसारिधर्मनिराकरणपरा लक्ष्यते । तथोपसंहारेऽपि यथोपक्रममेवोपसंहरति—"स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु" इति; योऽयं विज्ञानमयः प्राणेषु संसारी लक्ष्यते, स वा एष महानज आत्मा परमेश्वर एवास्माभिः प्रतिपादित इत्यर्थः; यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासात्संसारिस्वरूपविवक्षां मन्यते, स प्राचीमपि दिशं प्रस्थापितः प्रतीचीमपि दिशं प्रतिष्ठेत; यतो न बुद्धान्ताद्यवस्थोपन्यासेनावस्थावत्त्वं संसारित्वं वा विवक्षति, किं तर्हि? अवस्थारहितत्वमसंसारित्वं च; कथमेतदवगम्यते? यत् "अत ऊर्ध्वं विमोक्षायैव ब्रूहि" इति पदे पदे पृच्छति; यच्च "अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः" इति पदे पदे प्रतिवक्ति; "अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्शोकान्हृदयस्य भवति" इति च । तस्मादसंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् ॥

## पत्यादिशब्देभ्यः ॥ १-३-४३ ॥

इतश्चासंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम्; यदस्मिन्वाक्ये पत्यादयः शब्दा असंसारिस्वरूपप्रतिपादनपराः संसारिस्व-

प्रकटार्थविवरणम्

राद्यवस्थोपन्यासात्[1] संसारिणि तात्पर्यं भवत्वित्याशङ्क्याह—यस्त्विति ॥ प्रश्नप्रतिवचनपर्यालोचनया मोक्षसाधनासंसारिस्वरूपज्ञानमेवेह विवक्षितमिति भावः ॥

पत्यादिशब्देभ्यः ॥

हेत्वन्तराभिधानपरतया सूत्रं योजयति—इतश्चेति ॥ सर्वमस्य वशो वर्तते

१. A. भवतु

भाष्यम्

भावप्रतिषेधनाश्च भवन्ति—"सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इत्येवंजातीयका असंसारिस्वभावप्रतिपादनापराः ; "स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्" इत्येवंजातीयकाः संसारिस्वभावप्रतिषेधनाः । तस्मादसंसारी परमेश्वर इहोक्त इत्यवगम्यते ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
प्रथमाध्यायस्य तृतीयः पादः ॥

प्रकटार्थविवरणम्

अधीनं भवतीति सर्वस्य वशी । सर्वस्य नियमनशक्तिसंपन्न ईशानः । तत एव सर्वस्याधिपतिः नियन्तेत्यर्थः ॥

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे
प्रथमस्याध्यायस्य तृतीयः पादः समाप्तः ॥

# अथ चतुर्थः पादः

भाष्यम्

ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मणो लक्षणमुक्तम्—"जन्माद्यस्य यतः" इति। तल्लक्षणं प्रधानस्यापि समानमित्याशङ्क्य तदशब्दत्वेन निराकृतम्—"ईक्षतेर्नाशब्दम्" इति। गतिसामान्यं च वेदान्तवाक्यानां ब्रह्मकारणवादं प्रति विद्यते, न प्रधानकारणवादं प्रतीति प्रपञ्चितं गतेन ग्रन्थेन। इदं त्विदानीमवशिष्टमाशङ्क्यते—यदुक्तं प्रधानस्याशब्दत्वम्, तदसिद्धम्, कासुचिच्छाखासु प्रधानसमर्पणाभासानां शब्दानां श्रूयमाणत्वात्। अतः प्रधानस्य कारणत्वं वेदसिद्धमेव महद्भिः परमर्षिभिः कपिलप्रभृतिभिः परिगृहीतमिति प्रसज्यते; तद्यावत्तेषां शब्दानामन्यपरत्वं न प्रतिपाद्यते तावत्सर्वज्ञं ब्रह्म जगतः कारणमिति प्रतिपादितमप्याकुलीभवेत्; अतस्तेषामन्यपरत्वं दर्शयितुं परः संदर्भः प्रवर्तते॥

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपक-विन्यस्तगृहीतेर्दर्शयति च॥ १-४-१॥

आनुमानिकमप्यनुमाननिरूपितमपि प्रधानमेकेषां शाखिनां शब्द-

प्रकटार्थविवरणम्

व्यवहितेन संबन्धं वक्तुं वृत्तमनुवदति—ब्रह्मजिज्ञासामिति॥ ईक्षत्यधिकरणे प्रधानस्याशब्दत्वम्, ब्रह्मणि वेदान्तानां गतिसामान्यं च सूचितम्। तत्र गतिसामान्यं प्रपञ्चितं गतेन ग्रन्थेन। इदानीं केषांचिच्छब्दानां आपाततः प्रधानपरतयाशङ्क्यमानानामन्यपरत्वव्याख्यानेनाशब्दत्वप्रपञ्चनाय कतिपयसूत्रारम्भः, तेन च समन्वय एव दृढीकृत इति भावः॥

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च॥

एवं संबन्धमभिधाय पूर्वपक्षभागं व्याचष्ट—आनुमानिकमपीति॥ अव्यक्तपदं शरीरपरं प्रधानपरं[2] वेति प्रकरणाव्यक्तशब्दाभ्यां सन्देहे

१. T and TM. ब्रवति

२. A omits प्रधानपरं

## भाष्यम्

वदुपलभ्यते ; काठके हि पठ्यते—"महतः परमव्यक्तमव्यक्तात्पुरुषः परः" इति ; तत्र य एव यन्नामानो यत्क्रमाश्च महदव्यक्तपुरुषाः स्मृतिप्रसिद्धाः, त एवेह प्रत्यभिज्ञायन्ते ; तत्राव्यक्तमिति स्मृतिप्रसिद्धेः, शब्दादिहीनत्वाच्च न व्यक्तमव्यक्तमिति व्युत्पत्तिसंभवात्, स्मृतिप्रसिद्धं प्रधानमभिधीयते ; अतस्तस्य शब्दवत्त्वादशब्दत्वमनुपपन्नम् ; तदेव च जगतः कारणं श्रुतिस्मृतिन्यायप्रसिद्धिभ्य इति चेत्, नैतदेवम्—न ह्येतत्काठकवाक्यं स्मृतिप्रसिद्धयोर्महदव्यक्तयोरस्तित्वपरम् । न तत्र यादृशं स्मृतिप्रसिद्धं स्वतन्त्रं कारणं त्रिगुणं प्रधानं तादृशं प्रत्यभिज्ञायते ; शब्दमात्रं ह्यत्राव्यक्तमिति प्रत्यभिज्ञायते ; स च शब्दो न व्यक्तमव्यक्त-

## प्रकटार्थविवरणम्

प्रकृतजीवप्रतिपादनत्यागेनाप्रसिद्धब्रह्म[1]प्रतिपादनवदप्रसिद्धप्रधानप्रतिपादकमेव काठकवाक्यमिति भावः । किं च स्मार्तक्रमसादृश्येन प्रत्यभिज्ञायमानत्वादित्याह—तत्र य एवेति ॥ किञ्च[2] प्रधानेऽव्यक्तमिति सांख्यस्मृतिप्रसिद्धे रूढ एवायं शब्द इत्यर्थः । यौगिकत्वेऽपि प्रधानमेवाभिधीयत इत्याह—शब्दादिहीनत्वाच्चेति ॥ अस्तु प्रधानं शाब्दम्, किमेतावता ब्रह्मण्यायातमित्याशङ्क्याह—तदेव च जगत इति ॥ यदा प्रधानं शाब्दं तदा कपिलस्मृतेः तत्सिद्धन्यायेन च तदेव जगत्कारणमिति न जगत्कारणे ब्रह्मणि समन्वयः सिध्यतीति भावः । सौत्रस्य नञोऽर्थमाह—नैतदेवमिति ॥ किं प्रधानस्य शाब्दत्वं तात्पर्यवृत्त्या किं वा शक्तिगोचरत्वेन ? नाद्य इत्याह—न ह्येतादिति ॥ "आत्मानं रथिनं विद्धि" इत्यारभ्य "पुरुषान्न परं किंचित्" इत्यन्तं वाक्यं परमात्मविज्ञानपरमेव, "निचाय्य तं मृत्युमुखात्प्रमुच्यते" इति फलश्रवणादिति भावः । ननु प्रधानस्येह प्रत्यभिज्ञायमानत्वात् तत्र तात्पर्यं कल्प्यत इत्याशङ्क्याह — न तत्रेति[3] ॥ विशेषप्रत्यभिज्ञापकाभावान्नाव्यक्तशब्दस्य तत्र

१. A omits ब्रह्म...वद  ३. A. नात्रेति

२. A omits किञ्च

भाष्यम्

मिति यौगिकत्वादन्यस्मिन्नपि सूक्ष्मे सुदुर्लक्ष्ये च प्रयुज्यते ; न चायं कस्मिंश्चिद्रूढः ; या तु प्रधानवादिनां रूढिः सा तेषामेव पारिभाषिकी सती न वेदार्थनिरूपणे कारणभावं प्रतिपद्यते ; न च क्रममात्रसामान्यात्समानार्थप्रतिपत्तिर्भवति, असति तद्रूपप्रत्यभिज्ञाने ; न ह्यश्वस्थाने गां पश्यन्नश्वोऽयमित्यमूढोऽध्यवस्यति । प्रकरणनिरूपणायां चात्र न परपरिकल्पितं प्रधानं प्रतीयते, शरीररूपकविन्यस्तगृहीतेः ; शरीरं ह्यत्र रथरूपकविन्यस्तमव्यक्तशब्देन परिगृह्यते ; कुतः ? प्रकरणात्परिशेषाच्च । तथा ह्यनन्तरातीतो ग्रन्थ आत्मशरीरादीनां रथिरथादिरूपककॢप्तिं दर्शयति—

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥" इति ।

प्रकटार्थविवरणम्

तात्पर्यं कल्पयितुं शक्यत इत्यर्थः । ननु प्रधानेऽव्यक्तशब्दस्य रूढत्वाच्छक्तिगोचरत्वेनैव शाब्दत्वमित्याशङ्क्याह—न चायं कस्मिंश्चिदिति ॥ वृद्धव्यवहारेऽसिद्धम् ; नाप्यखण्डः शब्दोऽयमित्यर्थः । ननु सांख्यै रूढिरङ्गीकृतेत्याशङ्क्याह—या त्विति ॥ पुरुषकृतः संकेतो नानादिवेदार्थनिर्धारणे हेतुरित्यर्थः । ननु स्मार्तक्रमसादृश्येन प्रत्यभिज्ञायत इत्युक्तम्, तत्राह—न च क्रममात्रेति ॥ इतश्च न प्रधानमव्यक्तशब्दवाच्यमित्याह—प्रकरणनिरूपणायां चेति ॥ प्रकरणं विविच्य दर्शयति—तथा हीत्यादिना ॥ रथिरथादिसामान्यकल्पनं रूपकॢप्तिः । प्रग्रहमश्वरशनां तेष्विति । तेषामिन्द्रियाणां विषयान् शब्दादीन् हयानां गोचरान्मार्गानाहुः । रथरूपकल्पनां दर्श-

भाष्यम्

तैश्चेन्द्रियादिभिरसंयतैः संसारमधिगच्छति, संयतैस्त्वध्वनः पारं तद्विष्णोः परमं पदमाप्नोति—इति दर्शयित्वा, किं तदध्वनः पारं विष्णोः परमं पदमित्यस्यामाकाङ्क्षायां तेभ्य एव प्रकृतेभ्य इन्द्रियादिभ्यः परत्वेन परमात्मानमध्वनः पारं तद्विष्णोः परमं पदं दर्शयति—

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥" इति ।

तत्र य एवेन्द्रियादयः पूर्वस्यां रथरूपककल्पनायामश्वादिभावेन प्रकृताः, त एवेह परिगृह्यन्ते प्रकृतहानाप्रकृतप्रक्रियापरिहाराय । तत्रेन्द्रियमनोबुद्धयस्तावत्पूर्वत्रेह च समानशब्दा एव; अर्था ये शब्दादयो विषया इन्द्रियहयगोचरत्वेन निर्दिष्टाः, तेषां चेन्द्रियेभ्यः परत्वम् । 'इन्द्रियाणां ग्रहत्वं विषयाणामतिग्रहत्वम्' इति श्रुतिप्रसिद्धेः ।

प्रकटार्थविवरणम्

यित्वा किं दर्शितमित्याशङ्क्याह—तैश्चेन्द्रियादिभिरिति ॥ ननु पूर्ववाक्यविलक्षणक्रमदर्शनादन्ये एव पदार्था अत्रोच्यन्त इत्याशङ्क्याह— तत्र य एवेति ॥ एवं प्रकरणशुद्धिं कृत्वा परिशेषमुपक्रमते—तत्रेन्द्रियमन इति ॥ पूर्वत्र परिशिष्टं शरीरमुत्तरत्र परिशिष्टेनाव्यक्तपदेनाभिधातव्यमिति भावः । ननु उत्तरोत्तरपरत्वाभिधानं केनाभिप्रायेण ? श्रेष्ठत्वाभिप्रायेणेत्याह— अर्था ये शब्दादय इति ॥ इन्द्रियाणां ग्राहकत्वं विषयाधीनमिति विषयाणामतिग्राहकत्वं[ग्रहत्वं] विवक्षितमिति भावः । श्रुतिस्मृतिप्रसिद्धा वा हैरण्यगर्भी बुद्धिर्हिरण्यगर्भाभेदेन ब्रह्मादिशब्दवाच्या महानात्मेत्युच्यत इत्याह—

१. T and T¹. विशेषं

२. A omits तत्र

३. A. धीनमिति ग्रहत्वविवक्षितं

भाष्यम्

विषयेभ्यश्च मनसः परत्वम्, मनोमूलत्वाद्विषयेन्द्रियव्यवहारस्य; मनसस्तु परा बुद्धिः—बुद्धिं ह्यारुह्य भोग्यजातं भोक्तारमुपसर्पति; बुद्धेरात्मा महान्परः—यः सः "आत्मानं रथिनं विद्धि" इति रथित्वेनोपक्षिप्तः। कुतः? आत्मशब्दात्, भोक्तुश्च भोगोपकरणात्परत्वोपपत्तेः; महत्त्वं चास्य स्वामित्वादुपपन्नम्। अथ वा

"मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः।
प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यते॥"

इति स्मृतेः, "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति च श्रुतेः या प्रथमजस्य हिरण्यगर्भस्य बुद्धिः सा सर्वासां बुद्धीनां परमा प्रतिष्ठा; सेह महानात्मेत्युच्यते। सा च पूर्वत्र बुद्धिग्रहणेनैव गृहीता सती हिरुगिहोपदिश्यते, तस्या अप्यस्मदीयाभ्यो बुद्धिभ्यः परत्वोपपत्तेः; एतस्मिंस्तु पक्षे परमात्मविषयेणैव परेण पुरुषग्रहणेन रथिन आत्मनो ग्रहणं द्रष्टव्यम्, परमार्थतस्तु परमात्मविज्ञानात्मनोर्भेदाभावात्। तदेवं शरीरमेवैकं परिशिष्यते; तेष्वितराणीन्द्रियादीनि प्रकृतान्येव परमपदं दिदर्शयिषया समनुक्रामन्परिशिष्यमाणेनेहान्त्येनाव्यक्तशब्देन परिशिष्यमाणं प्रकृतं शरीरं दर्शयतीति गम्यते। शरीरेन्द्रियमनोबुद्धिविषयवेदनासंयुक्तस्य ह्यविद्यावतो भोक्तुः

प्रकटार्थविवरणम्

अथ वेति॥ नन्वप्रक्रान्ता सा कथमुच्यत इत्याशङ्क्याह—सा च पूर्वत्रेति॥ हिरुक् पृथक्। तर्ह्यात्मापि रथी परिशिष्टः स्यादित्याशङ्क्याह—एतस्मिंस्तु पक्ष इति॥ उपसंहरति—तदेवमिति॥ ननु शरीरादिप्रतिपादने फलाभावात् किमर्थं तत्प्रतिपाद्यत इत्याशङ्क्याह—शरीरेन्द्रियमनोबुद्धीति॥

भाष्यम्

शरीरादीनां रथादिरूपककल्पनया संसारमोक्षगतिनिरूपणेन प्रत्यगात्मब्रह्मावगतिरिह विवक्षिता ; तथा च

"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥"

इति वैष्णवस्य परमपदस्य दुरवगमत्वमुक्त्वा तदवगमार्थं योगं दर्शयति—

"यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥" इति ।

एतदुक्तं भवति—वाचं मनसि संयच्छेत् वागादिबाह्येन्द्रियव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत ; मनोऽपि विषयविकल्पाभिमुखं विकल्पदोषदर्शनेन ज्ञानशब्दोदितायां बुद्धावध्यवसायस्वभावायां धारयेत् ; तामपि बुद्धिं महत्यात्मनि भोक्तर्यग्र्यायां वा बुद्धौ सूक्ष्मतापादनेन नियच्छेत् ; महान्तं त्वात्मानं शान्त आत्मनि प्रकरणवति परस्मिन्पुरुषे परस्यां काष्ठायां प्रतिष्ठापयेदिति च । तदेवं पूर्वापरालोचनायां नास्त्यत्र परपरिकल्पितस्य प्रधानस्यावकाशः ॥

## सूक्ष्मं तु तदर्हत्वात् ॥ १-४-२ ॥

उक्तमेतत्—प्रकरणपरिशेषाभ्यां शरीरमव्यक्तशब्दं न प्रधानमिति ; इदमिदानीमाशङ्क्यते—कथमव्यक्तशब्दार्हत्वं शरीरस्य, यावता स्थूल-

प्रकटार्थविवरणम्

इतश्च परमात्मावगतिरेवात्र विवक्षिता न प्रधानावगतिरित्याह—तथा च एष इति ॥ "दर्शयति च" इति सूत्रपदस्य अर्थोऽनेन पुनः दर्शितः । वागित्यत्र द्वितीयालोपश्छान्दसः ॥

सूक्ष्मं तु तदर्हत्वात् ॥

शङ्कोत्तरत्वेन सूत्रं व्याचष्टे—उक्तमेतदित्यादिना ॥ कार्यकरणयोरभेदाभिप्रायेण कारणवाचकोऽव्यक्तशब्दः कार्ये प्रयुक्तः ; तत्रोदाहरणं यथा

भाष्यम्

त्वात्स्पष्टतरमिदं शरीरं व्यक्तशब्दार्हम्; अस्पष्टवचनस्त्वव्यक्तशब्द इति अत उत्तरमुच्यते—सूक्ष्मं त्विह कारणात्मना शरीरं विवक्ष्यते, सूक्ष्मस्याव्यक्तशब्दार्हत्वात्; यद्यपि स्थूलमिदं शरीरं न स्वयमव्यक्तशब्दमर्हति, तथापि तस्य त्वारम्भकं भूतसूक्ष्ममव्यक्तशब्दमर्हति; प्रकृतिशब्दश्च विकारे दृष्टः, यथा "गोभिः श्रीणीत मत्सरम्" इति। श्रुतिश्च—"तद्धेदं तर्ह्यव्याकृतमासीत्" इतीदमेव व्याकृतनामरूपविभिन्नं जगत्प्रागवस्थायां परित्यक्तव्याकृतनामरूपं बीजशक्त्यवस्थमव्यक्तशब्दयोग्यं दर्शयति ॥

## तदधीनत्वादर्थवत् ॥ १-४-३ ॥

अत्राह—यदि जगदिदमनभिव्यक्तनामरूपं बीजात्मकं प्रागवस्थमव्यक्तशब्दार्हमभ्युपगम्येत, तदात्मना च शरीरस्याप्यव्यक्तशब्दार्हत्वं प्रतिज्ञायेत, स एव तर्हि प्रधानकारणवाद एवं सत्यापद्येत; अस्यैव जगतः प्रागवस्थायाः प्रधानत्वेनाभ्युपगमादिति। अत्रोच्यते—यदि वयं स्वतन्त्रां काचित्प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम, प्रसञ्जयेम तदा प्रधानकारणवादम्; परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते, न स्वतन्त्रा; सा चावश्याभ्युपगन्तव्या; अर्थवती

प्रकटार्थविवरणम्

गोभिः गोविकारेण पयसा श्रीणीत विकारापन्नं कुर्यात् मत्सरं सोममित्यर्थः। अभेदाभिप्रायेण कार्यस्याव्यक्तशब्दवाच्यत्वे श्रुतिमाह—श्रुतिश्चेति ॥

तदधीनत्वादर्थवत् ॥

मतसाम्यमाशङ्कते—अत्राहेत्यादिना ॥ सत्यत्वमिथ्यात्वाभ्यां महद्वैलक्षण्यमाह—अत्रोच्यत इत्यादिना ॥ सा च अविक्रियस्य साक्षात् जगत्प्रसूत्वानुपपत्तेः अवश्याश्रयणीयेत्याह— सा चावश्येति ॥ नन्वक्रियस्यापि

भाष्यम्

हि सा ; न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिद्ध्यति, शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः ; मुक्तानां च पुनरनुत्पत्तिः ; कुतः ? विद्यया तस्या बीजशक्तेर्दाहात् ; अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः ; तदेतदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम्— "एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति श्रुतेः । क्वचिदक्षरशब्दोदितम्—"अक्षरात्परतः परः" इति श्रुतेः ; क्वचिन्मायेति सूचितम्—"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति मन्त्रवर्णात् ; अव्यक्ता हि माया, तत्त्वान्यत्वनिरूपणस्याशक्यत्वात् ;

प्रकटार्थविवरणम्

यदि मायया स्रष्टृत्वं तर्हि मुक्तानामपि तथैव किं न बन्ध इत्याशङ्क्याह— मुक्तानां चेति ॥ तस्या मायाया मुक्तं प्रति बीजशक्तेरविद्यावाच्याया दाहादित्यर्थः । उक्तमेव स्पष्टयति— अविद्यात्मिका हीति[1] ॥ जीवोपाधेर्मायाप्रदेशस्य विद्यापनोद्यतया अविद्याशब्दवाच्यस्य मायातादात्म्यात् मायाप्यविद्यात्मिकेत्यर्थः । न केवलं श्रुतार्थापत्तिसिद्धा माया, अनेकश्रुतिसिद्धापि भवतीत्याह— तदेतदव्यक्तमिति ॥ न च सांशत्वे कार्यत्वप्रसङ्गश्चोद्यो मीमांसकैः, क्षित्यादौ व्यभिचारात् ; नापि नैयायिकैः, कल्पितप्रदेशवत्त्वेऽप्याकाशस्यानादित्वाभ्युपगमात्, द्रव्यस्य[2] द्रव्यान्तरसमवेतस्य सावयवत्वस्याभ्युपगमात् ; स्वपक्षेऽपि मायातिरिक्तमेव जडं दृश्यम्, यथा कार्यम् ; सांशमपि तथा । तच्च त्रिगुणत्वयुगपदनेकपरिणामित्वादिबलादाश्रयणीयमुक्तम् ॥ उक्तं हि—

"प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ।
वालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणकः ॥" इति ।

आनन्त्याच्च क्रमेण क्षयप्रसङ्गः । सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वात्साव्यक्तशब्दार्हा[3] भवतीत्याह—अव्यक्ता हि मायेति ॥ कथं तर्हि परत्वाभिमानमुप-

१. A. अविद्या हीति.
२. A omits द्रव्यस्य...पगमात्
३. T omits अर्हा.

भाष्यम्

तदिदम् "महतः परमव्यक्तम्" इत्युक्तमव्यक्तप्रभवत्वान्महतः, यदा हैरण्यगर्भी बुद्धिर्महान्; यदा तु जीवो महान् तदाप्यव्यक्ताधीनत्वाज्जीवभावस्य "महतः परमव्यक्तम्" इत्युक्तम् । अविद्या ह्यव्यक्तम् । अविद्यावत्त्वेनैव जीवस्य सर्वः संव्यवहारः संततो वर्तते; तच्चाव्यक्तगतं महतः परत्वमभेदोपचारात्तद्विकारे शरीरे परिकल्प्यते । सत्यपि शरीरवदिन्द्रियादीनां तद्विकारत्वाविशेषे शरीरस्यैवाभेदोपचारादव्यक्तशब्देन ग्रहणम् इन्द्रियादीनां स्वशब्दैरेव गृहीतत्वात्परिशिष्टत्वाच्च शरीरस्य ॥

अन्ये तु वर्णयन्ति—द्विविधं हि शरीरं स्थूलं सूक्ष्मं च । स्थूलं यदिदमुपलभ्यते; सूक्ष्मं यदुत्तरत्र वक्ष्यते—"तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्" इति । तच्चोभयमपि शरीरमविशेषात्पूर्वत्र रथत्वेन संकीर्तितम्; इह तु सूक्ष्ममव्यक्तशब्देन परिगृह्यते, सूक्ष्मस्याव्यक्तशब्दार्हत्वात्; तदधीनत्वाच्च बन्धमोक्षव्यवहा-

प्रकटार्थविवरणम्

पद्यत इत्याशङ्क्याह—तदिदं महत इति ॥ मायाप्रदेशे ह्यविद्यायां प्रतिबिम्बितं चैतन्यं जीवसंज्ञां लभते । औपाधिकस्योपाध्यधीनत्वात् जीवादपि मायायाः परत्वाभिधानमुपपन्नमित्यर्थः । नन्वस्त्वविद्याया महतः परत्वम्; तथापि न शरीरस्येत्याशङ्क्याह—तच्चाव्यक्तगतमिति ॥ नन्विन्द्रियादीनामपि मायाकार्यत्वाविशेषात् किमित्यव्यक्तशब्देनाग्रहणमित्याशङ्क्याह—सत्यपीति ॥

एवं स्वाभिप्रायेण सूत्रत्रयं व्याख्याय वृत्तिकारव्याख्यानमनुवदति—अन्ये तु वर्णयन्तीति ॥ स्थूलदेहारम्भकं शुक्रशोणितसूक्ष्मावयवभूतं सूक्ष्मं नाम प्रतिजीवमसाधारणं वर्तते देहान्तरप्रतिपत्तौ येन संपरिष्वक्तो जीवो गच्छति तदभिप्रायेण "सूक्ष्मं तु तदर्हत्वात्" इति सूत्रम् । कथं तर्हि तस्य जीवात्परत्वमित्याशङ्क्य "तदधीनत्वात्" इति द्वितीयसूत्रं प्रवृत्तम् । "अर्थवत्" इति

## भाष्यम्

रस्य जीवात्तस्य परत्वम्; यथार्थाधीनत्वादिन्द्रियव्यापारस्येन्द्रियेभ्यः परत्वमर्थानामिति । तैस्त्वेतद्वक्तव्यम्—अविशेषेण शरीरद्वयस्य पूर्वत्र रथत्वेन संकीर्तितत्वात् समानयोः प्रकृतत्वपरिशिष्टत्वयोः कथं सूक्ष्ममेव शरीरमिह गृह्यते न पुनः स्थूलमपीति । आम्नातस्यार्थं प्रतिपत्तुं प्रभवामः, नाम्नातं पर्यनुयोक्तुम्, आम्नातं चाव्यक्तपदं सूक्ष्ममेव प्रतिपादयितुं शक्नोति, नेतरत् व्यक्तत्वात्तस्येति चेत्, न, एकवाक्यताधीनत्वादर्थप्रतिपत्तेः; न हीमे पूर्वोत्तरे आम्नाते एकवाक्यतामनापद्य कञ्चिदर्थं प्रतिपादयतः; प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्; न चाकाङ्क्षामन्तरेणैकवाक्यताप्रतिपत्तिरस्ति; तत्राविशिष्टायां शरीरद्वयस्य ग्राह्यत्वाकाङ्क्षायां यथाकाङ्क्षं संबन्धेऽनभ्युपगम्यमान एकवाक्यतैव बाधिता

## प्रकटार्थविवरणम्

सूत्रभागं व्याचष्टे—यथेति ॥ तत्र न तावत् शरीरशब्दो भूतसूक्ष्मं वक्तुं शक्तः, तत्रागृहीतसङ्गतित्वात्; ब्रवीतु वा; तथापि प्रकृतहानं प्रसज्यत इत्याह—तैस्त्वेतद्वक्तव्यमिति ॥ अव्यक्तशब्दबलेन प्रकृतहानं क्रियत इत्याह—आम्नातस्यार्थमिति ॥ पूर्वोत्तराम्नानयोरेकवाक्यताधीनत्वात् अर्थप्रतिपत्तेः, तत्र च तदभावात् कुतस्तरामर्थप्रतिपत्तिः? कुतस्तमामव्यक्तशब्दबलेन स्थूलकलेवरपरित्याग इत्याह — नेति ॥ एकवाक्यताधीनार्थप्रतिपत्तिरित्येतदेव कुत इत्याशङ्क्याह—न हीमे इति ॥ शरीरशब्दस्य स्थूलशरीरे रूढत्वात् तस्य प्रकृतस्य प्रहाणं भूतसूक्ष्मस्य त्वप्रकृतस्याव्यक्तशब्दवाच्यत्वात् प्रक्रिया निष्प्रमाणिका प्रसज्यत इत्यर्थः । अस्तु तर्हि एकवाक्यतेत्याशङ्क्याह—न चाकाङ्क्षामिति ॥ यत्रैकवाक्यता तत्राकाङ्क्षापूर्विकैव; यथा कर्तव्यस्य इतिकर्तव्यताकाङ्क्षया प्रयाजादिवाक्यान्वय इत्यर्थः । अस्तु तर्ह्यव्यक्तपदस्याप्रसिद्धार्थस्य वाच्याकाङ्क्षायां प्रकृतशरीरसंबन्ध इत्याशङ्क्याह—तत्राविशिष्टायामिति ॥ ननु शरीरद्वयस्य प्रकृतत्वाविशेषेऽपि वैराग्यविषयतया परिशोधनप्रयोजनवशेन सूक्ष्ममेवाव्यक्त-

भाष्यम्

भवति, कुत आम्नातस्यार्थप्रतिपत्तिः? न चैवं मन्तव्यं दुःशोधत्वात्सूक्ष्मस्यैव शरीरस्येह ग्रहणम्, स्थूलस्य तु दृष्टबीभत्सतया सुशोधत्वादग्रहणमिति; यतो नैवेह शोधनं कस्यचिद्विवक्ष्यते; न ह्यत्र शोधनविधायि किंचिदाख्यातमस्ति; अनन्तरनिर्दिष्टत्वात्तु किं तद्विष्णोः परमं पदमितीदमिह विवक्ष्यते; तथाहीदमस्मात्परमिदमस्मात्परमित्युक्त्वा, "पुरुषान्न परं किंचित्" इत्याह । सर्वथापि त्वानुमानिकनिराकरणोपपत्तेः तथा नामास्तु; न नः किंचिच्छिद्यते ॥

## ज्ञेयत्वावचनाच्च ॥ १-४-४ ॥

ज्ञेयत्वेन च सांख्यैः प्रधानं स्मर्यते गुणपुरुषान्तरज्ञानात्कैवल्यमिति वदद्भिः । न हि गुणस्वरूपमज्ञात्वा गुणेभ्यः पुरुषस्यान्तरं शक्यं ज्ञातुमिति; क्वचिच्च विभूतिविशेषप्राप्तये प्रधानं ज्ञेयमिति स्मरन्ति; न चेदमिहाव्यक्तं ज्ञेयत्वेनोच्यते; पदमात्रं ह्यव्यक्तशब्दः, नेहाव्यक्तं

प्रकटार्थविवरणम्

शब्देनोपादीयते, न स्थूलमित्याशङ्क्याह—न चैवं मन्तव्यमिति ॥ स्पष्टदोषानुपलम्भेन दुःखेन शोधोऽस्येति दुःशोधम् । दौर्गन्ध्यादिदोषावलम्बेन दृष्टा बीभत्सा घृणा यस्मिंस्तद्दृष्टबीभत्सं तस्य भावस्तत्ता तया । वैराग्यविषयत्वेन सुनिरूप्यत्वादग्रहणमिति न मन्तव्यम् । इदानीमभ्युपगम्याह—सर्वथापीति ॥

ज्ञेयत्वावचनाच्च ॥

किं च ज्ञेयत्वेनानुपदेशादपि न प्रधानमिह विवक्षितमित्याह—ज्ञेयत्वेनेति ॥ सत्त्वादिगुणानां साम्यावस्था प्रधानं गुण उच्यते; तस्मात्पुरुषस्यान्तरज्ञानात् विवेकज्ञानादित्यर्थः । न केवलं विवेकग्रहणे प्रतियोगित्वेन ज्ञेयत्वं प्रकृतिलयादिफलसिद्धये चोपास्यत्वमिष्टमित्याह—क्वचिच्चेति ॥ ननु मा भूद्वेदे ज्ञातव्यत्वेनोपदेशः; तथापि अव्यक्तपदादस्ति तज्ज्ञानजन्मेत्याशङ्क्याह—

भाष्यम्

ज्ञातव्यमुपासितव्यं चेति वाक्यमस्ति; न चानुपदिष्टं पदार्थज्ञानं पुरुषार्थमिति शक्यं प्रतिपत्तुम्; तस्मादपि नाव्यक्तशब्देन प्रधानमभिधीयते; अस्माकं तु रथरूपककॢप्तशरीराद्यनुसरणेन विष्णोरेव परमं पदं दर्शयितुमयमुपन्यास इत्यनवद्यम् ॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ १-४-५ ॥

अत्राह सांख्यः—"ज्ञेयत्वावचनात्" इत्यसिद्धम्; कथम्? श्रूयते ह्युत्तरत्राव्यक्तशब्दोदितस्य प्रधानस्य ज्ञेयत्ववचनम्—

"अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥"

इति। अत्र हि यादृशं शब्दादिहीनं प्रधानं महतः परं स्मृतौ निरूपितम्, तादृशमेव निचाय्यत्वेन निर्दिष्टम्; तस्मात्प्रधानमेवेदम्; तदेव चाव्यक्तशब्दनिर्दिष्टमिति। अत्र ब्रूमः—नेह प्रधानं निचाय्यत्वेन निर्दिष्टम्; प्राज्ञो हीह परमात्मा निचाय्यत्वेत निर्दिष्ट इति गम्यते; कुतः? प्रकरणात्। प्राज्ञस्य हि प्रकरणं विततं वर्तते। "पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इत्यादिनिर्देशात्; "एष सर्वेषु भूतेषु गूढोत्मा

प्रकटार्थविवरणम्

न चानुपदिष्टमिति ॥ विध्यायत्तत्वात् अदृष्टफलसिद्धेरित्यर्थः। तर्हि तवापि शरीरस्य ज्ञेयत्वेनानुपदेशान्न फलसिद्धिरित्याशङ्क्याह—अस्माकं त्विति ॥

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥

"ज्ञेयत्वावचनाच्च" इत्यस्यासिद्धतामाशङ्क्य परिहरति—वदतीति चेदिति ॥

भाष्यम्

न प्रकाशते" इति च दुर्ज्ञानत्ववचनेन तस्यैव ज्ञेयत्वाकाङ्क्षणात्। "यच्छेद्वाङ्मनसी प्राज्ञः" इति च तज्ज्ञानायैव वागादिसंयमस्य विहितत्वात्; मृत्युमुखप्रमोक्षणफलत्वाच्च। न हि प्रधानमात्रं निचाय्य मृत्युमुखात्प्रमुच्यत इति सांख्यैरिष्यते। चेतनात्मविज्ञानाद्धि मृत्युमुखात्प्रमुच्यते इति तेषामभ्युपगमः; सर्वेषु वेदान्तेषु प्राज्ञस्यैवात्मनोऽशब्दादिधर्मत्वमभिलप्यते; तस्मान्न प्रधानस्यात्र ज्ञेयत्वमव्यक्तशब्दनिर्दिष्टत्वं वा॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च॥ १-४-६॥

इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा यस्मात् त्रयाणामेव पदार्थानामग्निजीवपरमात्मनामस्मिन्ग्रन्थे कठवल्लीषु वरप्रदानसामर्थ्याद्वक्तव्यतयोपन्यासो दृश्यते; तद्विषय एव च प्रश्नः; नातोऽन्यस्य प्रश्न उपन्यासो वास्ति; तत्र तावत्

"स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्।"

इत्यग्निविषयः प्रश्नः;

"येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके।
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः॥"

इति जीवविषयः प्रश्नः।

"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद॥"

प्रकटार्थविवरणम्

त्रयाणामेव चैवमुपन्यासः प्र श्च॥

त्रयाणां मृत्योरुपन्यासः। प्रश्नश्च नचिकेतस एवमेवावकल्पते, न प्रधानविवक्षायामित्याह—त्रयाणामेवेति॥ क्रमेण प्रश्नत्रयं पठति—तत्र तावदिति॥ भो मृत्यो स त्वं स्वर्ग्यं स्वर्गहेतुमग्निमध्येषि स्मरसीत्यर्थः। त्रितय-

भाष्यम्

इति परमात्मविषयः । प्रतिवचनमपि

"लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ।"

इत्यग्निविषयम् ।

"हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥"

इति व्यवहितं जीवविषयम्; "न जायते म्रियते वा विपश्चित्" इत्यादिबहुप्रपञ्चं परमात्मविषयम् । नैवं प्रधानविषयः प्रश्नोऽस्ति । अपृष्टत्वाच्चानुपन्यसनीयत्वं तस्येति ॥

अत्राह—योऽयमात्मविषयः प्रश्नः "येयं प्रेते विचिकित्सा मनुष्ये अस्तीति" किं स एवायम् "अन्यत्र धर्मादन्यत्राधर्मात्" इति पुनरनुकृष्यते, किं वा ततोऽन्योऽयमपूर्वः प्रश्न उत्थाप्यत इति । किं चातः? स एवायं प्रश्नः पुनरनुकृष्यत इति यद्युच्यते, तदा द्वयोरात्मविषययोः

प्रकटार्थविवरणम्

विषयं प्रतिवचनं च क्रमेणाह—प्रतिवचनमपीति ॥ भूरादिलोकादिं प्रथमजं तं पृष्टमग्निं तस्मै नचिकेतसे मृत्युरुवाच या इष्टकाश्चेतव्याः, यावतीर्यावत्संख्याकाः, येन वा प्रकारेण तत्सर्वमुवाचेति श्रुतेः वचनम् । "हन्त त इदं प्रवक्ष्यामि" इत्यनेन ब्रह्मविषयोपदेशप्रतिज्ञापनेन व्यवहितं जीवविषयं प्रतिवचनम् "यथा च मरणं प्राप्य" इत्यादि ॥ यथाश्रुतमिति ॥ येन यादृशं देवताविज्ञानमनुष्ठितं स तदनुरूपामेव योनिं प्राप्नोतीत्यर्थः ॥

किमेक एवात्मविषयः प्रश्नः किं वा द्वाविति पूर्वपक्षी विकल्पयति—अत्राहेति ॥ सिद्धान्त्याह—किं चात इति ॥ अत इति सप्तम्यर्थे तसिः । एकः प्रश्नः इत्यस्मिन् पक्षे किं दूषणं प्रश्नद्वये वा किमित्यर्थः । प्रथमविकल्पे सूत्रमसङ्गतम्; द्वितीये प्रधानाभिधानेऽप्यदोष इत्याह—स एवायमित्यादिना ॥

### भाष्यम्

प्रश्नयोरेकतापत्तेरग्निविषय आत्मविषयश्च द्वावेव प्रश्नावित्यतो न वक्तव्यं त्रयाणां प्रश्नोपन्यासात्रिति ; अथान्योऽयमपूर्वः प्रश्न उत्थाप्यत इत्युच्येत, ततो यथैव वरप्रदानव्यतिरेकेण प्रश्नकल्पनायामदोषः, एवं प्रश्नव्यतिरेकेणापि प्रधानोपन्यासकल्पनायामदोषः स्यादिति ॥

अत्रोच्यते—नैवं वयमिह वरप्रदानव्यतिरेकेण प्रश्नं कंचित्कल्पयामः वाक्योपक्रमसामर्थ्यात् ; वरप्रदानोपक्रमा हि मृत्युनचिकेतःसंवादरूपा वाक्यप्रवृत्तिरा समाप्तेः कठवल्लीनां लक्ष्यते ; मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन्वरान्प्रददौ ; नचिकेताः किल तेषां प्रथमेन वरेण पितुः सौमनस्यं वव्रे, द्वितीयेनाग्निविद्याम्, तृतीयेनात्मविद्याम्, "येयं प्रेते" इति "वराणामेष वरस्तृतीयः" इति लिङ्गात् । तत्र यदि "अन्यत्र धर्मात्" इत्यन्योऽयमपूर्वः प्रश्न उत्थाप्येत ततो वरप्रदानव्यतिरेकेणापि प्रश्नकल्पनाद्वाक्यं बाध्येत । ननु प्रष्टव्यभेदादपूर्वोऽयं प्रश्नो भवितुमर्हति ; पूर्वो हि प्रश्नो जीवविषयः, येयं प्रेते विचिकित्सा मनुष्येऽस्ति नास्तीति विचिकित्साभिधानात् ; जीवश्च धर्मादिगोचरत्वान्न "अन्यत्र धर्मात्" इति प्रश्नमर्हति । प्राज्ञस्तु धर्माद्यतीतत्वात् "अन्यत्र धर्मात्" इति प्रश्नमर्हति । प्रश्नच्छाया च न समाना लक्ष्यते, पूर्वस्यास्तित्वनास्तित्वविषयत्वात् ; उत्तरस्य धर्माद्यतीतवस्तुविषयत्वाच्च ; तस्मात्प्रत्यभिज्ञानाभावात्प्रश्नभेदः ; न पूर्वस्यै-

### प्रकटार्थविवरणम्

यदि वरव्यतिरेकेणापूर्वं प्रश्नं वयं कल्पयामः तदा प्रधानाभिधानमपि स्यात् न तु तथेति प्रथमविकल्पाङ्गीकारेण परिहरति—अत्रोच्यत इत्यादिना ॥ आत्मविषयप्रश्नस्य एकतामाक्षिपति—नन्विति ॥ न केवलं धर्मादियुक्तंतद्विरहितत्वरूपेण प्रष्टव्ययोः भेदात् प्रश्नभेदः ; प्रश्नवाक्यसादृश्यस्याभावादित्याह—प्रश्नच्छाया चेति ॥ प्रष्टव्ययोर्वास्तवभेदात् तावन्न प्रश्नभेद इत्याह—

१. T[1]. युक्तत्वं तद्विर

T, P and TM, युक्ततद्विरहिण

भाष्यम्

वोत्तरत्वानुकर्षणमिति चेत् न, जीवप्राज्ञयोरेकत्वाभ्युपगमात्; भवेत्पृच्छ्यभेदात्प्रश्नभेदो यद्यन्यो जीवः प्राज्ञात्स्यात्; न त्वन्यत्वमस्ति, "तत्त्वमसि" इत्यादिश्रुत्यन्तरेभ्यः। इह च "अन्यत्र धर्मात्" इत्यस्य प्रश्नस्य प्रतिवचनम् "न जायते म्रियते वा विपश्चित्" इति जन्ममरणप्रतिषेधेन प्रतिपाद्यमानं शारीरपरमेश्वरयोरभेदं दर्शयति; सति हि प्रसङ्गे प्रतिषेधो भागी भवति; प्रसङ्गश्च जन्ममरणयोः शरीरसंस्पर्शाच्छारीरस्य भवति, न परमेश्वरस्य; तथा—

"स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥"

इति स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभुत्वविशेषणस्य मननेन शोकविच्छेदं दर्शयन् प्राज्ञादन्यो जीव इति दर्शयति; प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदान्तसिद्धान्तः; तथा—

"यदेवेह तदमुत्र यदमुत्र तदन्विह।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥"

प्रकटार्थविवरणम्

न जीवप्राज्ञयोरिति॥ किं च जन्ममरणप्रतिषेधेनोत्तरं ब्रुवाणो मृत्युः जीवस्यौपाधिकजन्मादिव्यपोहेन निजब्रह्मरूपतां प्रतिपादयतीत्याह— इह चान्यत्रेति॥ किं च जीवस्यैव विज्ञानेन संसारनिवृत्तिफलश्रवणादपि तस्य ब्रह्मभावो विवक्षित इत्याह—तथा स्वप्नान्तमिति॥ अन्तशब्दः स्वरूपवाची। उभौ स्वप्नजागरितस्वभावौ॥ येनेति॥ यो जीवोऽनुपश्यति तमेव परिच्छेदभ्रमापोहेन महान्तं ज्ञात्वा विद्वान्न शोचतीत्यर्थः। भेददर्शनस्य निन्दितत्वाच्च न जीवेश्वरयोः भेदस्तात्त्विक इत्याह—तथा यदेवेहेति॥ यदेव चैतन्यमिहाविद्यातत्कार्ये प्रतिबिम्बितं तदेवामुत्र मायायामपि। यदमुत्र वर्तते तदेवेहेति स्वरूपैक्ये स्थिते यः कश्चिदिहैकरसे स्वरूपे नानेवाल्पमपि नानात्वं

भाष्यम्

इति जीवप्राज्ञभेददृष्टिमपवदति ; तथा जीवविषयस्यास्तित्वनास्तित्वप्रश्नस्यानन्तरम् "अन्यं वरं नचिकेतो वृणीष्व" इत्यारभ्य मृत्युना तैस्तैः कामैः प्रलोभ्यमानोऽपि नचिकेता यदा न चचाल, तदैनं मृत्युरभ्युदयनिःश्रेयसविभागप्रदर्शनेन विद्याविद्याविभागप्रदर्शनेन च "विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त" इति प्रशस्य प्रश्नमपि तदीयं प्रशंसन् यदुवाच—

"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥"

इति, तेनापि जीवप्राज्ञयोरभेद एवेह विवक्षित इति गम्यते ; यत्प्रश्ननिमित्तां च प्रशंसां महतीं मृत्योः प्रत्यपद्यत नचिकेताः, यदि

प्रकटार्थविवरणम्

पश्यति स मृत्योः मारकान्मरणभयमाप्नोतीत्यर्थः । किं च जीवविषयप्रश्नस्यानन्तरम् "तं दुर्दर्शम्" इत्यादि यस्मादुवाच मृत्युः तेनापि हेतुनाभेद एव विवक्षित इति गम्यत इत्युत्तरेणान्वयः । किं कुर्वन्मृत्युरेतदुवाचेत्यपेक्षायामाह—अन्यं वरमित्यादि ॥ भो नाचिकेतः त्वं अन्यं वरं वृणीष्व । किमतिगहनेनात्मविज्ञानेन यत्र देवानामपि न निश्चय इत्यारभ्य "शतायुषः पुत्रपौत्रान् वृणीष्व" इत्यादिना तैस्तैः पुत्रादिकामैः प्रलोभ्यमानोऽपि यदात्मज्ञानान्न चलितः तदैनं नचिकेतसं प्रशस्य तदीयं प्रश्नं प्रशंसन् । कथं प्रशंसन्नित्यपेक्षायामाह—"अन्यच्छ्रेयोऽन्यदुतैव प्रेयः" इत्यभ्युदयनिःश्रेयसयोः विभागप्रदर्शनेन "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता" इति विद्याविद्याविभागकरणेन चानन्तरम् "विद्याभीप्सितं नचिकेतसं मन्ये" अहम्, यस्मात्त्वां बहवः कामाः यथोपदिष्टा अपि नालोलुपन्त तव लोभमापादितवन्तः इत्येवं प्रशस्येत्यर्थः । किं च प्रसंसाया अपि सार्थकत्वं पूर्वप्रश्नस्यैवानुकर्षे घटत इत्याह—यत्प्रश्ननिमित्तां चेति ॥ एवं तावत्प्रष्टव्यवस्तुभेदनिबन्धनः प्रश्न-

१. A omits चावेति

भाष्यम्

तं विहाय प्रशंसानन्तरमन्यमेव प्रश्नमुपक्षिपेत्, अस्थान एव सा सर्वा प्रशंसा प्रसारिता स्यात्; तस्मात् "येयं प्रेते" इत्यस्यैव प्रश्नस्यैतदनुकर्षणम् "अन्यत्र धर्मात्" इति। यत्तु प्रश्नच्छायावैलक्षण्यमुक्तं तददूषणम्, तदीयस्यैव विशेषस्य पुनः पृच्छ्यमानत्वात्; पूर्वत्र हि देहादिव्यतिरिक्तस्यात्मनोऽस्तित्वं पृष्टम्, उत्तरत्र तु तस्यैवासंसारित्वं पृच्छ्यत इति; यावद्ध्यविद्या न निवर्तते तावद्धर्मादिगोचरत्वं जीवस्य जीवत्वं च न निवर्तते, तन्निवृत्तौ तु प्राज्ञ एव "तत्त्वमसि" इति श्रुत्या प्रत्याय्यते; न चाविद्यावत्त्वे तदपगमे च वस्तुनः कश्चिद्विशेषोऽस्ति; यथा कश्चित्संतमसे पतितां कांचिद्रज्जुमहिं मन्यमानो भीतो वेपमानः पलायते, तं चापरो ब्रूयात् 'माभैषीर्नायमही रज्जुरेव' इति, स च तदुपश्रुत्याहिकृतं भयमुत्सृजेद्वेपथुं पलायनं च, न त्वहिबुद्धिकाले तदपगमकाले च वस्तुनः कश्चिद्विशेषः स्यात् तथैवैतदपि द्रष्टव्यम्; ततश्च "न जायते म्रियते वा" इत्येवमाद्यपि भवत्यास्तित्वप्रश्नस्य प्रतिवचनम्। सूत्रं त्वविद्याकल्पितजीवप्राज्ञभेदापेक्षया योजयितव्यम्। एकत्वेऽपि ह्यात्मविषयस्य प्रश्नस्य प्रायणावस्थायां देहव्यतिरिक्तास्तित्वमात्रविचिकित्सनात्कर्तृत्वादिसंसारस्वभावानपोहनाच्च पूर्वस्य पर्यायस्य जीवविषयत्व-

प्रकटार्थविवरणम्

भेदो नास्तीत्युपपाद्य यद्वचनव्यक्तेरन्यथात्वं दृश्यते तस्य गतिं वक्तुमुपक्रमते—यत्तु प्रश्नच्छायेति॥ ननु पूर्वमविद्यावत्त्वं पश्चात् विद्यावत्त्वं चेत्तर्हि अविद्यानपगमे विद्योदये च वस्तुनि कश्चिद्विकारो वक्तव्यः; तथा क्षीरवदनित्यत्वमित्याशङ्क्याह— न चाविद्यावत्त्वे इति॥ विद्योदयोऽप्यात्मन उपाधिमहिम्नैव; तत्कृतश्चाविद्यास्तमयोऽप्यनिर्वाच्य एव, नात्मगतः कश्चन विकार इति भावः। यस्मादविद्याकृतसंसारभावाभावयोरपि स्वतो निर्विकारं तस्मात्तात्त्विकमरणाभावात् मरणनिमित्तं नास्तित्वाशङ्काभावादस्तित्वमेव प्रतिपादितं भवतीत्याह—ततश्चेति॥ कथं तर्हि त्रयाणामिति सूत्रमित्याशङ्क्याह—सूत्रं त्विति॥

भाष्यम्

मुत्प्रेक्ष्यते, उत्तरस्य तु धर्माद्यत्ययसंकीर्तनात्प्राज्ञविषयत्वमिति । ततश्च युक्ताग्निजीवपरमात्मकल्पना ; प्रधानकल्पनायां तु न वरप्रदानं न प्रश्नो न प्रतिवचनमिति वैषम्यम् ॥

## महद्वच्च ॥ १-४-७ ॥

यथा महच्छब्दः सांख्यैः सत्तामात्रेऽपि प्रथमजे प्रयुक्तो न तमेव वैदिकेऽपि प्रयोगेऽभिधत्ते । "बुद्धेरात्मा महान्परः" "महान्तं विभुमात्मानम्" "वेदाहमेतं पुरुषं महान्तम्" इत्येवमादावात्मशब्दप्रयोगादिभ्यो हेतुभ्यः तथाव्यक्तशब्दोऽपि न वैदिके प्रयोगे प्रधानमभिधातुमर्हति । अतश्च नास्त्यानुमानिकस्य शब्दवत्त्वम् ॥

## चमसवदविशेषात् ॥ १-४-८ ॥

पुनरपि प्रधानवादी अशब्दत्वं प्रधानस्यासिद्धमित्याह । कस्मात्? मन्त्रवर्णात्—

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥" इति ।

अत्र हि मन्त्रे लोहितशुक्लकृष्णशब्दै रजःसत्त्वतमांस्यभिधीयन्ते ; लोहितं रजो रञ्जनात्मकत्वात् ; शुक्लं सत्त्वं प्रकाशात्मकत्वात् ; कृष्णं

प्रकटार्थविवरणम्

महद्वच्च ॥

किं च महच्छब्दस्य वेदे सांख्याभिमतार्थव्यभिचारदर्शनात् अव्यक्तपदस्यापि व्यभिचारं भावयन्नाह—महद्वच्चेति ॥

चमसवदविशेषात् ॥

सङ्गतिमाह—पुनरिति ॥ अजामन्त्रः प्रधानवादस्य मूलं न वेति सन्देहे पूर्वत्र प्रत्यभिज्ञापकाभावादव्यक्तपदं प्रधानपरं न भवतीत्युक्तम् । इह तु

भाष्यम्

तमः, आवरणात्मकत्वात्; तेषां साम्यावस्था अवयवधर्मैर्व्यपदिश्यते—लोहितशुक्लकृष्णेति; न जायत इति च अजा स्यात्, "मूलप्रकृतिरविकृतिः" इत्यभ्युपगमात्। नन्वजाशब्दश्छागायां रूढः; बाढम्; सा तु रूढिरिह नाश्रयितुं शक्या, विद्याप्रकरणात्; सा च बह्वीः प्रजास्त्रैगुण्यान्विता जनयति; तां प्रकृतिमज एकः पुरुषो जुषमाणः प्रीयमाणः सेवमानो वानुशेते—तामेवाविद्ययात्मत्वेनोपगम्य सुखी दुःखी मूढोऽहमित्यविवेकतया संसरति; अन्यः पुनरजः पुरुष उत्पन्नविवेकज्ञानो विरक्तो जहात्येनां प्रकृतिं भुक्तभोगां कृतभोगापवर्गां परित्यजति—मुच्यत इत्यर्थः; तस्माच्छ्रुतिमूलैव प्रधानादिकल्पना कापिलानामिति।

एवं प्राप्ते ब्रूमः—

नानेन मन्त्रेण श्रुतिमत्त्वं सांख्यवादस्य शक्यमाश्रयितुम्; न ह्ययं मन्त्रः स्वातन्त्र्येण कंचिदपि वादं समर्थयितुमुत्सहते, सर्वत्रापि यया कयाचित्कल्पनया अजात्वादिसंपादनोपपत्तेः सांख्यवाद एवेहाभिप्रेत इति विशेषावधारणकारणाभावात्। चमसवत्—यथा हि "अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" इत्यस्मिन्मन्त्रे स्वातन्त्र्येणायं नामासौ चम-

प्रकटार्थविवरणम्

बहुतरप्रत्यभिज्ञापकसद्भावाल्लोहितशुक्लकृष्णशब्दैः सत्त्वरजस्तमांस्युपलक्ष्य प्रकृतिरुपलक्षणीयेति भावः। अजाशब्दोऽपि तत्र यौगिकवृत्त्या प्रवर्तत इत्युक्तम्; तत्र रूढिर्योगमपहरतीति न्यायावष्टम्भेन शङ्कते—नन्वजाशब्द इति॥ रूढ्यसंभवे योगवृत्त्युपादानं युक्तमेवेत्याह—बाढमिति॥ किं च सृज्यमानप्रकृतित्वं प्रधानस्य प्रत्यभिज्ञापकमस्तीत्याह— साचेति॥ किं च सांख्याभिमतक्षेत्रज्ञभेदस्यापि प्रत्यभिज्ञायमानत्वात् भवत्ययं मन्त्रः सांख्यवादस्य मूलमित्याह—तां प्रकृतिमिति॥

नकारमधिकृत्य व्याचष्टे—नानेन मन्त्रेणेति॥

१. A. ज्ञापन

भाष्यम्

सोऽभिप्रेत इति न शक्यते नियन्तुम्, सर्वत्रापि यथाकथंचिदर्वाग्बिलत्वादिकल्पनोपपत्तेः, एवमिहाप्यविशेषः "अजामेकाम्" इत्यस्य मन्त्रस्य ; नास्मिन्मन्त्रे प्रधानमेवाजाभिप्रेतेति शक्यते नियन्तुम् ॥

तत्र तु "इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" इति वाक्यशेषाच्चमसविशेषप्रतिपत्तिर्भवति ; इह पुनः केयमजा प्रतिपत्तव्येत्यत्र ब्रूमः—

## ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ १-४-९ ॥

परमेश्वरादुत्पन्ना ज्योतिःप्रमुखा तेजोबन्नलक्षणा चतुर्विधस्य भूतग्रामस्य प्रकृतिभूतेयमजा प्रतिपत्तव्या । तुशब्दोऽवधारणार्थः—भूतत्रयलक्षणैवेयमजा विज्ञेया, न गुणत्रयलक्षणा । कस्मात्? तथा ह्येके शाखिनस्तेजोबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपतामामनन्ति—"यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" इति ; तान्येवेह तेजोबन्नानि प्रत्यभिज्ञायन्ते रोहितादिशब्दसामान्यात्, रोहितादीनां च शब्दानां रूपविशेषेषु मुख्यत्वाद्भाक्तत्वाच्च गुणविषयत्वस्य ; असंदिग्धेन च संदिग्धस्य निगमनं

प्रकटार्थविवरणम्

उत्तरसूत्रनिरस्याशङ्कामाह— तत्र त्विदं तच्छिर इति ॥

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥

चतुर्विधस्येति ॥ स्वेदजाण्डजजरायुजोद्भिज्जलक्षणस्येत्यर्थः । किं च लक्षितलक्षणापरिग्रहाद्वरं गुणवाचकैः शब्दैः गुणिनां तेजोबन्नानां लक्षणो- [क्षणयो]पादानमित्यभिप्रेत्याह—रोहितादीनां च शब्दानामिति ॥ ननु कथं शाखान्तरगतविशेषोपादानेन शाखान्तरे निर्णय इत्याशङ्क्याह—असन्दिग्धेनेति ॥ यथा "पुरोडाशं चतुर्धा करोति" इति विशेषवचनेन निर्णयस्तथेत्यर्थः ।

भाष्यम्

न्याय्यं मन्यन्ते। तथेहापि "ब्रह्मवादिनो वदन्ति। किंकारणं ब्रह्म" इत्युपक्रम्य "ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति पारमेश्वर्याः शक्तेः समस्तजगद्विधायिन्या वाक्योपक्रमेऽवगमात्, वाक्यशेषेऽपि "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति "यो योनिं योनिमधितिष्ठत्येकः" इति च तस्या एवावगमान्न स्वतन्त्रा काचित्प्रकृतिः प्रधानं नामाजामन्त्रेणाम्नायत इति शक्यते वक्तुम्। प्रकरणात्तु सैव दैवी शक्तिरव्याकृतनामरूपा नामरूपयोः प्रागवस्थानेनापि मन्त्रेणाम्नायत इत्युच्यते; तस्याश्च स्वविकारविषयेण त्रैरूप्येण त्रैरूप्यमुक्तम्॥

कथं पुनस्तेजोबन्नात्मना त्रैरूप्येण त्रिरूपा अजा प्रतिपत्तुं शक्यते, यावता न तावत्तेजोबन्नेष्वजाकृतिरस्ति, न च तेजोबन्नानां जातिश्रवणादजातिनिमित्तोऽप्यजाशब्दः संभवतीति; अत उत्तरं पठति—

प्रकटार्थविवरणम्

किं च श्वेताश्वतरेऽपि पूर्वापरपर्यालोचनया मायैवाजा प्रतीयते। ततोऽपि नाजामन्त्रार्थः प्रधानमित्याह—तथेहापीति॥ ध्यानमयेन योगेनानुगताः परमेश्वरमनुप्रविष्टाः ते ऋषयः देवात्मानो ब्रह्मणः कारणत्वनिर्वाहिकां शक्तिं स्वगुणैः स्वविकारैः पृथिव्यादिभिः निगूढां तिरस्कृतनिजरूपामपश्यन् दृष्टवन्त इत्यर्थः। मायाप्रदेशानां जीवोपाधीनामविद्यानामनेकत्वाद्योनिं योनिमिति वीप्सा। ननु यदि मायैवाजा कथं तर्हि तस्यां स्त्रीरूपतेत्याशङ्क्याह—तस्याश्चेति॥ स्वविकाराश्रयेण रोहितादिरूपत्रयेण त्रिरूपतोपचर्यत इति भावः॥

सूत्रकारोक्ताजाशब्दार्थाभिप्रायेण शङ्कामाह—कथं पुनरिति॥ यस्मात्तेजोबन्नेषु तावदजाजातिर्नास्ति ततो न जातिद्वारे[1]ण तत्र प्रवर्तते। नाप्यजन्मनिमित्तः, जन्मश्रवणादित्यर्थः॥

१. T and P. जातिः द्वारेण

भाष्यम्

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १-४-१० ॥

नायमजाकृतिनिमित्तोऽजाशब्दः; नापि यौगिकः; किं तर्हि, कल्पनोपदेशोऽयम्—अजारूपकॢप्तिस्तेजोबन्नलक्षणायाश्चराचरयोनेरुपदिश्यते; यथा हि लोके यदृच्छया काचिदजा रोहितशुक्लकृष्णवर्णा स्याद्बहुबर्करा सरूपबर्करा च, तां च कश्चिदजो जुषमाणोऽनुशयीत, कश्चिच्चैनां भुक्तभोगां जह्यात्; एवमियमपि तेजोबन्नलक्षणा भूतप्रकृतिस्त्रिवर्णा बहु सरूपं चराचरलक्षणं विकारजातं जनयति, अविदुषा च क्षेत्रज्ञेनोपभुज्यते विदुषा च परित्यज्यत इति । न चेदमाशङ्कितव्यम् एकः क्षेत्रज्ञोऽनुशेते, अन्यो जहातीत्यतः क्षेत्रज्ञभेदः पारमार्थिकः परेषामिष्टः प्राप्नोतीति; न हीयं क्षेत्रज्ञभेदप्रतिपिपादयिषा, किं तु बन्धमोक्षव्यवस्थाप्रतिपिपादयिषैवैषा; प्रसिद्धं तु भेदमनूद्य बन्धमोक्षव्यवस्था प्रतिपाद्यते; भेदस्तूपाधिनिमित्तो मिथ्याज्ञानकल्पितः, न पारमार्थिकः, "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादि-

प्रकटार्थविवरणम्

### कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥

तेजोबन्नेषु अजाकार¹परिकल्पनोपदेशादजाशब्दप्रयोगो न विरुध्यत इत्याह—कल्पनोपदेशा²दिति ॥ यदृच्छयेति ॥ अनियमेन । बर्करो बालपशुः । यथोक्तं क्षेत्रज्ञभेदोपलम्भात् साङ्ख्यवादः प्रत्यभिज्ञायत इति तत्राह—न चेदमाशङ्कितव्यमिति ॥ ननु व्यवस्थाप्रतिपादने अर्थाद्भेदः प्रतिपादित एवेत्याशङ्क्याह—प्रसिद्धं त्विति ॥ नार्थादपि भेदप्रतिपादनमित्यर्थः । ननु प्रसिद्धिरपि तात्त्विकभेदविषयैवेत्याशङ्क्याह—भेदस्तूपाधिनिमित्त इति ॥ प्रसिद्धेः परमार्थत्वापरमार्थत्वयोः उदासीनत्वादागमाभिज्ञा[माम्भिव्या]ज्ञानेषु प्रतिबिम्बभावकृतो जीवभेद इत्यवगम्यत इत्यर्थः । ननु

१. A. कारेण व्यपदेशो    २. A. देशशब्दादिति

भाष्यम्

श्रुतिभ्यः । मध्वादिवत् । यथा आदित्यस्यामधुनो मधुत्वम्, वाचश्चाधेनोर्धेनुत्वम्, द्युलोकादीनां चानग्नीनामग्नित्वम् — इत्येवंजातीयकं कल्प्यते, एवमिदमनजाया अजात्वं कल्प्यत इत्यर्थः । तस्मादविरोधस्तेजोबन्नेष्वजाशब्दप्रयोगस्य ॥

# न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ १-४-११ ॥

एवं परिहृतेऽप्यजामन्त्रे पुनरन्यस्मान्मन्त्रात्सांख्यः प्रत्यवतिष्ठते—

“यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्” ॥ इति ॥

अस्मिन्मन्त्रे पञ्च पञ्चजना इति पञ्चसंख्याविषया अपरा पञ्चसंख्या श्रूयते, पञ्चशब्दद्वयदर्शनात् ; त एते पञ्च पञ्चकाः पञ्चविंशतिः

प्रकटार्थविवरणम्

वेदस्य यथार्थत्वात् नान्यशब्दस्यान्यत्र प्रयोग उपपद्यत इत्याशङ्क्याह— मध्वादिवदिति ॥

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥

अवान्तरसङ्गतिमाह—एवमिति ॥ ननु यः पञ्चजनादिप्रतिष्ठाधारः तमात्मानं ब्रह्मामृतं मन्यमानो विद्वान् जीवन्नेवामृतो भवतीत्येतावत्प्रतीयते । कथमस्मान्मन्त्रात् सांख्यस्य प्रत्यवस्थानमित्याशङ्क्याह—अस्मिन् मन्त्र इति ॥ “पञ्च पञ्चजनाः” इत्यत्र पञ्चविंशतिसंख्या प्रतीयते न वेति सन्देहे पूर्वत्र लक्षितलक्षणाभियो प्रधानाप्रतीतिरुक्ता । अत्र तदभावान्मुख्यवृत्त्यैव पञ्च पञ्चपूल्य इत्युक्ते पञ्चविंशतिपूलप्रतीतिवत् पञ्चविंशतिसंख्याप्रतीतिरिति भावः ।

१. T and T[1]. उपक्रम्यते    २. T[1]. विधा

## भाष्यम्

संपद्यन्ते; तथा पञ्चविंशतिसंख्यया यावन्तः संख्येया आकाङ्क्ष्यन्ते तावन्त्येव च तत्त्वानि सांख्यैः संख्यायन्ते—

“मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः” ॥ इति ॥

तया श्रुतिप्रसिद्धया पञ्चविंशतिसंख्यया तेषां स्मृतिप्रसिद्धानां पञ्चविंशतितत्त्वानामुपसंग्रहात्प्राप्तं पुनः श्रुतिमत्त्वमेव प्रधानादीनाम् । ततो ब्रूमः—

न संख्योपसंग्रहादपि प्रधानादीनां श्रुतिमत्त्वं प्रत्याशा कर्तव्या; कस्मात्? नानाभावात्; नाना ह्येतानि पञ्चविंशतिस्तत्त्वानि; नैषां पञ्चशः पञ्चशः साधारणो धर्मोऽस्ति, येन पञ्चविंशतेरन्तराले पराः पञ्च पञ्चसंख्या निविशेरन्; न ह्येकनिबन्धनमन्तरेण नानाभूतेषु

## प्रकटार्थविवरणम्

अस्तु पञ्चविंशतिसंख्याप्रतीतिः, ततो वा किमायातमित्याशङ्क्याह—तथा पञ्चविंशतिसंख्ययेति ॥ श्रौतसंख्यायाः संख्येयाकाङ्क्षायां स्मृतिप्रसिद्धा येत्पञ्चविंशतितत्त्वानि संबध्यन्त इति भावः। जगतो मूलं प्रकृतिरविकृतिरनादिरित्यर्थः। महदहङ्कारपञ्चभूततन्मात्राण्येते महदाद्यः प्रकृतिविकृतयः स्वोत्तरं प्रतिप्रकृतयो विकृतयश्च मूलकारणापेक्षयेति प्रकृतिविकृतय इत्यर्थः। एकादशेन्द्रियाणि, पञ्च विषया इत्ययं षोडशसंख्यावच्छिन्नो गणः केवलो विकार एव। पुरुषः पुनः कूटस्थचिन्मात्रविग्रहो न कस्यचित्प्रकृतिर्विकृतिर्वेत्यर्थः ॥

असमस्तपञ्चद्वयशब्दात् पञ्चपञ्चकसंख्यायाः प्रतीतिं तावदभ्युपगम्य तया संख्यया सांख्याभिप्रेततत्त्वानामुपसंग्रहो न भवतीत्याह—न संख्योपसंग्रहादपीति ॥ यथा ज्ञानसाधनत्वं क्रियासाधनत्वं चासाधारणं निमित्तमाश्रित्यैकादशेन्द्रियेषु पञ्च ज्ञानेन्द्रियाणि[णि पञ्च कर्मेन्द्रियाणि] इत्यवान्तरसंख्यानिवेशः तथा महदादिषु पञ्चशः पञ्चशः साधारणं निमित्तं वक्तव्यम्; न च तदस्ति महदादीनां परस्परमत्यन्तविलक्षणत्वात्। अतः

१. A. महदाद्याः
३. A omits अतः
२. T and T¹ omit क्रियासाधनत्वं

भाष्यम्.

द्वित्वादिकाः संख्या निविशन्ते । अथोच्येत—पञ्चविंशतिसंख्यैवेयमवयवद्वारेण लक्ष्यते, यथा "पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतुः" इति द्वादशवार्षिकीमनावृष्टिं कथयन्ति, तद्वदिति ; तदपि नोपपद्यते ; अयमेवास्मिन्पक्षे दोषः, यल्लक्षणाश्रयणीया स्यात् ; परश्चात्र पञ्चशब्दो जनशब्देन समस्तः पञ्चजना इति, भाषिकेण स्वरेणैकपदत्वनिश्चयात् ; प्रयोगान्तरे च "पञ्चानां त्वा पञ्चजनानाम्" इत्येकपद्यैकस्वर्यैकविभक्तिकत्वावगमात् ; समस्तत्वाच्च न वीप्सा पञ्च पञ्चेति । न च पञ्चकद्वयग्रहणं पञ्च पञ्चेति ।

प्रकटार्थविवरणम्

पञ्चपञ्चकत्वाभावान्नोपसंग्रह इत्यर्थः । महासंख्याया अवान्तरसंख्याविनाभूतत्वादवान्तरसंख्यावाचकेन पञ्चशब्दद्वयेन पञ्चविंशतितत्त्वसंख्यैव लक्ष्यते पञ्चपञ्चकत्वाभावेऽपि इति शङ्कते—अथोच्येतेति ॥ परिहरति—तदपि नेति ॥ नाविनाभावमात्रेण लक्षणा, किं तु मुख्यार्थपरिग्रहे प्रमाणान्तरविरोधे ; पौरुषेये च पुरुषविवक्षया ; नेह तदस्तीति निष्कारणलक्षणाश्रयणमेव दूषणमित्यर्थः । पूर्वमसामासाश्रयणेनावान्तरसंख्याप्रतीतिमभ्युपगम्य न तत्त्वसंख्यालक्षणं संभवतीत्युक्तम् । इदानीं तु समास एवायमित्याह—परश्चात्रेति[1] ॥ भाषिकेणेति ॥ पाठकप्रसिद्धेनान्तोदात्तस्वरेणेत्यर्थः । उक्तं हि—

"छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः ।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥"

इति । पाणिनिरपि "तत्पुरुषस्य[2] च [समासस्य]" इति सूत्रेण तत्पुरुषस्यान्तोदात्तस्वरं विदधौ; दृष्टो च तैत्तिरीयकाणां आज्यग्रहणमन्त्रे समासलिङ्गानां दर्शनात् समासो निश्चीयत इत्याह—प्रयोगान्तरे चेति ॥ अस्तु समासः, ततः किमित्याशङ्क्याह—समस्तत्वाच्चेति ॥ द्वितीयपञ्चशब्दस्य जनशब्देन समस्तत्वात् तत्पारतन्त्र्यान्न संख्यावृत्तिः ; नापि पञ्चकद्वयग्रहणमित्यर्थः । पूर्वया पञ्चसंख्ययोत्तरस्याः पञ्चसंख्याया विशेषितत्वमित्यपि नाशङ्कनीयमित्याह—

१. A. परेचात्रेति     २. TM omits तत्पुरुषस्य

भाष्यम्

न च पञ्चसंख्याया एकस्याः पञ्चसंख्यया परया विशेषणं पञ्च पञ्चका इति, उपसर्जनस्य विशेषणेनासंयोगात् ; नन्वापन्नपञ्चसंख्याका जना एव पुनः पञ्चसंख्यया विशेष्यमाणाः पञ्चविंशतिः प्रत्येष्यन्ते, यथा पञ्च पञ्चपूल्य इति पञ्चविंशतिपूलाः प्रतीयन्ते, तद्वत् ; नेति ब्रूमः ; युक्तं यत्पञ्चपूलीशब्दस्य समाहाराभिप्रायत्वात्कतीति सत्यां भेदाकाङ्क्षायां पञ्च पञ्चपूल्य इति विशेषणम् ; इह तु पञ्च जना इत्यादित एव भेदोपादानात्कतीत्यसत्यां भेदाकाङ्क्षायां न पञ्च पञ्चजना इति विशेषणं भवेत् ; भवदपीदं विशेषणं पञ्चसंख्याया एव भवेत् ; तत्र चोक्तो दोषः ; तस्मात्पञ्च पञ्चजना इति न पञ्चविंशतितत्त्वाभिप्रायम् ।

प्रकटार्थविवरणम्

न च पञ्चसंख्याया इति ॥ विशेषणानां विशेष्यणैवान्वयात् परस्परमनन्वयादित्यर्थः । मा भूत्संख्यायाः संख्यान्तरेण विशेषितत्वम् ; पदार्थानां[१] तु भविष्यतीत्याह—नन्वापन्नेति ॥ दृष्टान्तदार्ष्टान्तिकयोः वैलक्षण्येन परिहरति—नेति ब्रूम इति ॥ परस्पराकाङ्क्षया हि पदयोरन्वयः ; तत्र पञ्चानां पूलानां समाहारः पञ्चपूलीति समाहारार्थे द्विगुसमासः ; ते च समाहाराः कतीत्याकाङ्क्षायां सत्यां पञ्चेति विशेषणं युक्तम् ; पञ्चजना इति तु समाहारे समासे ईबन्तत्वप्रसङ्गात् । अतः प्रथमत एव संख्याप्रतीतेः पुनराकाङ्क्षाभावान्न पञ्चेति विशेषणं युक्तमित्यर्थः । ननु प्रथमं स्वरूपाणां[२] संख्या प्रतीता[३] ; संख्याविशिष्टस्वरूपाणां तु संख्याकाङ्क्षायां पुनः पञ्चेति विशेषणं भविष्यतीत्याशङ्क्याह — भवदपीदमिति ॥ पञ्चसंख्याया एवेति ॥ पञ्चसंख्याविशिष्टानां रूपाणामेवेदं पञ्चेति विशेषणं भवेत् । तदा[४] यथा पञ्च स्वरूपाणि तथा पञ्च विशिष्टरूपाणि सिध्यन्ति । तत्र च सांख्यतत्त्वासिद्धिरेवोक्तो दोष इत्यर्थः । इतश्च पञ्चजनशब्दो न पञ्च-

१. T, T¹ and TM. पदानामर्थानां

२. A omits संख्या......पाणां

३. T and TM. प्रतीतिता

४. T, T¹, P and TM add न

भाष्यम्

अतिरेकाच्च न पञ्चविंशतितत्त्वाभिप्रायम्; अतिरेको हि भवत्यात्माकाशाभ्यां पञ्चविंशतिसंख्यायाः; आत्मा तावदिह प्रतिष्ठां प्रत्याधारत्वेन निर्दिष्टः, यस्मिन्निति सप्तमीसूचितस्य "तमेव मन्य आत्मानम्" इत्यात्मत्वेनानुकर्षणात्; आत्मा च चेतनः पुरुषः; स च पञ्चविंशतावन्तर्गत एवेति न तस्यैवाधारत्वमाधेयत्वं च युज्यते; अर्थान्तरपरिग्रहे च तत्त्वसंख्यातिरेकः सिद्धान्तविरुद्धः प्रसज्येत; तथा "आकाशश्च प्रतिष्ठितः" इत्याकाशस्यापि पञ्चविंशतावन्तर्गतस्य न पृथगुपादानं न्याय्यम्; अर्थान्तरपरिग्रहे चोक्तं दूषणम्। कथं च संख्यामात्रश्रवणे सत्यश्रुतानां पञ्चविंशतितत्त्वानामुपसंग्रहः प्रतीयते? जनशब्दस्य तत्त्वेष्वरूढत्वात्, अर्थान्तरोपसंग्रहेऽपि संख्योपपत्तेः। कथं तर्हि पञ्च पञ्चजना इति? उच्यते—"दिक्संख्ये संज्ञायाम्" इति विशेषस्मरणात्संज्ञायामेव पञ्चशब्दस्य जनशब्देन समासः; ततश्च रूढत्वाभिप्रायेणैव केचित्पञ्चजना नाम विवक्ष्यन्ते, न सांख्यतत्त्वाभिप्रायेण; ते कतीत्यस्यामाकाङ्क्षायां पुनः पञ्चेति प्रयुज्यते; पञ्चजना नाम ये केचित्ते च पञ्चैवेत्यर्थः; सप्तर्षयः सप्तेति यथा॥

प्रकटार्थविवरणम्

विंशतितत्त्वान्याचष्टे अनिष्टसप्तविंशतिसंख्याप्रसङ्गादित्याह—अतिरेकाच्चेति॥ किं च भवतु वा पञ्चविंशतिसंख्याप्रतीतिः; तावता सांख्याभिमतानां ग्रहणं कुत इत्याह—कथं चेति॥ अथ जनशब्दात्प्रतीयते, तत्राह—जनशब्दस्येति॥ अथ संख्यायाः संख्येयाकाङ्क्षायां तान्येव संबध्यन्ते, तत्राह—अर्थान्तरोपसङ्ग्रहेऽपीति॥ किं तर्हि पञ्चजनशब्दस्यार्थान्तरमित्याह—कथं तर्हीति॥ कर्मधारयाद्यनेकविधसमाससंभवेऽपि संज्ञासमासं बलवत्तरमासवचनात् उपादायाह—उच्यत इत्यादिना॥ दिग्वाचिनः संख्यावाचिनश्च शब्दाः संज्ञायां गम्यामानायां उत्तरपदेन समस्यन्ते स तत्पुरुषसंज्ञकः समासो भवतीति सूत्रार्थः॥

भाष्यम्

के पुनस्ते पञ्चजना नामेति, तदुच्यते—

## प्राणादयो वाक्यशेषात्॥ १-४-१२॥

"यस्मिन्पञ्च पञ्चजनाः" इत्यत उत्तरस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणाय प्राणादयः पञ्च निर्दिष्टाः—"प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति; तेऽत्र वाक्यशेषगताः संनिधानात्पञ्चजना विवक्ष्यन्ते। कथं पुनः प्राणादिषु जनशब्दप्रयोगः? तत्त्वेषु वा कथं जनशब्दप्रयोगः? समाने तु प्रसिद्ध्यतिक्रमे वाक्यशेषवशात्प्राणादय एव ग्रहीतव्या भवन्ति; जनसंबन्धाच्च प्राणादयो जनशब्दभाजो भवन्ति; जनवचनश्च पुरुषशब्दः प्राणेषु प्रयुक्तः "ते वा एते पञ्च ब्रह्मपुरुषाः" इत्यत्र; "प्राणो ह पिता प्राणो ह माता" इत्यादि च ब्राह्मणम्। समासबलाच्च समुदायस्य

प्रकटार्थविवरणम्

संज्ञिनिर्देशार्थं सूत्रमवतारयति—के पुनस्त इति ॥

प्राणादयो वाक्यशेषात् ॥

ननु यदि वाक्यशेषगताः पञ्च प्राणादयो गृह्यन्ते, तर्हि पञ्च च ते जनाश्चेति कर्मधारयोऽप्यविरुद्ध इति मत्वा जनशब्दप्रवृत्तिं पृच्छति—कथं पुनः प्राणादिष्विति ॥ प्रतिबन्दिग्रहणेन कश्चित्परिहरति—तत्त्वेषु वा कथमिति ॥ यदि प्रसिध्यतिक्रमेण तत्त्वेषु जनशब्दः परेणाभ्युपगम्यते, तत्राह—समाने त्विति ॥ जनशब्दस्य प्राणादिषु प्रवृत्तौ कारणान्तरमाह—जनसंबन्धाच्चेति ॥ एवं एकदेशिनः परिहारमुक्त्वा रहस्यमाह—समासबलाच्चेति ॥ अश्वकर्णादिवत् पञ्चजना इति समुदायस्यैव रूढत्वं नैकैकस्यावयवार्थो गृह्यत इति भावः। वृद्धव्यवहारे प्रयोगाभावे न रूढिरित्याह—

१. T, P, TM and A. केन

भाष्यम्

रूढत्वमविरुद्धम्; कथं पुनरसति प्रथमप्रयोगे रूढिः शक्याश्रयितुम्? शक्योद्भिदादिवदित्याह — प्रसिद्धार्थसंनिधाने ह्यप्रसिद्धार्थः शब्दः प्रयुज्यमानः समभिव्याहारात्तद्विषयो नियम्यते, यथा "उद्भिदा यजेत" "यूपं छिनत्ति" "वेदिं करोति" इति, तथायमपि पञ्चजनशब्दः समासान्वाख्यानादवगतसंज्ञाभावः संख्याकाङ्क्षी वाक्यशेषसमभिव्याहृतेषु प्राणादिषु वर्तिष्यते। कैश्चित्तु देवाः पितरो गन्धर्वा असुरा रक्षांसि च पञ्च पञ्चजना व्याख्याताः; अन्यैश्च चत्वारो वर्णा निषादपञ्चमाः परिगृहीताः; क्वचिच्च "यत्पाञ्चजन्यया विशा" इति प्रजापरः प्रयोगः पञ्चजनशब्दस्य दृश्यते; तत्परिग्रहेऽपीह न

प्रकटार्थविवरणम्

कथं पुनरिति ॥ लौकिकप्रयोगाभावेऽपि रूढिर्दृष्टेत्याह—शक्योद्भिदादिवदिति ॥ वस्तुसङ्ग्रहवाक्यं विवृणोति — प्रसिद्धार्थेति ॥ उद्भिदेति तृतीया; सा करणे प्रसिद्धा; करणं च यागः, अतो यजत्यर्थसामानाधिकरण्यादुद्भिदेति यागनामधेयं निर्णीतम्। तदुक्तम्—

"पदमज्ञातसंबन्धं प्रसिद्धेरपृथक्श्रुति।
निर्णीयते निरूढं तु न स्वार्थादपनीयते" ॥ इति[1] ॥

तथा "यूपं छिनत्ति" इति प्रसिद्धविषयकर्मसमभिव्याहारात् छेदनादिसंस्कार्ययूपपदार्थावगतिः। तथा "वेदिं करोति" इति करोत्यर्थसमभिव्याहारात् क्रियमाणवेदिपदार्थावगतिरित्यर्थः। वृत्त्यन्तरकारमतेऽपि सांख्याभिमतानि तत्त्वानि न सिध्यन्तीत्याह—कैश्चित्त्विति ॥ ब्राह्मणाच्छूद्रायां जातो निषादः ॥ पाञ्चजन्ययेति ॥ प्रजया विशा पुरुषरूपया यदिन्द्राह्वाननिमित्तं घोषाः सृष्टा इत्यत्र प्रजापरः प्रयोगो दृश्यते, अतोऽत्र पञ्च प्रजा ग्राह्या इत्यर्थः।

१. A omits इति

भाष्यम्

कश्चिद्विरोधः ; आचार्यस्तु न पञ्चविंशतेस्तत्त्वानामिह प्रतीतिरस्तीत्येवं-परतया "प्राणादयो वाक्यशेषात्" इति जगाद ॥

भवेयुस्तावत्प्राणादयः पञ्चजना माध्यंदिनानां येऽन्नं प्राणादिष्वामनन्ति ; काण्वानां तु कथं प्राणादयः पञ्चजना भवेयुर्येऽन्नं प्राणादिषु नामनन्तीति । अत उत्तरं पठति—

## ज्योतिषैकेषामसत्यन्ने ॥ १-४-१३ ॥

असत्यपि काण्वानामन्ने ज्योतिषा तेषां पञ्चसंख्या पूर्येत ; तेऽपि हि "यस्मिन्पञ्च पञ्चजनाः" इत्यतः पूर्वस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणायैव ज्योतिरधीयते "तद्देवा ज्योतिषां ज्योतिः" इति । कथं पुनरुभयेषामपि तुल्यवदिदं ज्योतिः पठ्यमानं समानमन्त्रगतया पञ्चसंख्यया केषांचिद्गृह्यते केषांचिन्नेति । अपेक्षाभेदादित्याह । माध्यंदिनानां हि समानमन्त्रपठितप्राणादिपञ्चजनलाभात्तस्मिन्मन्त्रान्तरपठिते ज्योतिष्यपेक्षा भवति ; तदलाभात्तु काण्वानां भवत्यपेक्षा ; अपेक्षाभेदाच्च समानेऽपि मन्त्रे ज्योतिषो ग्रहणाग्रहणे, यथा समानेऽप्यतिरात्रे वचनभे-

प्रकटार्थविवरणम्

नन्वाचार्यवचनमेव विरुध्यत इत्याशङ्क्याह — अचार्यस्त्विति ॥ न व्याख्यान्तराभावाभिप्रायेणेत्यर्थः ।

ज्योतिषैकेषामसत्यन्ने ॥

उत्तरसूत्रस्य शङ्कामाह—भवेयुस्तावदिति ॥ एकत्रैव ज्योतिषो ग्रहणाग्रहणे विरुद्धे इत्याह—कथं पुनरिति ॥ सिद्धान्त्यविरोधमाह—अपेक्षाभेदादिति ॥ एकस्मिन्नेव मन्त्रे पठितानां प्राणादीनां पञ्चतयस्य पञ्चसंख्याया लाभादित्यर्थः । "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं

१. A omits ना......ह्णाति

भाष्यम्

दात् षोडशिनो ग्रहणाग्रहणे, तद्वत् । तदेवं न तावच्छ्रुतिप्रसिद्धिः काचित्प्रधानविषयास्ति ; स्मृतिन्यायप्रसिद्धी तु परिहरिष्येते ॥

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १-४-१४ ॥

प्रतिपादितं ब्रह्मणो लक्षणम् ; प्रतिपादितं च ब्रह्मविषयं गतिसामान्यं वेदान्तवाक्यानाम् ; प्रतिपादितं च प्रधानस्याशब्दत्वम् ; तत्रेदमपरमाशङ्क्यते—न जन्मादिकारणत्वं ब्रह्मणो ब्रह्मविषयं वा गतिसामान्यं वेदान्तवाक्यानां प्रतिपत्तुं शक्यम् ; कस्मात् ? विगानदर्शनात् । प्रतिवेदान्तं ह्यन्यान्या सृष्टिरुपलभ्यते क्रमादिवैचित्र्यात् । तथा हि—क्वचित् "आत्मन आकाशः संभूतः" इत्याकाशादिका सृष्टिराम्नायते ; क्वचित्तेजआदिका—"तत्तेजोऽसृजत" इति ; क्वचित्प्राणादिका—"स प्राणमसृजत प्राणाच्छ्रद्धाम्" इति ; क्वचिदक्रमेणैव लोकानामुत्पत्तिराम्नायते—"स इमाँल्लोकानसृजत । अम्भो मरीचीर्मरमापः" इति ।

प्रकटार्थविवरणम्

गृह्णाति" इति वचनभेदादेकस्मिन्नप्यतिरात्रेऽह्नि षोडशिग्रहणमग्रहणं चाङ्गमुपपद्यते । शाखाभेदेनोभयवचनप्रामाण्यादित्यर्थः । उपसंहरति प्रधानस्य शब्दत्वप्रपञ्चम्—तदेवमिति ॥ तथापि स्मृतिन्यायप्रसिद्धिभ्यां प्रधानमेव जगत्कारणं भविष्यतीत्याशङ्क्याह—स्मृतिन्यायेति ॥

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥

एवं तावत्प्रधानस्याशब्दत्वं प्रपञ्च्य पुनर्गतिसामान्यमेवाशङ्क्य प्रपञ्च्यत इति व्यवहितसङ्गतिं वदिष्यन् वृत्तं सङ्कीर्तयति—प्रतिपादितमिति ॥ एकरूपादिप्रवृत्तिदर्शनादित्याह — विगानदर्शनादिति ॥ भूरादिक्रमेण हि लोकाः प्रसिद्धाः । तद्वैपरीत्येनाह—अक्रमेणैवेति ॥ अम्भ इत्यम्भयशरीरप्रधानः स्वर्लोकः । मरीचिरिति रश्मिप्रधानोऽन्तरिक्षलोकः । मरमिति मरण-

भाष्यम्

तथा क्वचिदसत्पूर्विका सृष्टिः पठ्यते—“असद्वा इदमग्र आसीत्। ततो वै सदजायत” इति “असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत्” इति च ; क्वचिदसद्वादनिराकरणेन सत्पूर्विका प्रक्रिया प्रतिज्ञायते—“तद्धैक आहुरसदेवेदमग्र आसीत्” इत्युपक्रम्य “कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीत्” इति ; क्वचित्स्वयंकर्तृकैव व्याक्रिया जगतो निगद्यते—“तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत” इति । एवमनेकधा विप्रतिपत्तेर्वस्तुनि च विकल्पस्यानुपपत्तेर्न वेदान्तवाक्यानां जगत्कारणावधारणपरता न्याय्या ; स्मृतिन्यायप्रसिद्धिभ्यां तु कारणान्तरपरिग्रहो न्याय्य इति ॥

एवं प्राप्ते ब्रूमः—सत्यपि प्रतिवेदान्तं सृज्यमानेष्वाकाशादिषु क्रमादिद्वारके विगाने न स्रष्टरि किंचिद्विगानमस्ति ; कुतः ? यथाव्यपदिष्टोक्तेः—यथाभूतो ह्येकस्मिन्वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वा-

प्रकटार्थविवरणम्

प्रचुरोऽयं लोकः । आप इत्यम्बुबहुलः पाताललोक इत्यर्थः । न केवलं सृष्टिरेवान्यथा प्रकाशते ; स्रष्टर्यपि विगानं दृश्यत इत्याह—तथा क्वचिदसत्पूर्विकेति ॥ तदसत् यदा कार्योन्मुखं तदा सदासीदुच्यते । तदेव कार्याकारेण व्यक्तं सत्समभवदित्युच्यते । फलितमाह—एवमनेकधेति ॥ किं तर्हि न्याय्यमित्याशङ्क्याह— स्मृतिन्यायेति ॥ सर्वे जगत्कारणविषयाः शब्दाः विषयाः । ते किं कारणान्तरं समर्पयन्ती ब्रह्म वेति सन्देहे पूर्वाधिकरणे यथा कर्मधारयाद्यनेकविधसमासप्रतिभासेनानिर्णयप्रसक्ते सत्याप्तवचनात्संज्ञासमासोऽङ्गीकृतः तथा वेदान्तेभ्योऽनेककारणप्रतिभासेनानिर्णयप्रसङ्गे स्मृतिन्यायाभ्यां प्रधानपरिग्रहो न्याय्यः । सर्वे जगत्कारणविषयाः शब्दाः तत्रैव लक्षणविषया वर्तन्त इति गतिसामान्यमिति भावः ॥

स्रष्टरि विप्रतिपत्त्यभावात् तत्र तावद्वेदान्तानां गतिसामान्यं सिद्धमित्याह — एवं प्राप्ते ब्रूम इत्यादिना ॥ तैत्तिरीयके तावत् उक्त-

भाष्यम्

त्यैकोऽद्वितीयः कारणत्वेन व्यपदिष्टः, तथाभूत एव वेदान्तान्तरेष्वपि व्यपदिश्यते । तद्यथा—"सत्यं ज्ञानमनन्तं ब्रह्म" इति; अत्र तावज्ज्ञानशब्देन परेण च तद्विषयेण कामयितृत्ववचनेन चेतनं ब्रह्म न्यरूपयत्; अपरप्रयोज्यत्वेनेश्वरं कारणमब्रवीत् । तद्विषयेणैव परेणात्मशब्देन शरीरादिकोशपरम्परया चान्तरनुप्रवेशनेन सर्वेषामन्तः प्रत्यगात्मानं निरधारयत्; "बहु स्यां प्रजायेय" इति चात्मविषयेण बहुभवनानुशंसनेन सृज्यमानानां विकाराणां स्रष्टुरभेदमभाषत; तथा "इदं सर्वमसृजत । यदिदं किं च" इति समस्तजगत्सृष्टिनिर्देशेन प्राक्सृष्टेरद्वितीयं स्रष्टारमाचष्टे; तत्र यल्लक्षणं ब्रह्म कारणत्वेन विज्ञातम्, तल्लक्षणमेवान्यत्रापि विज्ञायते—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत" इति; तथा "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत् । स ईक्षत लोकान्नु सृजै" इति च—एवंजातीयकस्य कारणस्वरूपनिरूपणपरस्य वाक्यजातस्य प्रतिवेदान्तमविगीतार्थत्वात् । कार्यविषयं तु विगानं दृश्यते—क्वचिदाकाशादिका सृष्टिः क्वचित्तेजआदिकेत्येवंजातीयकम् । न च कार्यविषयेण विगानेन कारणमपि ब्रह्म सर्ववेदान्तेष्वविगीतमधिगम्यमानमविवक्षितं भवितुमर्हतीति शक्यते वक्तुम्, अति-

प्रकटार्थविवरणम्

लक्षणं कारणं निरूपयति — तद्यथेत्यादिना ॥ अपरप्रयोज्यत्वेनेति ॥ परेण प्रेर्यत्वाभावेन स्वतन्त्रस्यैव जगत्स्रष्टृतेत्यर्थः । एवं तावत्तैत्तिरीयके सर्वज्ञमीश्वरं सर्वात्मभूतमेकमद्वितीयं जगत्कारणं निरूप्य छान्दोग्यादिष्वप्यतिदिशति — तत्र यल्लक्षणमिति ॥ ननु कार्ये विगानदर्शनात् कारणेऽपि विगानमनुमीयत इत्याशङ्क्याह — कार्यविषयं त्विति ॥ कार्ये विगानमङ्गीकृत्यान्यविगानेनान्यस्य विगीतत्वेऽतिप्रसङ्ग उक्तः । इदानीं कार्येऽपि नास्ति विप्रतिपत्तिः; आकाशादिक्रमेणैकरूपैव सर्ववेदान्तेषु सृष्टिरिति

### भाष्यम्

प्रसङ्गात् । समाधास्यति चाचार्यः कार्यविषयमपि विगानम् "न वियदश्रुतेः" इत्यारभ्य । भवेदपि कार्यस्य विगीतत्वमप्रतिपाद्यत्वात् । न ह्ययं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितः । न हि तत्प्रतिबद्धः कश्चित्पुरुषार्थो दृश्यते श्रूयते वा । न च कल्पयितुं शक्यते, उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकमेकवाक्यताया गम्यमानत्वात् । दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थताम्—"अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ" इति । मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वदितुं सृष्ट्यादिप्रपञ्चः श्राव्यत इति गम्यते । तथा च संप्रदायविदो वदन्ति—

### प्रकटार्थविवरणम्

वक्ष्यत इत्याह—समाधास्यति चेति ॥ किं च कार्यप्रपञ्चस्य प्रमाणान्तरसिद्धत्वात् तत्प्रतिबिम्बफलभावाच्च तत्र तात्पर्यद्योतनाय भवेद्विगानमित्याह—भवेदपीति ॥ नन्वध्ययनविध्युपात्तानां सृष्टिवाक्यानां अवश्यं पुरुषार्थानुबन्धो वक्तव्य इति प्रपञ्चज्ञानप्रतिबद्धं किंचित्पुरुषार्थं परिकल्प्य तत्रैव परमतात्पर्यं कल्प्यत इत्याशङ्क्याह—न च कल्पयितुमिति ॥ "फलवत्संनिधावफलं तदङ्गम्" इति न्यायेन प्रयाजादिवाक्यानामिव स्वार्थं प्रतिपाद्य सृष्टिवाक्यानां ब्रह्मवाक्यैरेकवाक्यतान्वयात् फलवत्त्वोपपत्तेः न स्वार्थेऽपि फलान्तरकल्पना युक्तिमतीति भावः । सृष्टेरद्वितीयप्रतिपत्तिशेषतया लिङ्गमप्यस्तीत्याह—दर्शयति चेति ॥ ननु ब्रह्मज्ञानमपि न फलम्, येन निष्फलसृष्टेः तच्छेषता स्यादित्याशङ्क्याह—ब्रह्मप्रतिपत्तीति ॥ तस्मात्फलवद्ब्रह्मज्ञानशेषत्वात् स्रष्टरि येनकेनचित्क्रमेणाद्वैतबुद्ध्यवतारेणोपपत्तेः न सृष्टिविगानं स्रष्टरि विगानमापादयतीति सिद्धम् ॥

१. T, P, TM and A omit अवश्यं ... सृष्टिवाक्यानां

२. A. वाक्यत्वान्वयात्

३. TM. युक्तमितीति
A. युक्तेति

भाष्यम्

"मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा ।
उपायः सोऽवताराय नास्ति भेदः कथंचन ॥" इति ।

ब्रह्मप्रतिपत्तिप्रतिबद्धं तु फलं श्रूयते — "ब्रह्मविदाप्नोति परम्" "तरति शोकमात्मवित्" "तमेव विदित्वातिमृत्युमेति" इति । प्रत्यक्षावगमं चेदं फलम् । "तत्त्वमसि" इत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मत्वव्यावृत्तेः ॥

यत्पुनः कारणविषयं विगानं दर्शितम् "असद्वा इदमग्र आसीत्" इत्यादि, तत्परिहर्तव्यम्; अत्रोच्यते—

## समाकर्षात् ॥ १-४-१५ ॥

"असद्वा इदमग्र आसीत्" इति नात्रासन्निरात्मकं कारणत्वेन श्राव्यते; यतः "असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः" इत्यसद्वादापवादेनास्तित्वलक्षणं ब्रह्मान्नमयादिकोशपरम्परया प्रत्यगात्मानं निर्धार्य "सोऽकामयत" इति तमेव प्रकृतं समाकृष्य सप्रपञ्चां सृष्टिं तस्माच्छ्रावयित्वा "तत्सत्य-

प्रकटार्थविवरणम्

इदानीं श्रुत्युक्तस्रष्टृविप्रतिपत्तिनिरासाय सूत्रमवतारयति—यत्पुनरित्यादिना ॥

समाकर्षात् ॥

तावदेव कारणे विप्रतिपत्तिरुदयमासादयति यावत्पूर्वपरामर्शो न क्रियते[1] इति । पूर्वापरपर्यालोचनायां त्वसदादिशब्दानां चेतनकारणवाचिबहु-[2]शब्दानुसारेण लक्षणया ब्रह्मण्येव वृत्तिरिति[3] प्रमाणान्तरानुसारेण सर्वशब्दानां प्रधाने लक्षणाश्रयणाद्वरं स्वान्तर्वर्तिबहुशब्दानुसारेण कतिपय-

१. A. सृष्टि
२. T. शब्दश्चेतन
A. शब्दाश्चेतन
३. T¹. प्रवृत्तिः

## भाष्यम्

मिथ्यावसते" इति चोपसंहृत्य "तदप्येष श्लोको भवति" इति तस्मिन्नेव प्रकृतेऽर्थे श्लोकमिममुदाहरति—"असद्वा इदमग्र आसीत्" इति ; यदि त्वसन्निरात्मकमस्मिन् श्लोकेऽभिप्रेयेत ततोऽन्यसमाकर्षणेऽन्यस्योदाहरणादसंबद्धं वाक्यमापद्येत ; तस्मान्नामरूपव्याकृतवस्तुविषयः प्रायेण सच्छब्दः प्रसिद्ध इति तद्व्याकरणाभावापेक्षया प्रागुत्पत्तेः सदेव ब्रह्मासदिवासीदित्युपचर्यते । एषैव "असदेवेदमग्र आसीत्" इत्यत्रापि योजना, "तत्सदासीत्" इति समाकर्षणात् ; अत्यन्ताभावाभ्युपगमे हि तत्सदासीदिति किं समाकृष्येत ? "तद्धैक आहुरसदेवेदमग्र आसीत्" इत्यत्रापि न श्रुत्यन्तराभिप्रायेणायमेकीयमतोपन्यासः, क्रियायामिव वस्तुनि विकल्पस्यासंभवात् ; तस्माच्छ्रुतिपरिगृहीतसत्पक्षदार्ढ्यायैवायं मन्दमतिपरिकल्पितस्यासत्पक्षस्योपन्यस्य निरास इति द्रष्टव्यम् । "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यत्रापि न निरध्यक्षस्य जगतो व्याकरणं कथ्यते "स एष इह प्रविष्ट आ नखाग्रेभ्यः" इत्यध्यक्षस्य व्याकृतकार्यानुप्रवेशित्वेन समाकर्षात् ; निरध्यक्षे व्याकरणाभ्युपगमे ह्यनन्तरेण प्रकृतावलम्बिना स इत्यनेन

## प्रकटार्थविवरणम्

लक्षणाश्रयणमिति भावः । ननु "उदिते जुहोति" "अनुदिते जुहोति" इतिवत् केषांचित्सत्कारणं केषांचिदसत्कारणमिति श्रुत्यैव विकल्पो दर्शितः । कथमसच्छब्दस्य ब्रह्मणि लक्षणाश्रयणमित्याशङ्क्याह—तद्धैक आहुरिति ॥ यथा कालपरिच्छेदाभावेऽपि श्रोतृकालापेक्षयाग्र आसीदित्यादि कालव्यपदेशः, तद्वदसत्पक्षस्य श्रौतत्वाभावेऽपि अनादिसंसारसन्ततौ [1]मन्दमतिपरिकल्पित[2]स्य अनूद्य निरास इति भावः । यदुक्तमकर्तृकस्यैव जगतोऽव्याकरणं स्वभाववादानुवादि भूयत इति तत्रापि सूत्रं योजयति—तद्धेदं तर्हीति ॥ ननु महाभूतसमुदायो भौतिके वर्तमानोऽनुप्रविष्ट उच्यते ; कुत ईश्वर-

१. T, T¹ and P. मन्दमिति  २. A. परिकल्पितव्यानिरासः

भाष्यम्

सर्वनाम्ना कः कार्यानुप्रवेशित्वेन समाकृष्येत? चेतनस्य चायमात्मनः शरीरेऽनुप्रवेशः श्रूयते, अनुप्रविष्टस्य चेतनत्वश्रवणात् "पश्यंश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनः" इति; अपि च यादृशमिदमद्यत्वे नामरूपाभ्यां व्याक्रियमाणं जगत्साध्यक्षं व्याक्रियत एवामादिसर्गेऽपीति गम्यते, दृष्टविपरीतकल्पनानुपपत्तेः; श्रुत्यन्तरमपि "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति साध्यक्षामेव जगतो व्याक्रियां दर्शयति; व्याक्रियत इत्यपि कर्मकर्तरि लकारः सत्येव परमेश्वरे व्याकर्तरि सौकर्यमपेक्ष्य द्रष्टव्यः—यथा लूयते केदारः स्वयमेवेति सत्येव पूर्णके लवितरि; यद्वा कर्मण्येवैष लकारोऽर्थाक्षिप्तं कर्तारमपेक्ष्य द्रष्टव्यः—यथा गम्यते ग्राम इति ॥

## जगद्वाचित्वात् ॥ १-४-१६ ॥

कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते—"यो वै बालाक

प्रकटार्थविवरणम्

सिद्धिरित्याशङ्क्याह—चेतनस्य चायमिति ॥ इतश्च सत्कर्तृकैव सृष्टिर्व्याकृतवाक्येनोक्तेत्याह — अपि चेति ॥ किं व्याख्यातप्रयोगोऽपि न कर्तारं वारयतीत्याह—व्याक्रियत इत्यपीति ॥ यत्कर्म गुणयोगात् कर्तृत्वेन विवक्ष्यते स कर्मकर्ता, यथा केदारस्य लवनकर्तुः व्यापारं प्रति कर्मत्वेऽपि अप्रयासेन लूयमानत्वाभिप्रायेण स्वयमेव लूयत इति कर्तृत्वमुपचर्यते तथा, जगत् परमेश्वरेण निष्पाद्यमानं सङ्कल्पमात्रेण निष्पाद्यत इति स्वयमेव निष्पन्नमित्युपचार इत्यर्थः। अथ वा तज्जगत् परमेश्वरेण नामरूपाभ्यां व्याक्रियत व्याकृतं निष्पादितमिति कर्मकारकमेवाख्याताभिधेयमित्याह — यद्वेति ॥ यथा 'ग्रामो गम्यते' इत्युक्ते अर्थाद्देवदत्तेनेति कर्ता प्रतीयते, तथेहापि कर्मणि प्रत्ययार्थेऽर्थात्कर्तृप्रतीतिरित्यर्थः ॥

जगद्वाचित्वात् ॥

विषयमाह—कौषीतकीति ॥ बालाकाया अपत्यं बालाकिः ब्राह्मणः। राजा अजातशत्रुः । तयोः ब्रह्मविषयसंवादे गोष्ठयाम् । कर्मशब्दस्य रूढियोग-

भाष्यम्

एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वेदितव्यः" इति । तत्र किं जीवो वेदितव्यत्वेनोपदिश्यते, उत मुख्यः प्राणः, उत परमात्मेति विशयः। किं तावत्प्राप्तम् ? प्राण इति । कुतः ? "यस्य वैतत्कर्म" इति श्रवणात्, परिस्पन्दलक्षणस्य च कर्मणः प्राणाश्रयत्वात्; वाक्यशेषे च "अथास्मिन्प्राण एवैकधा भवति" इति प्राणशब्दश्रवणात्। प्राणशब्दस्य च मुख्ये प्राणे प्रसिद्धत्वात्; ये चैते पुरस्ताद्बालाकिना 'आदित्ये पुरुषः' 'चन्द्रमसि पुरुषः' इत्येवमादयः पुरुषा निर्दिष्टास्तेषामपि भवति प्राणः कर्ता, प्राणावस्थाविशेषत्वादादित्यादिदेवतात्मनाम्, "कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते" इति श्रुत्यन्तरप्रसिद्धेः। जीवो वायमिह वेदितव्यतयोपदिश्यते; तस्यापि धर्माधर्मलक्षणं कर्म शक्यते श्रावयितुम्—"यस्य वैतत्कर्म" इति; सोऽपि भोक्तृत्वाद्भोगोपकरणभूतानामेतेषां पुरुषाणां कर्तोपपद्यते; वाक्यशेषे च जीवलिङ्गमवगम्यते—यत्कारणं वेदितव्यतयोपन्यस्तस्य पुरु-

प्रकटार्थविवरणम्

वृत्तिसंभवात्[१] संशयमाह—तत्र किमिति ॥ पूर्वत्र बहूनां चेतनवाचिशब्दानां मुख्यार्थत्वानुसारेण ब्रह्मपरिग्रहः कृतः; तथेहापि कर्मप्राणशब्दयोः मुख्यत्वानुसारेण पूर्वपक्षमाह—प्राण इति ॥ नन्विहादित्यादिपुरुषाणां कर्ता वेदितव्यत्वेनोक्तः; न च प्राणस्य तत्कर्तृत्वमस्तीत्याशङ्क्याह—ये चैते पुरस्तादिति ॥ सूत्रात्मा हि प्राण उपास्यत्वेनेह विवक्षितः; तस्यावस्थाभेदा आदित्यादय इति। अत्र प्रमाणमाह—कतम इति ॥ स प्राणो ब्रह्म आदित्यादिदेवतात्मना बृहत्त्वात्[२] देवतायाः परोक्षत्वात्तदिति[३] परोक्षं नाम कथयन्तीत्यर्थः। पूर्वपक्षान्तरमाह—जीवो वेति ॥ बृहन् पाण्डुरवासः सोम राजन्निति सुप्तं[४] पुरुषमामन्त्र्य संबोध्येत्यर्थः। यदि प्राणो भोक्ता स्यादामन्त्रणशब्दं शृणुयादेव। न हि स्वामिनि व्याप्रियमाणे करणानामुपरमो दृष्ट इत्यर्थः। भोक्तृत्वमपि जीवस्यैव गमक-

१. TM omits. सं
२. TM बृहत्त्वदेवता
३. T, T¹, TM and A. पारोक्ष्यात्
४. A. पूर्वे

भाष्यम्

षाणां कर्तुर्वेदनायोपेतं बालाकिं प्रति बुबोधयिषुरजातशत्रुः सुप्तं पुरुषमामन्त्र्यामन्त्रणशब्दाश्रवणात्प्राणादीनामभोक्तृत्वं प्रतिबोध्य यष्टिघातोत्थानात्प्राणादिव्यतिरिक्तं जीवं भोक्तारं प्रतिबोधयति ; तथा परस्तादपि जीवलिङ्गमवगम्यते—"तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति" इति ; प्राणभृत्त्वाच्च जीवस्योपपन्नं प्राणशब्दत्वम् । तस्माज्जीवमुख्यप्राणयोरन्यतर इह ग्रहणीयः, न परमेश्वरः, तल्लिङ्गानवगमादिति । एवं प्राप्ते ब्रूमः—

परमेश्वर एवायमेतेषां पुरुषाणां कर्ता स्यात् ; कस्मात् ? उपक्रमसामर्थ्यात् । इह हि बालाकिरजातशत्रुणा सह "ब्रह्म ते ब्रवाणि" इति संवदितुमुपचक्रमे ; स च कतिचिदादित्याद्यधिकरणान्पुरुषानमुख्यब्रह्मदृष्टिभाज उक्त्वा तूष्णीं बभूव ; तमजातशत्रुः "मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणि" इत्यमुख्यब्रह्मवादितयापोद्य, तत्कर्तार-

प्रकटार्थविवरणम्

मित्याह — तथा परस्तादिति ॥ श्रेष्ठी प्रधानपुरुषः स्वैर्भृत्यैः उपकरणैः भुङ्क्ते, यथा वा भृत्याः श्रेष्ठिनं ग्रासाच्छादनेनोपजीवन्ति एवं जीवोऽप्यादित्यादिभिः प्रकाशादिकरणेन भोगोपकरणैः भुङ्क्ते । आदित्यादयोऽप्येनं जीवमुपजीवन्ति हविर्ग्रहणादिनेत्यर्थः । "अथास्मिन् प्राण एवैकधा" इति प्राणशब्दः कथं जीवे विद्यत इत्याशङ्क्याह—प्राणभृत्त्वाच्चेति ॥

उत्सूत्रमेव तावत् सिद्धान्तमाह—परमेश्वर एवायमिति ॥ वाक्यशेषे सन्दिग्धं तन्निश्चितेनोपक्रमेण निर्णीयते यथा "उच्चैरृचा क्रियते" इत्यादावृगादिशब्दानां वेदवचनत्वं निर्णीतम् "अग्नेर्ऋग्वेदः" "वायोर्यजुर्वेदः" इत्यसन्दिग्धोपक्रमात् ; तथेहापि ब्रह्माभिधानोपक्रमात् , अब्रह्मविदश्चापोदितत्वात् ब्रह्मैव वेदितव्यः पुरुष इत्यर्थः । किञ्चादित्यादिपुरुषकर्तृत्वमपि न सूत्रात्मनः

१. T and T[1]. जीवन्तश्च.

भाष्यम्

मन्यं वेदितव्यतयोपचिक्षेप; यदि सोऽप्यमुख्यब्रह्मदृष्टिभाक् स्यात्, उपक्रमो बाध्येत; तस्मात्परमेश्वर एवायं भवितुमर्हति । कर्तृत्वं चैतेषां पुरुषाणां न परमेश्वरादन्यस्य स्वातन्त्र्येणावकल्पते । "यस्य वैतत्कर्म" इत्यपि नायं परिस्पन्दलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणो निर्देशः, तयोरन्यतरस्याप्यप्रकृतत्वात्, असंशब्दितत्वाच्च; नापि पुरुषाणामयं निर्देशः, एतेषां पुरुषाणां कर्तेत्येव तेषां निर्दिष्टत्वात्, लिङ्गवचनविगानाच्च; नापि पुरुषविषयस्य करोत्यर्थस्य क्रियाफलस्य वायं निर्देशः, कर्तृशब्देनैव तयोरुपात्तत्वात्; परिशेषात्प्रत्यक्षसंनिहितं जगत्सर्वनाम्नैतच्छब्देन निर्दिश्यते; क्रियत इति च तदेव जगत्कर्म । ननु जगदप्यप्र-

प्रकटार्थविवरणम्

स्वातन्त्र्येण घटते "भीषास्माद्वातः पवते" इति श्रुतेः; नापि जीवस्य देवानां पशुत्वादित्याह—कर्तृत्वं चैतेषामिति ॥ यथोक्तं कर्मशब्दः परिस्पन्दे धर्माधर्मयोर्वा रूढ इति तत्राह — यस्य वैतत्कर्मेति ॥ उभयत्र रूढस्य कर्मशब्दस्य प्रकरणमुपपदं वा विनान्यतरस्मिन् वृत्त्ययोगात्तदभावादनिर्णयप्रसङ्गे परिशेषाद्यौगिकवृत्त्या जगद्वाचकत्वमभ्युपगन्तव्यम्; अतो जगद्वाचित्वात्कर्मशब्दस्य तत्कर्तृ ब्रह्मेह विवक्षितमिति सूत्रार्थः । ननु—नास्ति परिशेषः कर्तव्यपुरुषाणां कर्मशब्देन निर्देशादित्याशङ्क्याह—नापि पुरुषाणामिति ॥ न केवलं पौनरुक्त्यम्; पुरुषाणां बहुत्वान्नपुंसकलिङ्गमेकवचनं च विरुध्यत इत्याह—लिङ्गवचनेति ॥ ननु तथापि नास्ति परिशेषः करणस्य कार्यनिष्पत्तेर्वाभिधानात् इत्याशङ्क्याह—नापि पुरुषविषयस्येति ॥ क्रियमाणपुरुषविषयव्यापाराभावे च न कर्तृत्वमेव परिपूर्णमेवं भवति; अत आर्थिकत्वाच्च स्वशब्देन वाच्यमिति भावः । यस्मान्नास्त्यन्यत्र प्रसङ्गः, तस्मात् सूत्रार्थः सुष्ठु इत्याह — परिशेषादिति ॥ प्रकृतवाचकत्वमेवैतच्छब्दस्येति मत्वाह — नन्विति ॥ जगत्प्रकृतं न भवति स्वशब्देनानुक्तं चेत्येतत्सत्यम्; तथापि सर्वनाम्नः प्रसिद्धमात्रावद्योतकत्वात् प्रकृतवाचकत्वानियमो नास्ति; सति

१. TM. नास्ति.

भाष्यम्

कृतमसंशब्दितं च; सत्यमेतत्; तथाप्यसति विशेषोपादाने साधारणेनार्थेन संनिधानेन संनिहितवस्तुमात्रस्यायं निर्देश इति गम्यते, न विशिष्टस्य कस्यचित्, विशेषसंनिधानाभावात्; पूर्वत्र च जगदेकदेशभूतानां पुरुषाणां विशेषोपादानादविशेषितं जगदेवेहोपादीयत इति गम्यते। एतदुक्तं भवति—य एतेषां पुरुषाणां जगदेकदेशभूतानां कर्ता, किमनेन विशेषेण? यस्य वा कृत्स्नमेव जगदविशेषितं कर्मेति; वाशब्द एकदेशावच्छिन्नकर्तृत्वव्यावृत्त्यर्थः; ये बालाकिना ब्रह्मत्वाभिमताः पुरुषाः कीर्तिताः, तेषामब्रह्मत्वख्यापनाय विशेषोपादानम्। एवं ब्राह्मणपरिव्राजकन्यायेन सामान्यविशेषाभ्यां जगतः कर्ता वेदितव्यतयोपदिश्यते; परमेश्वरश्च सर्वजगतः कर्ता सर्ववेदान्तेष्ववधारितः॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्

## ॥ १-४-१७ ॥

यदुक्तं वाक्यशेषगताज्जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च तयोरेवान्यतरस्येह ग्रहणं न्याय्यं न परमेश्वरस्येति, तत्परिहर्तव्यम्; अत्रोच्यते—परिहृतं चैतत् "नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" इत्यत्र; त्रिविधं ब्रह्मोपासनमेवं सति प्रसज्येत जीवोपासनं मुख्य-

प्रकटार्थविवरणम्

तु संकोचके विशेषे प्रकृताभिधायित्वं कश्चिद्भवति; तदभावे साधारणेनार्थेन वाच्येनैतच्छब्दस्य सदा संबद्धत्वेन स्वरसत एव साधारणार्थनिर्देशो घटत इति परिहारार्थः। इतश्च साधारणनिर्देश एवायं इत्याह—पूर्वत्र चेति॥ ननु यदि साधारण्येन जगद्विवक्षितं तर्हि किं पुरुषाणां विशेषोपादानेनेत्याशङ्क्याह—ये बालाकिनेति॥

जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्॥

एवं तावत्सिद्धान्तमुक्त्वा परोक्तापाकरणायाह—यथो[यदु]क्तमित्या-

भाष्यम्

प्राणोपासनं ब्रह्मोपासनं चेति ; न चैतन्न्याय्यम् ; उपक्रमोपसंहाराभ्यां हि ब्रह्मविषयत्वमस्य वाक्यस्यावगम्यते ; तत्रोपक्रमस्य तावद्ब्रह्मविषयत्वं दर्शितम् ; उपसंहारस्यापि निरतिशयफलश्रवणाद्ब्रह्मविषयत्वं दृश्यते—“सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद” इति । नन्वेवं सति प्रतर्दनवाक्यनिर्णयेनैवेदमपि वाक्यं निर्णीयेत ; न निर्णीयते । “यस्य वैतत्कर्म” इत्यस्य ब्रह्मविषयत्वेन तत्रानिर्धारितत्वात् ; तस्मादत्र जीवमुख्यप्राणशङ्का पुनरुत्पद्यमाना निवर्त्यते ; प्राणशब्दोऽपि ब्रह्मविषयो दृष्टः “प्राणबन्धनं हि सोम्य मनः” इत्यत्र ; जीवलिङ्गमप्युपक्रमोपसंहारयोर्ब्रह्मविषयत्वादभेदाभिप्रायेण योजयितव्यम् ॥

# अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १-४-१८ ॥

अपि च नैवात्र विवदितव्यम्—जीवप्रधानं वेदं वाक्यं स्याद्ब्रह्मप्रधानं वेति ; यतोऽन्यार्थं जीवपरामर्शं ब्रह्मप्रतिपत्त्यर्थमस्मिन्वाक्ये जैमिनिराचार्यो मन्यते ; कस्मात् ? प्रश्नव्याख्यानाभ्याम् । प्रश्नस्तावत्

प्रकटार्थविवरणम्

दिना ॥ पौनरुक्त्यं शङ्कते—नन्वेवं सतीति ॥ कर्मशब्दस्य परिस्पन्दादन्यत्र रूढिबलेन जायमानार्थान्तरपरत्वाशङ्कापाकरणाय पुनरारम्भ इत्याह—न निर्णीयत इति ॥ यथोक्तं प्राणशब्दो मुख्ये प्राणे प्रसिद्ध इति तत्राह—प्राणशब्दोऽपीति ॥ का तर्हि जीवलिङ्गस्य गतिरिति तत्राह—जीवलिङ्गमपीति ॥

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥**

इतश्च ब्रह्मलिङ्गानुरोधेनैव जीवलिङ्गं नेतव्यमित्याह—अपि चेति ॥ भो बालाके एष पुरुषः क्वाशयिष्ट कुत्र शयनं कृतवानित्येतत्किं जानासि । क्व वा एतद-

भाष्यम्

सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तविषयो दृश्यते—"क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागात्" इति; प्रतिवचनमपि "यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति" इत्यादि, "एतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति च सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति; परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायत इति वेदान्तमर्यादा। तस्माद्यत्रास्य जीवस्य निःसंबोधस्वस्थताख्यः स्वापः—उपाधिजनितविशेषविज्ञानरहितं स्वरूपम्, यतस्तद्भ्रंशरूपमागमनम्, सोऽत्र परमात्मा वेदितव्यतया श्रावित इति गम्यते। अपि चैवमेके शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति—"य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागात्" इति प्रश्ने; प्रतिवचनेऽपि "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते" इति; आकाशशब्दश्च परमात्मनि प्रयुक्तः "दहरोऽस्मिन्नन्तराकाशः" इत्यत्र; "सर्व एत आत्मानो व्युच्चरन्ति" इति चोपाधिमतामात्मनामन्यतो व्युच्चरणमामनन्तः परमात्मानमेव कारणत्वे-

प्रकटार्थविवरणम्

क्षुरादिकं स्थितं कुतो वा प्रबोधकाले आगादागतमित्यर्थः। ननु प्रतिवचने "प्राण एवैकधा भवति" इति श्रूयते; अतः प्रश्नप्रतिवचने न ब्रह्मविषये इत्याशङ्क्याह—सुषुप्तिकाले चेति॥ प्रश्नप्रतिवचनयोः ब्रह्मविषयत्वे शाखान्तरसंवादमाह—अपि चैवमिति॥ ननु तत्राप्याकाशे शयनं श्रूयते, न ब्रह्मणीत्याशङ्क्याह—आकाशशब्दश्चेति॥ इतश्च तत्र परमात्मैव विवक्षितो भूताकाशाज्जीवानां निर्गमायोगात्, प्रतिबिम्बभेदभ्रमस्य च बिम्बाधिष्ठानत्वात् इत्याह—सर्व एत इति॥ एवं जीवनिराकरणपरतया सूत्रं व्याख्याय

भाष्यम्

नामनन्तीति गम्यते । प्राणनिराकरणस्यापि सुषुप्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेशोऽभ्युच्चयः ॥

## वाक्यान्वयात् ॥ १-४-१९ ॥

बृहदारण्यके मैत्रेयीब्राह्मणेऽधीयते—"न वा अरे पत्युः कामाय" इत्युपक्रम्य "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्" इति। तत्रैतद्विचिकित्स्यते—किं विज्ञानात्मैवायं द्रष्टव्यश्रोतव्यत्वादिरूपेणोपदिश्यते, आहोस्वित्परमात्मेति । कुतः पुनरेषा विचिकित्सा ? प्रियसंसूचितेनात्मना भोक्त्रोपक्रमाद्विज्ञानात्मोपदेश इति प्रतिभाति ; तथात्मविज्ञानेन सर्वविज्ञानोपदेशात्परमात्मोपदेश इति । किं तावत्प्राप्तम् ? विज्ञानात्मोपदेश इति ; कस्मात् ? उपक्रमसामर्थ्यात् । पतिजायापुत्रवित्तादिकं हि भोग्यभूतं सर्वं जगत्

प्रकटार्थविवरणम्

प्राणनिराकरणेऽप्यतिदिशति—प्राणेति ॥ सुषुप्तावामन्त्रणशब्दाश्रवणेन व्यतिरेकप्रतिपादनं व्याख्यानमत्र द्रष्टव्यम् । ताभ्यां प्रश्नव्याख्यानाभ्यां प्राणशब्दमन्यार्थं न प्राणोपदेशपरं मन्यते जैमिनिरिति योजना ॥

वाक्यान्वयात् ॥

विषयवाक्यमाह—बृहदारण्यक इति ॥ उभयलिङ्गदर्शनात्संशयमाह—तत्रैतद्विचिकित्स्यत इति ॥ पूर्वत्र ब्रह्मोपक्रमसामर्थ्यात् ब्रह्मपरत्वं निर्णीतम् ; इह तु जीवोपक्रमात् जीवपरत्वमित्याह—विज्ञानात्मोपदेश इति ॥ उद्देश्योपादेययोः भेदोऽपि वक्तव्य इति भेदाभेदपरतानिराकरणायाधिकरणा-

१. A omits परता.

भाष्यम्

आत्मार्थतया प्रियं भवतीति प्रियसंसूचितं भोक्तारमात्मानमुपक्रम्यानन्तरमिदमात्मनो दर्शनाद्युपदिश्यमानं कस्यान्यस्यात्मनः स्यात्? मध्येऽपि "इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" इति प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन ब्रुवन्विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयति; तथा "विज्ञातारमरे केन विजानीयात्" इति कर्तृवचनेन शब्देनोपसंहरन्विज्ञानात्मानमेवेहोपदिष्टं दर्शयति; तस्मादात्मविज्ञानेन सर्वविज्ञानवचनं भोक्त्रर्थत्वाद्भोग्यजातस्यौपचारिकं द्रष्टव्यमिति। एवं प्राप्ते ब्रूमः—

परमात्मोपदेश एवायम्; कस्मात्? वाक्यान्वयात्। वाक्यं हीदं पौर्वापर्येणावेक्ष्यमाणं परमात्मानं प्रति अन्वितावयवं लक्ष्यते; कथमिति तदुपपाद्यते—"अमृतत्वस्य तु नाशास्ति वित्तेन" इति याज्ञवल्क्यादुपश्रुत्य "येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद

प्रकटार्थविवरणम्

रम्भः। इतश्च ब्रह्मणो भिन्नाभिन्नपरं वाक्यमित्याह—मध्येऽपीति॥ इदं प्रकृतं महत् ब्रह्म भूतं सत्यमनन्तं नित्यमपारं सर्वगं विज्ञानघन एवोपाधौ प्रतिबिम्बितया जीवरूपोपपन्नमेतेभ्यो भूतेभ्यः समुत्थाय प्रतिबिम्बमिव दर्पणादेः तानि भूतान्युपाधिरूपाणि यदा नश्यन्ति तदा तन्नाशमनु नश्यति विशेषमुपाधिकृतं जहाति प्रेत्य तथाभूतं नाशमनुभूय न संज्ञा विशेषपरिज्ञानं भवति, अन्तःकरणापायेऽप्रमातृत्वादित्यर्थः। किञ्च कर्तृविहिततृजन्तत्वेन विज्ञातृशब्देनोपसंहारादपि जीवस्य विज्ञेयत्वमित्याह—तथा विज्ञातारमिति॥ कथं तर्ह्येकविज्ञानेन सर्वविज्ञानमित्याशङ्क्याह—तस्मादिति॥

प्रतिज्ञाध्याहारेण सूत्रमवतारयति — परमात्मोपदेश एवायमिति॥ अमृतत्वं प्रार्थयन्त्यै मैत्रेय्या उपदिष्टत्वात् एकविज्ञानेन सर्वविज्ञानाभिधानाच्चात्यन्तिकमैक्यमिह विवक्षितमिति भावः। यदुक्तमपौचारिकत्वं

१. A. रूपोपपन्नं

भाष्यम्

तदेव मे ब्रूहि" इत्यमृतत्वमाशासानायै मैत्रेय्यै याज्ञवल्क्य आत्मविज्ञानमिदमुपदिशति ; न चान्यत्र परमात्मविज्ञानादमृतत्वमस्तीति श्रुतिस्मृतिवादा वदन्ति ; तथा चात्मविज्ञानेन सर्वविज्ञानमुच्यमानं नान्यत्र परमकारणविज्ञानान्मुख्यमवकल्पते ; न चैतदौपचारिकमाश्रयितुं शक्यम्, यत्कारणमात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञायानन्तरेण ग्रन्थेन तदेवोपपादयति—"ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद" इत्यादिना ; यो हि ब्रह्मक्षत्रादिकं जगदात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति, तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत्पराकरोतीति भेददृष्टिमपोद्य, "इदं सर्वं यदयमात्मा" इति सर्वस्य वस्तुजातस्यात्माव्यतिरेकमवतारयति ; दुन्दुभ्यादिदृष्टान्तैश्च तमेवाव्यतिरेकं द्रढयति ; "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" इत्यादिना च प्रकृतस्यात्मनो नामरूपकर्मप्रपञ्चकारणतां व्याचक्षाणः परमात्मानमेवैनं गमयति ; तथैकायनप्रक्रिययापि सविषयस्य सेन्द्रियस्य सान्तःकरणस्य प्रपञ्चस्यैकायनमनन्तरमबाह्यं कृत्स्नं प्रज्ञानघनं व्याचक्षाणः परमात्मानमेनं गमयति । तस्मात्परमात्मन एवायं दर्शनाद्युपदेश इति गम्यते ॥

प्रकटार्थविवरणम्

तत्राह — न चैतदौपचारिकमिति ॥ न ह्यौपचारिकमविवक्षितं तात्पर्येण प्रतिपादनीयमिति भावः । ब्रह्मेति ब्राह्मणजातिः । तं भेददर्शिनं श्रेयोमार्गात्परादात् पराकुर्यादित्यर्थः । दुन्दुभिशङ्खवीणादृष्टान्तैश्च सामान्यग्रहणेन विशेषग्रहणं ब्रुवन् वस्तुभेदाभावं दृढं करोतीत्यर्थः । किञ्च सर्वस्रष्टृत्वादपि परमात्मत्वनिश्चय इत्याह—अस्य महत इति ॥ यथा सर्वासामपां समुद्र एकोऽयनमित्यादिना सकलप्रलयाधारत्वप्रतिपादनादपि परमात्मत्वमित्याह — तथैकायनप्रक्रिययापीति ॥

१. T. सामान्येन ब्रुवन्
T[1]. सामान्येन विशेषग्रहणं

२. A. समुद्रमेकायनं
TM. समुद्र एकायनं

भाष्यम्

यत्पुनरुक्तं प्रियसंसूचितोपक्रमाद्विज्ञानात्मन एवायं दर्शनाद्युपदेश इति, अत्र ब्रूमः—

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ १-४-२० ॥

अस्त्यत्र प्रतिज्ञा "आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" "इदं सर्वं यदयमात्मा" इति च। तस्याः प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गम्, यत्प्रियसंसूचितस्यात्मनो द्रष्टव्यत्वादिसंकीर्तनम्। यदि हि विज्ञानात्मा परमात्मनोऽन्यः स्यात्, ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञायत इत्येकविज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं तद्धीयेत। तस्मात्प्रतिज्ञासिद्ध्यर्थं विज्ञानात्मपरमात्मनोरभेदांशेनोपक्रमणमित्याश्मरथ्य आचार्यो मन्यते ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ १-४-२१ ॥

विज्ञानात्मन एव देहेन्द्रियमनोबुद्धिसंघातोपाधिसंपर्कात्कलुषीभूतस्य ज्ञानध्यानादिसाधनानुष्ठानात्संप्रसन्नस्य देहादिसंघातादुत्क्रमिष्यतः परमात्मनैक्योपपत्तेरिदमभेदेनोपक्रमणमित्यौडुलोमिराचार्यो मन्यते। श्रुतिश्चैवं भवति—"एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं

प्रकटार्थविवरणम्

पूर्वपक्षबीजापाकरणाय सूत्रमवतारयति — यत्पुनरुक्तमिति ॥

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥

जीवब्रह्मणोर्भिन्नाभिन्नत्वेऽपि अभेदांशेन जीवरूपेणोपक्रमणं प्रतिज्ञासिद्ध्यर्थमित्यर्थः ॥

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥

संसारदशायां भिन्नस्यैव मोक्षदशायां ब्रह्मणैक्यमङ्गीकृत्य जीवोपक्रमणमिति मतान्तरमाह — उत्क्रमिष्यत इति ॥ किञ्च जीवस्य नामरूपात्मकत्वावगमादपि नामरूपविमुक्ताद् ब्रह्मणो भेद एव संसारदशायामित्याह—

भाष्यम्

ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते " इति । क्वचिच्च जीवाश्रयमपि नामरूपं नदीनिदर्शनेन ज्ञापयति—

" यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥" इति ।

यथा लोके नद्यः स्वाश्रयमेव नामरूपं विहाय समुद्रमुपयन्ति एवं जीवोऽपि स्वाश्रयमेव नामरूपं विहाय परं पुरुषमुपैतीति हि तत्रार्थः प्रतीयते दृष्टान्तदार्ष्टान्तिकयोस्तुल्यतायै ॥

## अवस्थितेरिति काशकृत्स्नः ॥ १-४-२२ ॥

अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते । तथा च ब्राह्मणम्—" अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि " इत्येवंजातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयति ; मन्त्रवर्णश्च—

प्रकटार्थविवरणम्

क्वचिच्च जीवाश्रयमपीति ॥ " यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय " इति नदीनिदर्शनं व्याचष्टे—यथा लोक इति ॥

अवस्थितेरिति काशकृत्स्नः ॥

इदानीं यदर्थमधिकरणमारब्धं तद्भिन्नाभिन्नत्वनिराकरणं काशकृत्स्नस्य मतेन स्फुटीकर्तुमाह—अस्यैव परमात्मन इति ॥ सर्वाणि रूपाणि विचित्य निर्माय तेषां नामानि च कृत्वा धीरः सर्वज्ञः स्वयं तत्रानुप्रविश्य अभिवदन्य आस्ते " तमेवं विद्वानमृत इह भवति " इति मन्त्रोऽपि परमात्मन एवावस्थानं दर्शयतीत्यर्थः । ननु जीवो नाम परमात्मविकार इत्याश्रयणेऽप्येकविज्ञानेन

१. TM and A. यदास्ते य आस्ते  २. T and T[1]. जीवोऽमय

भाष्यम्

"सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते" इत्येवंजातीयकः। न च तेजःप्रभृतीनां सृष्टौ जीवस्य पृथक्सृष्टिः श्रुता, येन परस्मादात्मनोऽन्यस्तद्विकारो जीवः स्यात्। काशकृत्स्नस्याचार्यस्याविकृतः परमेश्वरो जीवः, नान्य इति मतम्; आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतम्, तथापि "प्रतिज्ञासिद्धेः" इति सापेक्षत्वाभिधानात्कार्यकारणभावः कियानप्यभिप्रेत इति गम्यते; औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते। तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते, प्रतिपिपादयिषितार्थानुसारात् "तत्त्वमसि" इत्यादिश्रुतिभ्यः; एवं च सति तज्ज्ञानादमृतत्वमवकल्पते; विकारात्मकत्वे हि जीवस्याभ्युपगम्यमाने विकारस्य प्रकृतिसंबन्धे प्रलयप्रसङ्गान्न तज्ज्ञानादमृतत्वमवकल्पेत। अतश्च स्वाश्रयस्य नामरूपस्यासंभवादुपाध्याश्रयं नामरूपं जीव उपचर्यते।

प्रकटार्थविवरणम्

सर्वविज्ञानं घटते; किमभेदेनेत्याशङ्क्याह— न च तेजःप्रभृतीनामिति॥ मतत्रयं विभज्य कथयति—काशकृत्स्नस्येत्यादिना॥ अन्यस्योपादेयत्वमाह—तत्र काशकृत्स्नीयमिति॥ कारणशून्ययोः द्रव्ययोरुद्देश्योपादेयभावेन सामानाधिकरण्यमेकस्यैव द्रव्यस्योपाधिकल्पितभेदापेक्षं न द्रव्यभेदापेक्षम्, 'सोऽयं देवदत्तः' इतिवत् इति न्यायेन "तत्त्वमसि" इति शास्त्रात् प्रतिपिपादयिषितं यज्जीवस्य ब्रह्मैक्यं तदनुसारित्वादित्यर्थः। किञ्च ज्ञानादमृतत्वश्रुत्यन्यथानुपपत्त्याप्ययं पक्षो युक्त इत्याह—एवं च सतीति॥ यच्चोक्तं जीवस्य नामरूपाश्रयत्वं तत्राह—अतश्चेति॥ यतः परमात्मैव प्रतिबिम्बितो जीवः अतश्चेति योजना। नामरूपाविलयमात्रे निदर्शनं

१. TM omits द्रव्ययोः

२. T, T[1] and P add द्रव्यस्योपाधिकारणमेकस्यैव

३. A. परिकल्पित

भाष्यम्

अत एवोत्पत्तिरपि जीवस्य क्वचिदग्निविस्फुलिङ्गोदाहरणेन श्राव्यमाणोपाध्याश्रयैव वेदितव्या ॥

यदप्युक्तं प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन दर्शयन्विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयतीति, तत्रापीयमेव तिसृत्री योजयितव्या ।

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥

इदमत्र प्रतिज्ञातम्—"आत्मनि विदिते सर्वमिदं विदितं भवति" "इदं सर्वं यदयमात्मा" इति च; उपपादितं च सर्वस्य नामरूपकर्मप्रपञ्चस्यैकप्रसवत्वादेकप्रलयत्वाच्च दुन्दुभ्यादिदृष्टान्तैश्च कार्यकारणयोरव्यतिरेकप्रतिपादनात्; तस्या एव प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गम्, यन्महतो भूतस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन कथितमित्याश्मरथ्य आचार्यो मन्यते । अभेदे हि सत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातमवकल्पत इति ॥

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥

उत्क्रमिष्यतो विज्ञानात्मनो ज्ञानध्यानादिसामर्थ्यात्संप्रसन्नस्य परेणात्मनैक्यसंभवादिदमभेदाभिधानमित्यौडुलोमिराचार्यो मन्यते ॥

अवस्थितेरिति काशकृत्स्नः ॥

अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते । ननूच्छेदाभिधान-

प्रकटार्थविवरणम्

सर्वथा साम्ये मानाभावात् । उत्पत्तिश्रवणस्याप्यौपाधिकत्वमेव गतिरित्याह—अत एवोत्पत्तिरपीति ॥

पूर्वपक्षबीजान्तरनिराकरणेऽपि सूत्रत्रययोजनामतिदिशति—यदप्युक्तमित्यादिना ॥

१. A. अत एवेति ॥

भाष्यम्

मेतत् "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" इति ; कथमेतदभेदाभिधानम् ? नैष दोषः ; विशेषविज्ञानविनाशाभिप्रायमेतद्विनाशाभिधानम्, नात्मोच्छेदाभिप्रायम् ; "अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्ति" इति पर्यनुयुज्य, स्वयमेव श्रुत्यार्थान्तरस्य दर्शितत्वात्—"न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति" इति । एतदुक्तं भवति—कूटस्थनित्य एवायं विज्ञानघन आत्मा ; नास्योच्छेदप्रसङ्गोऽस्ति ; मात्राभिस्त्वस्य भूतेन्द्रियलक्षणाभिरविद्याकृताभिरसंसर्गो विद्यया भवति ; संसर्गाभावे च तत्कृतस्य विशेषविज्ञानस्याभावात् "न प्रेत्य संज्ञास्ति" इत्युक्तमिति । यदप्युक्तम्—"विज्ञातारमरे केन विजानीयात्" इति कर्तृवचनेन शब्देनोपसंहाराद्विज्ञानात्मन एवेदं द्रष्टव्यमिति, तदपि काशकृत्स्नीयेनैव दर्शनेन परिहरणीयम् । अपि च "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इत्यारभ्याविद्याविषये तस्यैव दर्शनादिलक्षणं विशेषविज्ञानं प्रपञ्च्य "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिना विद्याविषये तस्यैव दर्शनादिलक्षणस्य विशेषविज्ञानस्याभावमभिदधाति ; पुनश्च विषयाभावेऽपि आत्मानं विजानीयात् इत्याशङ्क्य, "विज्ञातारमरे केन विजानीयात्" इत्याह ; ततश्च विशेषविज्ञानाभावोपपादनपरत्वाद्वाक्यस्य विज्ञानधातुरेव केवलः

प्रकटार्थविवरणम्

तृतीयं च पूर्वपक्षबीजमन्त्येन मतेनापाकरणीयमित्याह—तदपि काशकृत्स्नीयेनैवेति ॥ आद्यमतद्वयस्य तत्त्वभेदावलम्बित्वात् तत्परिग्रहेण परिहारो न संभवति । काशकृत्स्नस्य तु तत्त्वभेदाभावात् स्वरूपाभेदाभिप्रायेण कर्तृवाची शब्दः परमात्मनि प्रयुक्त इति भावः । किञ्चाविद्यातज्जान्तःकरणप्रतिबिम्बितत्वेन यत्प्रमातृत्वमभूत् तदभिप्रायेणैक्यप्रतिपत्तावपि कर्तृशब्दो न विरुध्यत इत्याह—अपि च यत्र हीति ॥ नन्वाश्मरथ्यादिमते तात्त्विकेऽपि भेदे भूतपूर्वगत्या मोक्षकर्तृत्वनिर्देशः किं नाश्री-

### भाष्यम्

सम्भूतपूर्वगत्या कर्तृवचनेन तृचा निर्दिष्ट इति गम्यते । दर्शितं तु पुरस्तात्काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वम् । अतश्च विज्ञानात्मपरमात्मनोरविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तो भेदः, न पारमार्थिक इत्येषोऽर्थः सर्वैर्वेदान्तवादिभिरभ्युपगन्तव्यः । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "आत्मैवेदं सर्वम्" "ब्रह्मैवेदं सर्वम्" "इदं सर्वं यदयमात्मा" "नान्योऽतोऽस्ति द्रष्टा" "नान्यदतोऽस्ति द्रष्टृ" इत्येवंरूपाभ्यः श्रुतिभ्यः; स्मृतिभ्यश्च "वासुदेवः सर्वमिति" "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्" इत्येवंरूपाभ्यः; भेददर्शनापवादाच्च "अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्येवंजातीयकात्; "स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म" इति चात्मनि सर्वविक्रियाप्रतिषेधात्; अन्यथा च मुमुक्षूणां निरपवादविज्ञानानुपपत्तेः,

### प्रकटार्थविवरणम्

क्रियते, कुतः काशकृत्स्नमते पक्षपात इत्याशङ्क्याह—दर्शितं तु पुरस्तादिति ॥ पुनः श्रुतिमत्त्वं स्मृतिमत्त्वं चाह—सदे[सदेव सोम्येदमग्र आसीदे]कमेवाद्वितीयमिति ॥ यच्च केशवेन वल्गितम् "प्रलये श्रुतिरद्वैतमाह न सर्वदा" इति, तदसत्; प्रसिद्धप्रलयानुवादेन विधित्सितस्याद्वैतस्य सृष्टि विधायापि "ऐतदात्म्यमिदं सर्वं तत्सत्यम्" इत्युपसंहारे सत्यताभिधानात् । यच्च भेददर्शनमेव निन्द्यते, न भेद इत्युक्तम्, तदसत्; सत्ये भेदे तद्दर्शनस्यापि निन्दानुपपत्तेः । न हि भेददर्शनमेव संसारः, मूर्छादेरपि संसारत्वादिवशब्दायोगाच्चेति । जीवस्य संसारविक्रियावत्त्वान्न ब्रह्ममात्रतेत्याशङ्क्याह—स वा एष इति ॥ किञ्च सत्ये भेदे तत्प्रमितिविरोधात् ब्रह्मैवाहमित्यबाधितविज्ञानं न स्यादित्याह—अन्यथा चेति ॥ अभेदाच्चेत् ब्रह्मोऽहम्, भेदादब्रह्मोऽहमिति किं न

१. TM. भेदादर्शनं

२. A. अहंब्रह्म

३. T, T¹, P and TM omit अहमिति

भाष्यम्

सुनिश्चितार्थत्वानुपपत्तेश्च; निरपवादं हि विज्ञानं सर्वाकाङ्क्षानिवर्तकमात्मविषयमिष्यते—"वेदान्तविज्ञानसुनिश्चितार्थाः" इति च श्रुतेः; "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति च; स्थितप्रज्ञलक्षणस्मृतेश्च। स्थिते च क्षेत्रज्ञपरमात्मैकत्वविषयसम्यग्दर्शने क्षेत्रज्ञः परमात्मेति नाममात्रभेदात् क्षेत्रज्ञोऽयं परमात्मनो भिन्नः परमात्मायं क्षेत्रज्ञाद्भिन्न इत्येवंजातीयक आत्मभेदविषयो निर्बन्धो निरर्थकः—एको ह्ययमात्मा नाममात्रभेदेन बहुधाभिधीयत इति। न हि "सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायाम्" इति कांचिदेवैकां गुहामधिकृत्यैतदुक्तम्। न च ब्रह्मणोऽन्यो गुहायां निहितोऽस्ति, "तत्सृष्ट्वा। तदेवानुप्राविशत्।" इति स्रष्टुरेव प्रवेशश्रवणात्। ये तु निर्बन्धं कुर्वन्ति, ते वेदान्तार्थं बाधमानाः श्रेयोद्वारं सम्यग्दर्शनमेव बाधन्ते; कृतकमनित्यं च मोक्षं कल्पयन्ति; न्यायेन च न संगच्छन्त इति॥

प्रकटार्थविवरणम्

स्याद्विति संशयः स्यादित्याह—[1]सुनिश्चितेति॥ ततः किमित्यत आह—निरपवादं हीति॥ स्थिता प्रतिष्ठिता सुनिश्चिता ब्रह्मात्मैक्यविषया प्रज्ञा यस्य सः स्थितप्रज्ञः। ततो ब्रह्मैवाहमिति सुनिश्चितमेकत्वज्ञानं वाच्यमित्यर्थः। ननु अपुनरुक्तशब्दद्वयविषयत्वात् स्तम्भकुम्भवत् स्वरूपभेद इत्याशङ्क्याह—स्थिते च क्षेत्रज्ञेति॥ मिथ्याभेदेनापि नामभेदोपपत्तौ स्वरूपभेदे न प्रमाणमिति भावः। नन्वभेदे जीवे भासमाने ब्रह्मापि भासेत, तदा च गुहाहितत्ववचनं विरुध्येतेत्याशङ्क्याह—न हि सत्यं ज्ञानमिति॥ [2]बिम्बप्रतिबिम्बन्यायेनापि भासमानाभासमानत्वे न विरुध्येते इति भावः। इतश्च गुहाश्रुतिः न भेदं साधयतीत्याह—न च ब्रह्मणोऽन्य इति॥ विपक्षे दण्डमाह—ये तु निर्बन्धमिति॥ अथ कृतकोऽपि नित्य एव, तत्राह—न्यायेन चेति॥ भावरूपत्वे सति कृत-

१. A. निश्चितेति          २. T omits बिम्बप्र...भासमानत्वेन

भाष्यम्

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १-४-२३ ॥

यथाभ्युदयहेतुत्वाद्धर्मो जिज्ञास्यः; एवं निःश्रेयसहेतुत्वाद्ब्रह्म जिज्ञास्यमित्युक्तम्; ब्रह्म च "जन्माद्यस्य यतः" इति लक्षितम्; तच्च लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत्प्रकृतित्वे कुलालसुवर्णकारादिवन्निमित्तत्वे च समानमित्यतो भवति विमर्शः—किमात्मकं पुनर्ब्रह्मणः कारणत्वं स्यादिति । तत्र निमित्तकारणमेव तावत्केवलं स्यादिति प्रतिभाति; कस्मात्? ईक्षापूर्वककर्तृत्वश्रवणात् । ईक्षापूर्वकं हि ब्रह्मणः कर्तृत्वमवगम्यते—"स ईक्षांचक्रे" "स प्राणमसृजत" इत्यादिश्रुतिभ्यः; ईक्षापूर्वकं च कर्तृत्वं निमित्तकारणेष्वेव कुलाला-

प्रकटार्थविवरणम्

कत्वस्यानित्यत्वेन व्याप्तत्वादित्यर्थः । किञ्च यच्छास्त्रीयं भेदाभेदविषयं ज्ञानं तेन स भेदो निवर्त्यते चेत्, तर्हि ज्ञानस्य स्वविषयनिरासिताप्रसङ्गः; कर्मणा तन्निवृत्तौ निवृत्त्यभावे वा "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतिविरोधः । अभ्यासजन्यज्ञानहेयत्वे चाज्ञानमात्रत्वप्रसङ्गादज्ञानम्, तत्र भेदादेव च श्रवणादिविधानोपपत्तेः; भास्करव्याहृतांशत्वस्य च स्वावसर एव निराकरिष्यमाणत्वात्; तस्मादुपाधिपरिकल्पितभेदपरामर्शेन स्वरूपपर्यवसायि वेदवाक्यमिति स्थितम् ॥

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥

एवं तावद्ब्रह्मण्येव गतिसामान्यं प्रधानस्याशब्दत्वं च प्रपञ्च्य इदानीं यज्जन्मादिसूत्रे जगन्निमित्तोपादानत्वं ब्रह्मणो लक्षणमसूसुचत् तत्प्रपञ्चयितुं इदमधिकरणमारभ्यत इति व्यवहितसङ्गतिमाह — यथाभ्युदयेति ॥ पूर्वपक्षमाह—तत्र निमित्तकारणमेवेति ॥ पूर्वत्र विरुद्धयोरपि जीवब्रह्मणोरैक्यं प्रमाणावष्टम्भेनाभाणि । प्रकृतित्वनिमित्तत्वयोः पुनर्विरुद्धयोरैक्ये नास्ति

१. TM. प्रज्ञात्   २. A. निमित्तयोः

भाष्यम्

दिषु दृष्टम्; अनेककारकपूर्विका च क्रियाफलसिद्धिर्लोके दृष्टा; स च न्याय आदिकर्तर्यपि युक्तः संक्रमयितुम् । ईश्वरप्रसिद्धेश्च—ईश्वराणां हि राजवैवस्वतादीनां निमित्तकारणत्वमेव केवलं प्रतीयते; तद्वत्परमेश्वरस्यापि निमित्तकारणत्वमेव युक्तं प्रतिपत्तुम् । कार्यं चेदं जगत्सावयवमचेतनमशुद्धं च दृश्यते, कारणेनापि तस्य तादृशेनैव भवितव्यम्, कार्यकारणयोः सारूप्यदर्शनात्; ब्रह्म चानैवं लक्षणमवगम्यते—"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादिश्रुतिभ्यः; पारिशेष्याद्ब्रह्मणोऽन्यदुपादानकारणमशुद्ध्यादिगुणकं स्मृतिप्रसिद्धमभ्युपगन्तव्यम्, ब्रह्मकारणत्वश्रुतेर्निमित्तत्वमात्रे पर्यवसानादिति । एवं प्राप्ते ब्रूमः—

प्रकृतिश्चोपादानकारणं च ब्रह्माभ्युपगन्तव्यम्, निमित्तकारणं च; न केवलं निमित्तकारणमेव; कस्मात्? प्रतिज्ञादृष्टान्तानुपरोधात् । एवं प्रतिज्ञादृष्टान्तौ श्रौतौ नोपरुध्येते । प्रतिज्ञा तावत्—"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्"

प्रकटार्थविवरणम्

मानम्, वैपरीत्ये चानुमानमस्ति—ब्रह्म निमित्तम्, ईक्षापूर्वककर्तृत्वात् कुलालवदिति । अतो न ब्रह्मलक्षणं संभवतीतीति भावः । किञ्च जगत् नाभिन्ननिमित्तोपादानं कार्यत्वात् कुम्भवदित्याह — अनेककारकपूर्विका चेति ॥ किञ्च निमित्तमेव ब्रह्मेश्वरत्वात् राजवदित्याह—ईश्वरप्रसिद्धेश्चेति ॥ किञ्च जगद्विलक्षणत्वादपि न तदुपादानं ब्रह्मेत्याह — कार्यं चेदमिति ॥ निष्कलं [निष्कलं निरवयम्]; निष्क्रियम् अपरिणामि; शान्तं विक्षेपरहितम्; निरवद्यम् अविद्यारागादिदोषरहितम्; निरञ्जनम् असङ्गमित्यर्थः । यदा चोपादानत्वं ब्रह्मणो नोपपद्यते तदा हठात् प्रधानमेवोपादानं भविष्यतीत्याह—पारिशेष्यादिति ॥

सिद्धान्तसूत्रं योजयति—प्रकृतिश्चेति ॥ निमित्तकारणत्वेऽपि प्रतिज्ञा

१. A. प्रमाणं वैपरीत्ये चास्त्यनुमानम् २. TM and A. राजादिवत्

भाष्यम्

इति; तत्र चैकेन विज्ञातेन सर्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतीयते; तच्चोपादानकारणविज्ञाने सर्वविज्ञानं संभवति, उपादानकारणाव्यतिरेकात्कार्यस्य; निमित्तकारणाव्यतिरेकस्तु कार्यस्य नास्ति, लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात् । दृष्टान्तोऽपि—"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्युपादानकारणगोचर एवाम्नायते; तथा "एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्" "एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्" इति च । तथान्यत्रापि "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति प्रतिज्ञा; "यथा पृथिव्यामोषधयः संभवन्ति" इति दृष्टान्तः । तथा "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" इति प्रतिज्ञा; "स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः" इति दृष्टान्तः । एवं यथासंभवं प्रतिवेदान्तं प्रतिज्ञादृष्टान्तौ प्रकृतित्वसाधनौ प्रत्येतव्यौ । यत इतीयमपि पञ्चमी "यतो वा इमानि भूतानि जायन्ते" इत्यत्र

प्रकटार्थविवरणम्

किं न स्यादित्याशङ्क्याह—निमित्तकारणाव्यतिरेकास्त्विति ॥ तक्षा वर्धकिः । तस्मादुपादानस्य एव प्रतिज्ञाया अबाधः स्यात्; निमित्तत्वे तु सा बाधिता स्यादित्यर्थः । इदानीं बाधं दर्शयति—दृष्टान्तोऽपीत्यादिना ॥ घटः प्रकाशते इत्यनुगतप्रकाशातिरेकेण घटादेरसिद्धेः तत्रैव कल्पितत्वादनुगतः प्रकाशोऽधिष्ठानतया प्रकृतिरित्यत्र दृष्टान्तो यथा भवति तथोच्यते । बाह्यान् दुन्दुभिशब्दसामान्यबहिर्भूतान् ग्रहीतुं न शक्नोतीत्यनुगतमधिष्ठानं प्रकृतिरित्यर्थः । एवं प्रतिज्ञादृष्टान्तानुपरोधात् लिङ्गादुपादानत्वं प्रसाध्येदानीं पञ्चमीश्रुत्या साधयति — यत इतीयमपीति ॥ जनिकर्तुर्जायमानस्य कार्यस्य प्रकृतिरुपादानं अपादानसंज्ञं भवति; अपादाने पञ्चमी विभक्तिः भवतीत्यर्थः । अस्त्वेवमुपादानत्वम्, निमित्तत्वं तस्यैव

१. A. इयमपीति     २. A. उपादानं

भाष्यम्

"जनिकर्तुः प्रकृतिः" इति विशेषस्मरणात्प्रकृतिलक्षण एवापादाने द्रष्टव्या । निमित्तत्वं त्वधिष्ठात्रन्तराभावादधिगन्तव्यम्; यथा हि लोके मृत्सुवर्णादिकमुपादानकारणं कुलालसुवर्णकारादीनधिष्ठातॄनपेक्ष्य प्रवर्तते नैवं ब्रह्मण उपादानकारणस्य सतोऽन्योऽधिष्ठातापेक्ष्योऽस्ति, प्रागुत्पत्तेः "एकमेवाद्वितीयम्" इत्यवधारणात्; अधिष्ठात्रन्तराभावोऽपि प्रतिज्ञादृष्टान्तानुपरोधादेवोदितो वेदितव्यः—अधिष्ठातरि ह्युपादानादन्यस्मिन्नभ्युपगम्यमाने पुनरप्येकविज्ञानेन सर्वविज्ञानस्यासंभवात्प्रतिज्ञादृष्टान्तोपरोध एव स्यात् । तस्मादधिष्ठात्रन्तराभावादात्मनः कर्तृत्वमुपादानान्तराभावाच्च प्रकृतित्वम् ॥

कुतश्चात्मनः कर्तृत्वप्रकृतित्वे ?

## अभिध्योपदेशाच्च ॥ १-४-२४ ॥

अभिध्योपदेशश्चात्मनः कर्तृत्वप्रकृतित्वे गमयति "सोऽकामयत । बहु स्यां प्रजायेय" इति, "तदैक्षत बहु स्यां प्रजायेय" इति च । तत्राभिध्यानपूर्विकायाः स्वातन्त्र्यप्रवृत्तेः कर्तेति गम्यते । बहु स्यामिति प्रत्यगात्मविषयत्वाद्बहुभवनाभिध्यानस्य प्रकृतिरित्यपि गम्यते ॥

प्रकटार्थविवरणम्

विरुद्धं कथमुच्यत इत्याशङ्क्याह—निमित्तत्वं त्विति ॥ सूत्रमप्यधिष्ठात्रन्तराभावे योजयति—अधिष्ठात्रन्तराभावोऽपीति ॥

निमित्तत्वमुपादानत्वं चैकस्याविरुद्धमिति सूत्रचतुष्टयेन साधयति—कुतश्चेत्यादिना ॥

अभिध्योपदेशाच्च ॥

अभिध्या सूज्यमानाविषयः सङ्कल्पः ॥

भाष्यम्

## साक्षाच्चोभयाम्नानात् ॥ १-४-२५ ॥

प्रकृतित्वस्यायमभ्युच्चयः । इतश्च प्रकृतिर्ब्रह्म, यत्कारणं साक्षाद्ब्रह्मैव कारणमुपादायोभौ प्रभवप्रलयावाम्नायेते—"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति" इति । यद्धि यस्मात्प्रभवति, यस्मिंश्च प्रलीयते तत्तस्योपादानं प्रसिद्धम्, यथा व्रीहियवादीनां पृथिवी। "साक्षात्" इति च—उपादानान्तरानुपादानं दर्शयति "आकाशादेव" इति । प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्टः ॥

## आत्मकृतेः परिणामात् ॥ १-४-२६ ॥

इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्मप्रक्रियायाम् "तदात्मानं स्वयमकुरुत" इत्यात्मनः कर्मत्वं कर्तृत्वं च दर्शयति—आत्मानमिति कर्म-

प्रकटार्थविवरणम्

### साक्षाच्चोभयाम्नानात् ॥

आकाशादेवेति ॥ एवकारसूचितमुपादानान्तरानुपादानम् "साक्षात्" इति पदेन सूत्रकारो दर्शयतीति योजना । ननु उपादानान्तरव्यावृत्तिरेवकारार्थो न भवति, किं तु निमित्तकारणस्याकाशस्योपादानत्वव्यावृत्तिरित्याशङ्क्याह—प्रत्यस्तमयश्च नोपादानादन्यत्रेति ॥ निमित्ते कार्यस्य प्रत्यस्तमयादर्शनादाकाशस्य निमित्तत्वमेवात्र विवक्षितं न भवतीत्यर्थः ॥

### आत्मकृतेः परिणामात् ॥

परिणामशब्दो मिथ्यापरिणामविवर्ताभिप्रायः । ननु सर्वोऽपि परिणामस्तत्र मिथ्यैव, किं विशेषणेन? सत्यम्, तथाप्यस्ति विशेषः सोपाधिकत्वनिरुपाधिकत्वकृतो लोके । तथा हि निरुपाधिको दुग्धस्यान्यथाभावः सत्यः परि-

१. A. हस्तस्य

भाष्यम्

त्वम्, स्वयमकुरुतेति कर्तृत्वम्; कथं पुनः पूर्वसिद्धस्य सतः कर्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं शक्यं संपादयितुम्? परिणामादिति ब्रूमः—पूर्वसिद्धोऽपि हि सन्नात्मा विशेषेण विकारात्मना परिणमयामासात्मानमिति। विकारात्मना च परिणामो मृदाद्यासु प्रकृतिषूपलब्धः; स्वयमिति च विशेषणान्निमित्तान्तरानपेक्षत्वमपि प्रतीयते॥

"परिणामात्" इति वा पृथक्सूत्रम्। तस्यैषोऽर्थः—इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येनाम्नायते "सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च।" इत्यादिनेति॥

प्रकटार्थविवरणम्

णामो मुखस्य चादर्शपात्रे प्रतिबिम्बितस्य तद्गताल्पतादिभाक्त्वमन्यथाभावो मिथ्यापरिणामः। तद्वत् ब्रह्मणोऽपि मायायां प्रतिबिम्बितस्य तद्विकारिभावित्वं मिथ्यापरिणामः। कार्यकरणसङ्घातोपाधिकस्य च यथा जीवस्य स्वोपाधिकविकारैः जगदाश्रयत्वमेव प्रकृतित्वम्। श्रुतिरपीममेवार्थमाह—"इन्द्रो मायाभिः पुरुरूपः" इति। स्मृतिरपि—

"मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया॥" इति।

न चैवं प्रकृतित्वं ब्रह्मणो गौणम्; जीवस्य धर्माश्रयत्ववन्मुख्यत्वात्, अन्यस्य मुख्यत्वस्यासंभवाच्च। न च सृष्टिश्रुतिप्रामाण्यात्सत्यमेव परिणामित्वम्; तत्रापि सत्यशब्दाश्रवणात्, प्रमाणस्य स्वप्रमेयमात्रसहिष्णुत्वात्, सत्यमिथ्यात्वयोरौदासीन्यात्, स्वप्नसृष्टिवाक्यवच्च प्रामाण्योपपत्तेः। देवदत्तो व्याघ्रोऽभवदितिवत् "सच्च त्यच्चाभवत्" इति श्रुतिः। "माया ह्येषा मया सृष्टा" इतिवत् "तत्तेजोऽसृजत" इति श्रुतिः। किञ्च "निष्कलं निष्क्रियम्" "एतदप्रमयं ध्रुवम्"

१. A omits परिणामो

प्रकटार्थविवरणम्

"नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः" इत्यादिश्रुतिस्मृतिविरोधे मिथ्यासृष्टिविषयत्वमेव न्याय्यम् ॥

यच्चात्र केशवेन प्रलेपे "विरोध एव नास्ति विकारोत्पत्तेः पूर्वं कारणस्याविकारित्वात्, तदभिप्रायाः श्रुतयः" इति, तदसत्; अविशेषप्रवृत्तायाः श्रुतेः पीडाप्रसङ्गात्। न च सृष्टिरित्यनु[श्रुत्यनु]सारेण पीडैव न्याय्येति वाच्यम्। शुक्तेः सतोऽरूप्यत्वेऽपि मिथ्यारूप्यतादात्म्यवत् निर्विकारस्यापि सदा मायोपाधिकविकारविषयत्वात्सृष्टिश्रुतेः। यच्चापरं कर्णकठोरं रुरुदे "विरोधेऽप्यल्पत्वनिष्फलत्वसामान्यविषयत्वैर्यथासंभवं निष्क्रियत्वादिश्रुतीनामेव भङ्गः; स्मृतयस्तु कपिलस्मृतिवत् तद्विरोधे नादर्तव्याः" इति, तत्र न तावदल्पत्वं भङ्गकारणम्, कर्मकाण्डेऽपि विधेरर्थवादादिभ्योऽल्पत्वेन भङ्गप्रसङ्गात्; नापि निष्फलत्वम् "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति।" इति निर्विशेषब्रह्मनिश्चयवत एवाभयप्राप्तिश्रवणात्; "उदरमन्तरं कुरुते। अथ तस्य भयं भवति।" इत्यल्पमपि भेदं कुर्वतो भयप्राप्त्यभिधानात्; क्वचिद्विदुषोऽपि ऐश्वर्यश्रवणस्य सगुणोपासनफलस्य स्तुत्यर्थतया संकीर्तनात्; परमनिर्वाणं निर्विशेषब्रह्मात्मैकत्वज्ञानस्यैव फलमिति फलवत्तयाविकार्यद्वितीयब्रह्मप्रतिपत्तेः प्राधान्याच्च तद्विरुद्धविकारपरत्वं सृष्टिश्रुतीनामाश्रयणीयम्। किञ्च "प्रमाणानुग्राहकस्तर्कः" इति न्यायविदो वावदन्ति[2]। तदनुग्राहकत्वं च बलवत्त्वापादानमेव; अतो विकारित्वे सावयवत्वानित्यत्वादिप्रसङ्गलक्षणतर्कानुगृहीताविकारित्वश्रुतेरेव बाधकत्वम् ॥

यच्च भास्करेणाभाणि "शक्तिविक्षेपकत्वं परिणामित्वम्" इति, तत्र सा शक्तिरसत्या सत्या वा? आद्ये मायासंख्यम्; चरमे निरूपणासहिष्णुत्वं वाच्यम्, निरूपणं न सहते सत्या च-इति व्याघातात्। निरूप्यमाणे च नात्यन्तभेदे[भेदेऽभेदे]वा शक्तितद्वद्भावः; भिन्नाभिन्नत्वं च विरोधादेव नाङ्गं धारयति। चन्द्रभेदस्य तदेकत्वज्ञानेन सन्देहात् भेदज्ञानेन च तदभेदस्य बाधदर्शनात् विरोधः स्थित एव। किञ्चैकस्मिन्नेव रूपे चन्द्रेदाभेदबुद्धी पर्यायतापातः;

१. A omits श्रुतेः   २. A. वदन्ति

प्रकटार्थविवरणम्

रूपभेदे चेदनवस्था। शक्यमपि तस्याः सदसद्वा न निरूपणं सहते। "परास्य शक्तिः" इति चानिर्वाच्यप्रपञ्चा मायैवेत्यवोचत्। यच्चावाचि "सूत्रकारादिभिः परिणामवादोऽङ्गीकृतः; इदानींतनास्तु विगीतच्छिन्नमूलमहायानिकबौद्ध-गन्धिनं मायावादं वर्णयन्तो लोकं व्यामोहयन्ति," इति, तत्तस्य प्रद्वेषप्रकर्ष-प्रकटनपटीयस्त्वमात्रम्। तथा हि—अनादिस्तावद्वेदो मायामविक्रियतां च ब्रह्मणो बहुशः श्रावयामास। तदर्थं च भगवान् पराशरो यथाश्रुत्युपदिदेश—

"अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम्॥

सोऽहं स त्वं जगच्चेदं सदेवासुरमानुषम्।
अविद्यामोहितात्मानः पुरुषा भिन्नदृष्टयः॥" इति।"

तत्सूनुरपि तदेव प्रकटीचकार—

"अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।"
"विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान्॥"

"दैवी ह्येषा गुणमयी मम माया दुरत्यया॥"

इत्यादि बहु यदुकुलतिलकवचनच्छलेन। तत्सूनुश्च शुकदेवः प्रथमत एव भागवते "यत्र त्रिसर्गो मृषा" इत्या[इत्युप]क्षिप्य बहुशो मायावादमुवाच—

"यो दुर्विमर्शपथया निजमाययेदं सृष्ट्वा गुणान् विभजते तदनु प्रविष्टः।
तस्मै नमो दुरवबोधविहारतन्त्रसंहारचक्रहतये परमेश्वराय॥"

तच्छिष्यश्च गौडपादाचार्यो यथोपदिष्टमेव वर्णयांबभूव। तदेवं वेदाचार्य-परम्परागतं मायावादं व्याचक्षाणं निन्दन् कथं ब्रह्महा न भवेत्। तस्मात्सूक्तं परिणामशब्दो मिथ्यापरिणामविषय इति। वक्ष्यति च "न स्थानतोऽपि परस्योभयलिङ्गम्" इत्यत्र निर्विशेषतां स्वयं सूत्रकारः॥

अथवाभ्युपगतस्तावत्सांख्यैः परिणामवादः। तान्प्रति तदभ्युपगमे-नैवाभिन्ननिमित्तोपादानत्वं साधयता सेति श्लिष्यते। निरुक्तं निर्वचनार्हमिदमे-वेति। निर्वचनानर्हमनिरुक्तं कपोतरूपादि॥

१. A. वस्थां　　२. A omits तत्...स्त्यस्तीति

भाष्यम्

# योनिश्च हि गीयते ॥ १-४-२७ ॥

इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्म योनिरित्यपि पठ्यते वेदान्तेषु "कर्तारमीशं पुरुषं ब्रह्म योनिम्" इति, "यद्भूतयोनिं परिपश्यन्ति धीराः" इति च । योनिशब्दश्च प्रकृतिवचनः समधिगतो लोके "पृथिवी योनिरोषधिवनस्पतीनाम्" इति । स्त्रीयोनेरप्यस्त्येवावयवद्वारेण गर्भं प्रत्युपादानकारणत्वम् । क्वचित्स्थानवचनोऽपि योनिशब्दो दृष्टः—"योनिष्ट इन्द्र निषदे अकारि" इति । वाक्यशेषात्त्वत्र प्रकृतिवचनता परिगृह्यते "यथोर्णनाभिः सृजते गृह्णते च" इत्येवंजातीयकात् । तदेवं प्रकृतित्वं ब्रह्मणः प्रसिद्धम् । यत्पुनरिदमुक्तम्, ईक्षापूर्वकं कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु लोके दृष्टम्, नोपादानेष्वित्यादि, तत्प्रत्युच्यते—न लोकवदिह भवितव्यम्; न ह्ययमनुमानगम्योऽर्थः; शब्दगम्यत्वात्त्वस्यार्थस्य यथाशब्दमिह भवितव्यम्;

प्रकटार्थविवरणम्

## योनिश्च हि गीयते ॥

ननु अनुपादेय[पादान]त्वेऽपि स्त्रीयोनौ योनिशब्दः प्रसिद्धः इत्याशङ्क्याह — स्त्रीयोनेरपीति ॥ शोणितावयवद्वारेण । योनिशब्दस्यार्थान्तरमप्यस्ति, तदिह न ग्राह्यमित्याह—क्वचिदित्यादिना ॥ योनिः स्थानम्; ते तव; भो इन्द्र; निषदे स्थित्यै; मयाकारि कृतमित्यर्थः । एवं तावच्छ्रुतिलिङ्गानुसारेण ब्रह्मणो निमित्तोपादनत्वं प्रसाध्य पूर्वपक्षोक्तानुमानदूषणायाह—यत्पुनरित्यादिना ॥ किं शब्दगम्यमीश्वरमनङ्गीकृत्येदमनुमानं किं वा अङ्गीकृत्य? आद्ये प्रसिद्धविशेष्यत्वादाश्रयासिद्धत्वाच्च नानुमानगम्योऽयमर्थः । सिध्यतीत्यर्थः । द्वितीये धर्मिग्राहकागमविरोध इत्यभिप्रेत्याह—शब्दगम्यत्वात्त्विति ॥ न च कार्यमनेककारकसाध्यमिति नियमः, कारकव्यापार एव व्यभिचारात् । यथोक्तं

१. A. पूर्वपक्षिणोक्तं

२. T[1]. गम्या त्विति

३. A. कारकव्यभिचारात्.

### भाष्यम्

शब्दश्चेक्षितुरीश्वरस्य प्रकृतित्वं प्रतिपादयतीत्यवोचाम । पुनश्चैतत्सर्वं विस्तरेण प्रतिवक्ष्यामः ॥

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ १-४-२८ ॥

"ईक्षतेर्नाशब्दम्" इत्यारभ्य प्रधानकारणवादः सूत्रैरेव पुनः पुनराशङ्क्य निराकृतः—तस्य हि पक्षस्योपोद्बलकानि कानिचिल्लिङ्गाभासानि वेदान्तेष्वापातेन मन्दमतीन्प्रति भान्तीति ; स च कार्यकारणानन्यत्वाभ्युपगमात्प्रत्यासन्नो वेदान्तवादस्य देवलप्रभृतिभिश्च कैश्चिद्धर्मसूत्रकारैः स्वग्रन्थेष्वाश्रितः ; तेन तत्प्रतिषेधे यत्नोऽतीव कृतो नाण्वादिकारणवादप्रतिषेधे ; तेऽपि तु ब्रह्मकारणवादपक्षस्य प्रतिपक्षत्वात्प्रतिषेद्धव्याः ; तेषामप्युपोद्बलकं वैदिकं किंचिल्लिङ्गमापातेन मन्दमतीन्प्रति भायादिति—अतः प्रधानमल्लनिबर्हणन्यायेनातिदिशति—एतेन प्रधानकारणवादप्रतिषेधन्यायकलापेन सर्वेऽण्वादिकारणवादा अपि प्रतिषिद्धतया व्याख्याता वेदितव्याः, तेषामपि प्रधानवदशब्दत्वा-

### प्रकटार्थविवरणम्

वैलक्षण्यादिति तत्राह—पुनश्चैतत्सर्वमिति ॥ प्रतिवक्ष्यामः पराकरिष्याम इत्यर्थः ॥

#### एतेन सर्वे व्याख्याता व्याख्याताः ॥

ननु यद्यपि प्रधानं जगत्कारणं न भवति, तथापि परमाण्वादीनां जगत्कारणत्वात् न ब्रह्मण्येव जगत्कारणे समन्वयो व्यवतिष्ठत इत्याह—एतेनेति ॥ ननु प्रधानं प्रबन्धेन निराकृतम् ; मतान्तरं त्वतिदेशेन निराक्रियत इति को विशेष इत्याशङ्क्याह—ईक्षतेरिति ॥ तर्हि निष्प्रयोजनत्वात् निर्मूलत्वाच्च नातिदेशोऽपि कर्तव्य इत्याशङ्क्याह—तेऽपि त्विति ॥ "अणोरणीयान्" इत्यणुवादस्य "असदेवेदमग्र आसीत्" इत्यसद्वादस्य "तन्नामरूपाभ्यां व्याक्रियत"

माष्यम्

च्छब्दविरोधित्वाच्चेति । व्याख्याता व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छङ्करभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
प्रथमाध्यायस्य चतुर्थः पादः ॥
प्रथमोऽध्यायः ॥

प्रकटार्थविवरणम्

इति स्वभाववादस्य लिङ्गमापाततो भाति। तन्निराकरणे च प्रयोजनं पुरुषप्रयत्नस्य प्रतिनियतविषयत्वम्; अतोऽतिदेशेन निरास इत्यर्थः। पूर्वापरपर्यालोचनयात्मादिशब्दसामानाधिकरण्ये चाण्वादिशब्दानामच्छ[नां सूक्ष्म]त्वादिमिति परमेश्वरे वृत्तिरितिनाण्वादिवादस्यासाधारणः कश्चिच्छब्दोऽस्ति, वेदेन विरुध्यते च, ब्रह्मण एवोपादानत्वाभिधायिना शब्देनेत्यर्थः। द्विरुक्तेः कृत्यमाह— व्याख्याता इति ॥

मायया यज्जगद्बीजं जीवाविद्यावशेन च ।
तज्ज्ञानं सत्यगद्वैतं सिद्धं वेदसमन्वयात् ॥

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे
प्रथमस्याध्यायस्य चतुर्थः पादः ॥

समाप्तश्च प्रथमोऽध्यायः ॥

---

१. T and T[1]. मायेयायं जगद्बीजं A. माययेदं जग

२. T, T[1], TM and A. जीवो.

# अथ द्वितीयोऽध्यायः

## प्रथमः पादः

——:o:——

### भाष्यम्

प्रथमेऽध्याये सर्वज्ञः सर्वेश्वरो जगत उत्पत्तिकारणम्, मृत्सुवर्णादय इव घटरुचकादीनाम्; उत्पन्नस्य जगतो नियन्तृत्वेन स्थितिकारणम्, मायावीव मायायाः; प्रसारितस्य च जगतः पुनः स्वात्मन्येवोपसंहारकारणम्, अवनिरिव चतुर्विधस्य भूतग्रामस्य; स एव च सर्वेषां न आत्मा इत्येतद्वेदान्तवाक्यसमन्वयप्रतिपादनेन प्रतिपादितम्; प्रधानादिकारणवादाश्चाशब्दत्वेन निराकृताः । इदानीं स्वपक्षे स्मृतिन्यायविरोधपरिहारः, प्रधानादिवादानां च न्यायाभासोपबृंहितत्वम्, प्रतिवेदान्तं च सृष्ट्यादिप्रक्रियाया अविगीतत्वमित्यस्यार्थजातस्य प्रति-

### प्रकटार्थविवरणम्

पूर्वोत्तराध्याययोः हेतुहेतुमद्भावलक्षणं सन्दर्भं दर्शयितुं वृत्तं संकीर्तयति—प्रथमेऽध्याय इति ॥ जन्मादिसूत्रमारभ्योत्पत्तिस्थितिलयकारणं परं ब्रह्मेति प्रतिपादितम् । "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" "अवस्थितेरिति काशकृत्स्नः" इत्यादिप्रदेशेषु च सर्वात्मत्वमद्वितीयत्वं प्रतिपादितमित्यर्थः । इदानीं द्वितीयाध्यायार्थं संक्षेपतो दर्शयति—इदानीमिति ॥ तत्रापि प्रथमपादेन समन्वयस्य स्मृतिन्यायविरोधपरिहारः, द्वितीयेन साङ्ख्यादिमतानां भ्रान्तिमूलत्वम्, उत्तरपादद्वयेन च सर्वशाखासूत्पत्त्यादिप्रक्रियायाः परस्पर-विरोधो नास्तीति प्रतिपाद्यते । दर्शिते हि समन्वये विरोधशङ्कायामविरोधा-

१. A. कीर्तयति

२. A. कारणं ब्रह्मेति

३. A. इदानीमपीति

४. A omits च

भाष्यम्

पादनाय द्वितीयोऽध्याय आरभ्यते । तत्र प्रथमं तावत्स्मृतिविरोधमुपन्यस्य परिहरति—

## स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ २-१-१ ॥

यदुक्तं ब्रह्मैव सर्वज्ञं जगतः कारणमिति, तदयुक्तम्; कुतः? स्मृत्यनवकाशदोषप्रसङ्गात्—स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता शिष्टपरिगृहीता अन्याश्च तदनुसारिण्यः स्मृतयः, ता एवं सत्यनवकाशाः प्रसज्येरन् । तासु ह्यचेतनं प्रधानं स्वतन्त्रं जगतः कारणमुपनिबध्यते । मन्वादिस्मृतयस्तावच्चोदनालक्षणेनाग्निहोत्रादिना धर्मजातेनापेक्षितमर्थं समर्पयन्त्यः सावकाशा भवन्ति—अस्य वर्णस्यास्मिन्कालेऽनेन विधाने-

प्रकटार्थविवरणम्

ध्यायोत्थानमिति हेतुहेतुमद्भावः । एवमध्यायतात्पर्यमुक्त्वानन्तराधिकरणतात्पर्यमाह—तत्र प्रथममिति ॥

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥

उक्तः समन्वयो विषयः । स किं सांख्यस्मृत्या विरुध्यते न वेति संशये पूर्ववादी विरुध्यत इत्याह — यदुक्तमित्यादिना ॥ तन्त्र्यते व्युत्पाद्यते वस्तुजातमस्मिन्निति तन्त्रं शास्त्रम् । तदाख्या संज्ञा अस्या इति तन्त्राख्या । तस्याः ब्रह्मकारणपक्षेऽनवकाशो व्यर्थता प्रसज्येत; अन्याश्च देवलादिस्मृतयो व्यर्था एवं स्युरित्यर्थः । कल्प्यतामर्थान्तरेऽवकाश इत्याशङ्क्याह — तासु हीति ॥ एतदुक्तं भवतीति[भवति] — पूर्वाधिकरणे ह्यण्वादिशब्दानामात्मादिशब्दसामानाधिकरण्यादर्थान्तरपरत्वमुक्तम् । सांख्यादिस्मृतिषु त्वर्थान्तरपरत्वे कारणाभावात् प्रधानादिपरत्वमेवेत्यस्ति विरोध इति भावः । ननु मन्वादिस्मृतिविरोधे तासामप्रामाण्यात् न तद्विरोधो दोष इत्याशङ्क्याह—मन्वादिस्मृतयस्तावदिति ॥ सावकाशानवकाशयोरनवकाशं बलवदिति

१. A omits एव

२. T. ह्यणादि TM. ह्यण्वादियाथा- A. ह्यण्वादि

भाष्यम्

नोपनयनम्, ईदृशश्चाचारः, इत्थं वेदाध्ययनम्, इत्थं समावर्तनम्, इत्थं सहधर्मचारिणीसंयोग इति; तथा पुरुषार्थांश्च वर्णाश्रमधर्मान्नानाविधान्विदधति । नैवं कपिलादिस्मृतीनामनुष्ठेये विषयेऽवकाशोऽस्ति । मोक्षसाधनमेव हि सम्यग्दर्शनमधिकृत्य ताः प्रणीताः । यदि तत्राप्यनवकाशाः स्युः, आनर्थक्यमेवासां प्रसज्येत । तस्मात्तदविरोधेन वेदान्ता व्याख्यातव्याः । कथं पुनरीक्षत्यादिभ्यो हेतुभ्यो ब्रह्मैव सर्वज्ञं जगतः कारणमित्यवधारितः श्रुत्यर्थः स्मृत्यनवकाशदोषप्रसङ्गेन पुनराक्षिप्यते? भवेदयमनाक्षेपः स्वतन्त्रप्रज्ञानाम्; परतन्त्रप्रज्ञास्तु प्रायेण जनाः स्वातन्त्र्येण श्रुत्यर्थमवधारयितुमशक्नुवन्तः प्रख्यातप्रणेतृकासु स्मृतिष्ववलम्बेरन्; तद्बलेन च श्रुत्यर्थं प्रतिपित्सेरन्; अस्मत्कृते च व्याख्याने न विश्वस्युः, बहुमानात्स्मृतीनां प्रणेतृषु; कपिलप्रभृतीनां चार्षं ज्ञानमप्रतिहतं स्मर्यते । श्रुतिश्च भवति—"ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्" इति । तस्मान्नैषां मतमयथार्थं शक्यं संभावयितुम् । तर्कावष्टम्भेन चैतेऽर्थं प्रतिष्ठापयन्ति । तस्मादपि स्मृतिबलेन वेदान्ता व्याख्येया इति पुनराक्षेपः ॥

प्रकटार्थविवरणम्

न्यायेन धर्मेऽपि सावकाशमन्वादिस्मृतिविरोधे नानवकाशसांख्यस्मृतेरप्रामाण्यमित्यर्थः । पूर्वपक्षमाक्षिपति—कथं पुनरिति ॥ वेदस्मृत्योर्विरोधे स्मृतेर्दौर्बल्यस्य सुप्रसिद्धत्वात् नायमाक्षेपो युक्त इति भावः । ये स्वातन्त्र्येण पूर्वापरपर्यालोचनया वेदार्थं प्रति वक्तुं समर्थाः तेषां न घटत एवायमाक्षेपः; कपिलादिषु श्रद्दधानानां पुनर्मन्दबुद्धीनां घटतेऽयमाक्षेप इत्याह—भवेदयमिति ॥ किञ्च तेषामतीन्द्रियार्थदर्शित्वाच्च तदुक्तमन्यथा भवतीत्याह—कपिलप्रभृतीनां चेति ॥ युक्त्युपेतत्वाच्च न तन्मतमन्यथा भवतीत्याह—तर्कावष्टम्भेन चेति ॥

१. A. भवेदयमाक्षेप इति ।

भाष्यम्

तस्य समाधिः—"नान्यस्मृत्यनवकाशदोषप्रसङ्गात्" इति । यदि स्मृत्यनवकाशदोषप्रसङ्गेनेश्वरकारणवाद आक्षिप्येत, एवमप्यन्या ईश्वरकारणवादिन्यः स्मृतयोऽनवकाशाः प्रसज्येरन्; ता उदाहरिष्यामः—"यत्तत्सूक्ष्ममविज्ञेयम्" इति परं ब्रह्म प्रकृत्य "स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते" इति चोक्त्वा "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इत्याह; तथान्यत्रापि "अव्यक्तं पुरुषे ब्रह्मन् निर्गुणे संप्रलीयते" इत्याह;

"अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः ।
स सर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः"॥

इति पुराणे; भगवद्गीतासु च—"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" इति; परमात्मानमेव च प्रकृत्यापस्तम्बः पठति—"तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः" इति; एवमनेकशः स्मृतिष्वपीश्वरः कारणत्वेनोपादानत्वेन च प्रकाश्यते । स्मृतिबलेन प्रत्यवतिष्ठमानस्य स्मृतिबलेनैवोत्तरं वक्ष्यामीत्यतोऽयमन्यस्मृत्यनवकाशदोषोपन्यासः । दर्शितं तु श्रुतीनामीश्वरकारणवादं प्रति

प्रकटार्थविवरणम्

एवमाक्षेपमुपपाद्य परिहारत्वेन सूत्रमवतारयति—तस्य समाधिरिति ॥ यथा ब्रह्मकारणवादे सांख्यादिस्मृतिविरोधः तथा प्रधानवादेऽपि स्मृत्यन्तरविरोधः समान इति न मां प्रत्येवोद्भावनीय इति भावः । अव्यक्तमनिर्वचनीयं भूतसूक्ष्ममित्यर्थः । प्रभव इति जन्मकर्ता । प्रलय इति प्रलयहेतुरुच्यते । तस्मात्परमात्मनः कायाः सर्वदेहाः प्रभवन्तीति निमित्तत्वमुक्तम् । स मूलमित्युपादानत्वम् । शश्वद्भवः शाश्वतिकोऽनादिः, स नित्यो विनाशरहित इत्यर्थः । ननु किमिति प्रतिबन्दिन्यायेन परिहारोऽभिहित इत्याशङ्क्याह—स्मृतिबलेनेति ॥ सांख्यादिस्मृतिश्रद्धाजडस्य हीदं चोद्यम्; स्मृत्यन्तरविरोधे तत्रापि न श्रद्धातव्यमिति दर्शयितुमिति भावः । साक्षात्परिहारमाह—दर्शितं त्विति ॥ तत्परश्रुतिविरोधे स्मृतेरप्रामाण्यं सुप्रसिद्धमिति नोद्भा-

१. A. ऽपादने
२. A. सन्
३. A omits दर्शयितुमिति

भाष्यम्

तात्पर्यम्; विप्रतिपत्तौ च स्मृतीनामवश्यकर्तव्येऽन्यतरपरिग्रहेऽन्यतरपरित्यागे च श्रुत्यनुसारिण्यः स्मृतयः प्रमाणमनपेक्ष्या इतराः; तदुक्तं प्रमाणलक्षणे—"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति । न चातीन्द्रियानर्थाञ्श्रुतिमन्तरेण कश्चिदुपलभत इति शक्यं संभावयितुम्, निमित्ताभावात्; शक्यं कपिलादीनां सिद्धानामप्रतिहतज्ञानत्वादिति चेत्, न; सिद्धेरपि सापेक्षत्वात्; धर्मानुष्ठानापेक्षा हि सिद्धिः; स च धर्मश्चोदनालक्षणः; ततश्च पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनवशेनातिशङ्कितुं शक्यते; सिद्धव्यपाश्रयकल्पनायामपि

प्रकटार्थविवरणम्

व्यत इति भावः । ननु तर्हि स्मृत्योर्विरोधे परस्पराविगीतार्थत्वान्नास्त्येवोभयोरपि प्रामाण्यमित्याशङ्क्याह—विप्रतिपत्तौ चेति ॥ क्रियायामिव वस्तुनि विकल्पासंभवादवश्यकर्तव्येऽन्यतरस्वीकारे क्लृप्तमूलत्वात् श्रुत्यनुसारिण्यः स्मृतयः प्रमाणं तद्विरुद्धास्त्वनपेक्षणीया इत्यर्थः । प्रथमतन्त्रे प्रथमाध्याये जैमिनिनाप्येतदुक्तमिति । "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतेः "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुत्या विरोधेऽनपेक्षं प्रामाण्यं स्यात् क्लृप्तकल्प्यविरोधे क्लृप्तं बलवदिति न्यायात्, विरोधे त्वसति मूलानुमानं विरोधरहिताया एव स्मृतेर्लिङ्गत्वात् श्रुतिविरोधवत्तन्मूलस्मृतिविरोधेऽप्यप्रामाण्यमेवेति भावः । ननु स्मृतेरार्षं प्रत्यक्षं मूलं न श्रुतिरित्याशङ्क्याह—न चातीन्द्रियानिति ॥ अतीन्द्रियानिन्द्रियैः पश्यतीति वचनं व्याहतमित्यर्थः । योगमाहात्म्यबलात् कपिलादीनां शक्यं संभावयितुमित्याह — शक्यमिति ॥ सिद्धेः योगमाहात्म्यस्यापि कल्पान्तरीयवैदिकानुष्ठानसापेक्षत्वात् न वेदार्थविपरीतातीन्द्रियार्थदर्शित्वं शक्यं संभावयितुमित्याह — न सिद्धेरपीति ॥ किञ्च सिद्धानामतीन्द्रियार्थदर्शित्वकल्पनायामपि न कपिलवाक्यमात्रात् निर्णय इत्याह—सिद्धव्यपाश्रयेति ॥ उक्तं हि—

१. T, T[1], P and TM. न्द्राप्यमिति　　४. TM. न्द्रियार्थं दार्शितु
२. TM. त्वावगमात्त　　A. न्द्रियार्थत्वं शक्य
३. T, P, TM and A. कर्तव्येतरस्वीकारे

भाष्यम्

तस्य समाधिः—"नान्यस्मृत्यनवकाशदोषप्रसङ्गात्" इति। यदि स्मृत्यनवकाशदोषप्रसङ्गेनेश्वरकारणवाद आक्षिप्येत, एवमप्यन्या ईश्वरकारणवादिन्यः स्मृतयोऽनवकाशाः प्रसज्येरन्; ता उदाहरिष्यामः—"यत्तत्सूक्ष्ममविज्ञेयम्" इति परं ब्रह्म प्रकृत्य "स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते" इति चोक्त्वा "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इत्याह; तथान्यत्रापि "अव्यक्तं पुरुषे ब्रह्मन् निर्गुणे संप्रलीयते" इत्याह;

"अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः।
स सर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः"॥

इति पुराणे; भगवद्गीतासु च—"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" इति; परमात्मानमेव च प्रकृत्यापस्तम्बः पठति—"तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः" इति; एवमनेकशः स्मृतिष्वपीश्वरः कारणत्वेनोपादानत्वेन च प्रकाश्यते। स्मृतिबलेन प्रत्यवतिष्ठमानस्य स्मृतिबलेनैवोत्तरं वक्ष्यामीत्यतोऽयमन्यस्मृत्यनवकाशदोषोपन्यासः। दर्शितं तु श्रुतीनामीश्वरकारणवादं प्रति

प्रकटार्थविवरणम्

एवमाक्षेपमुपपाद्य परिहारत्वेन सूत्रमवतारयति—तस्य समाधिरिति॥ यथा ब्रह्मकारणवादे सांख्यादिस्मृतिविरोधः तथा प्रधानवादेऽपि स्मृत्यन्तरविरोधः समान इति न मां प्रत्येवोद्भावनीय इति भावः। अव्यक्तमनिर्वचनीयं भूतसूक्ष्ममित्यर्थः। प्रभव इति जन्मकर्ता। प्रलय इति प्रलयहेतुरुच्यते। तस्मात्परमात्मनः कायाः सर्वदेहाः प्रभवन्तीति निमित्तत्वमुक्तम्। स मूलमित्युपादानत्वम्। शाश्वद्भवः शाश्वतिकोऽनादिः, स नित्यो विनाशरहित इत्यर्थः। ननु किमिति प्रतिबन्दिन्यायेन परिहारोऽभिहित इत्याशङ्क्याह—स्मृतिबलेनेति॥ सांख्यादिस्मृतिश्रद्धाजडस्य हीदं चोद्यम्; स्मृत्यन्तरविरोधे तत्रापि न श्रद्धातव्यमिति दर्शयितुमिति भावः। साक्षात्परिहारमाह—दर्शितं त्विति॥ तत्परश्रुतिविरोधे स्मृतेरप्रामाण्यं सुप्रसिद्धमिति नोद्भा-

१. A. उपादने  
२. A. सन्  
३. A omits दर्शयितुमिति

भाष्यम्

तात्पर्यम्; विप्रतिपत्तौ[1] च स्मृतीनामवश्यकर्तव्येऽन्यतरपरिग्रहेऽन्यतरपरित्यागे च श्रुत्यनुसारिण्यः स्मृतयः प्रमाणमनपेक्ष्या इतराः; तदुक्तं प्रमाणलक्षणे—"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति। न चातीन्द्रियानर्थाञ्श्रुतिमन्तरेण कश्चिदुपलभत इति शक्यं संभावयितुम्, निमित्ताभावात्; शक्यं कपिलादीनां सिद्धानामप्रतिहतज्ञानत्वादिति चेत्, न; सिद्धेरपि सापेक्षत्वात्; धर्मानुष्ठानापेक्षा हि सिद्धिः; स च धर्मश्चोदनालक्षणः; ततश्च पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनवशेनातिशङ्कितुं शक्यते; सिद्धव्यपाश्रयकल्पनायामपि

प्रकटार्थविवरणम्

व्यंत इति भावः। ननु तर्हि स्मृत्योर्विरोधे परस्पराविगीतार्थत्वोभास्त्येवोभयोरपि प्रामाण्यमित्याशङ्क्याह—विप्रतिपत्तौ चेति॥ क्रियायामिव वस्तुनि विकल्पासंभवादवश्यकर्तव्येऽन्यतरस्वीकारे क्लृप्तमूलत्वात् श्रुत्यनुसारिण्यः स्मृतयः प्रमाणं तद्विरुद्धास्त्वनपेक्षणीया इत्यर्थः। प्रथमतन्त्रे प्रथमाध्याये जैमिनिनाप्येतदुक्तमिति। "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतेः "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुत्या विरोधेऽनपेक्षं प्रामाण्यं स्यात् क्लृप्तकल्प्यविरोधे क्लृप्तं बलवदिति न्यायात्, विरोधे त्वसति मूलानुमानं विरोधरहिताया एव स्मृतेर्लिङ्गत्वात् श्रुतिविरोधवत्तन्मूलस्मृतिविरोधेऽप्यप्रामाण्यमेवेति भावः। ननु स्मृतेरार्षं प्रत्यक्षं मूलं न श्रुतिरित्याशङ्क्याह—न चातीन्द्रियानिति॥ अतीन्द्रियानिन्द्रियैः पश्यतीति वचनं व्याहतमित्यर्थः। योगमाहात्म्यबलात् कपिलादीनां शक्यं संभावयितुमित्याह — शक्यमिति॥ सिद्धेः योगमाहात्म्यस्यापि कल्पान्तरीयवैदिकानुष्ठानसापेक्षत्वात् न वेदार्थविपरीतातीन्द्रियार्थदर्शित्वं शक्यं संभावयितुमित्याह — न सिद्धेरपीति॥ किञ्च सिद्धानामतीन्द्रियार्थदर्शित्वकल्पनायामपि न कपिलवाक्यमात्रात् निर्णय इत्याह—सिद्धव्यपाश्रयेति॥ उक्तं हि—

१. T, T¹, P and TM. ह्राप्यमिति ४. TM. न्द्रियार्थ दर्शित्व

२. TM. त्वावगमात A. न्द्रियार्थत्वं शक्य

३. T, P, TM and A. कर्तव्येतरस्वीकारे

भाष्यम्

बहुत्वात्सिद्धानां प्रदर्शितेन प्रकारेण स्मृतिविप्रतिपत्तौ सत्यां न श्रुतिव्यपाश्रयादन्यन्निर्णयकारणमस्ति ; परतन्त्रप्रज्ञस्यापि नाकस्मात्स्मृतिविशेषविषयः पक्षपातो युक्तः, कस्यचित्क्वचित्पक्षपाते सति पुरुषमतिवैश्वरूप्येण तत्त्वाव्यवस्थानप्रसङ्गात् ; तस्मात्तस्यापि स्मृतिविप्रतिपत्त्युपन्यासेन श्रुत्यनुसाराननुसारविषयाविवेचनेन च सन्मार्गे प्रज्ञा संग्रहणीया । या तु श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयन्ती प्रदर्शिता न तया श्रुतिविरुद्धमपि कापिलं मतं श्रद्धातुं शक्यम्, कापिलमिति श्रुतिसामान्यमात्रत्वात् ; अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तु-

प्रकटार्थविवरणम्

" कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा ।
तावुभौ यदि सर्वज्ञौ मतभेदः कथं तयोः ॥ " इति ।

तत्र वा कथं निर्णयलाभ इत्याशङ्क्याह — प्रदर्शितेनेति ॥ ननु पुरुषस्य परतन्त्रप्रज्ञत्वात् स्वातन्त्र्येण श्रुतिव्यपाश्रयो न निर्णयकारणम्, किन्तु यस्मिन्नभिरुचिरुत्पद्यते तदनुसारेणैवासौ श्रुतिमपि योजयतीत्याशङ्क्याह—परतन्त्रप्रज्ञस्यापीति ॥ ननु तर्हि कपिलस्य श्रौतत्वात् तन्मतमपि सन्मार्गं एवेत्याशङ्क्याह — या तु श्रुतिरिति ॥ यद्यपि कपिलः श्रौतः तथापि तन्मतं श्रुत्यनुसारीति न प्रमाणमस्ति बृहस्पतिवद्व्यामोहार्थतयाप्युपदेशसंभवादिति भावः । किञ्च शब्दसादृश्यमात्रेणायं श्रौतत्वविभ्रमः साङ्ख्यसूत्रकृदेव कपिल इहोच्यत इत्यत्र प्रमाणाभावादित्याह—कपिलमिति ॥ नन्वन्यस्याभावात् स एवोक्त इत्याशङ्क्याह — अन्यस्य चेति ॥ प्रतप्तुः प्रदग्धुः । किञ्च यः परमेश्वरः सृष्ट्यादौ प्रसूतं कपिलं ज्ञानैः पूरयति, जायमानं च सर्वं पश्यति स एव सर्वेषामात्मेतीश्वरपरमिदं वाक्यम्, अन्यपरस्य च वाक्यस्य न्यायतः प्राप्तिरहितस्यार्थस्यासाधकत्वात् न सांख्यसूत्रकारं प्रापंकरहितं गमयेदिदं

१. T, T¹ and A कणादो यदि सर्वज्ञः कपिलो न कथं भवेत् ।

२. TM and A. मतिभेदः

३. A. अतीन्द्रियार्थनिर्णय

४. A omits कपिलस्य...यद्यपि

भाष्यम्

वासुदेवनाम्नः स्मरणात्; अन्यार्थदर्शनस्य च प्राप्तिरहितस्यासाधकत्वात्; भवति चान्या मनोर्माहात्म्यं प्रख्यापयन्ती श्रुतिः—"यद्वै किंच मनुरवदत्तद्भेषजम्" इति। मनुना च

"सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति॥"

इति सर्वात्मत्वदर्शनं प्रशंसता कापिलं मतं निन्द्यत इति गम्यते; कपिलो हि न सर्वात्मत्वदर्शनमनुमन्यते, आत्मभेदाभ्युपगमात्। महाभारतेऽपि च

"बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु"

इति विचार्य

"बहवः पुरुषा राजन्सांख्ययोगविचारिणाम्"

इति परपक्षमुपन्यस्य, तद्व्युदासेन—

"बहूनां पुरुषाणां हि यथैका योनिरुच्यते।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्॥"

इत्युपक्रम्य

"ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्कचित्॥
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः।
एकश्चरति भूतेषु स्वैरचारी यथासुखम्॥"

प्रकटार्थविवरणम्

वाक्यमित्याह—अन्यार्थदर्शनस्य चेति॥ किञ्च वेदसिद्धमनुवचनविरुद्धाभिधायित्वादपि न श्रौत इत्याह—भवति चेति॥ किञ्च महाभारतेऽपि कापिलं मतं निन्दित्वा सर्वात्मतैवोक्तेत्याह—महाभारतेऽपीति॥ पुरुषा जीवाः किं स्वभावेनैव बहवः किं वैक एव परमात्मा बहूनां दृश्यमानानां स्वभाव इत्येवं विचार्येत्यर्थः। बहूनां देहानां यथैका पृथिवी योनिरधिष्ठान-

भाष्यम्

इति सर्वात्मतैव निर्धारिता । श्रुतिश्च सर्वात्मतायां भवति—

"यस्मिन्सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥"

इत्येवंविधा । अतश्च सिद्धमात्मभेदकल्पनयापि कपिलस्य तन्त्रं वेदविरुद्धं वेदानुसारिमनुवचनविरुद्धं च, न केवलं स्वतन्त्रप्रकृतिकल्पनयैवेति । वेदस्य हि निरपेक्षं स्वार्थे प्रामाण्यं रवेरिव रूपविषये; पुरुषवचसां तु मूलान्तरापेक्षं वक्तृस्मृतिव्यवहितं चेति विप्रकर्षः । तस्माद्वेदविरुद्धे विषये स्मृत्यनवकाशप्रसङ्गो न दोषः ॥

कुतश्च स्मृत्यनवकाशप्रसङ्गो न दोषः?

प्रकटार्थविवरणम्

मुच्यते; तथा तमेकं पुरुषं परमात्मानं बहूनां प्रतिबिम्बकल्पानां जीवानां[1] योनिं विश्वं परिपूर्णं सर्वज्ञत्वादिगुणसंपन्नं कथयिष्यामीत्यर्थः । विश्वे मूर्धानोऽस्यैव सर्वत्र प्रतिबिम्बितत्वादिति विश्वमूर्धा । सर्वेषां जीवानां एक एवात्मा स्वभाव इति या सर्वात्मता[2] निर्धारिता सा च श्रुतिस्मृतिमूलेत्याह—श्रुतिश्चेति ॥ यस्मिन् काले विजानतः पुंसः सर्वाणि भूतान्यात्मैवाभूत् स्वरूपतयाधिगतस्य ब्रह्मण एव सर्वत्र प्रतिबिम्बितत्वादित्यर्थः । ननु वेदविरुद्धत्वेऽपि सावकाशानवकाशत्वेन व्यवस्था भविष्यतीति नाशङ्कनीयमित्याह—वेदस्य हीति ॥ तुल्यबल्योः प्रमाणयोः अन्यतरस्यापि अप्रामाण्यानुपपत्तौ सावकाशानवकाशन्यायेन प्रामाण्यं व्यवस्थाप्यते; प्रबलदुर्बलयोस्तु विरोधे प्रबलेन दुर्बलस्य बाधो न्याय्य इति भावः[3] ॥

सूत्रान्तरमवतारयति—कुतश्चेति[4] ॥

१. A omits जीवानां
२. A. सर्वात्मकता
३. A. दुर्बलो बाध्यते इति भावः
४. A. किञ्चेति

भाष्यम्

## इतरेषां चानुपलब्धेः ॥ २-१-२ ॥

प्रधानादितराणि यानि प्रधानपरिणामत्वेन स्मृतौ कल्पितानि महदादीनि, न तानि वेदे लोके वोपलभ्यन्ते । भूतेन्द्रियाणि तावल्लोकवेदप्रसिद्धत्वाच्छक्यन्ते स्मर्तुम् । अलोकवेदप्रसिद्धत्वात्तु महदादीनां षष्ठस्येवेन्द्रियार्थस्य न स्मृतिरवकल्पते । यदपि क्वचित्तत्परमिव श्रवणमवभासते, तदप्यतत्परं व्याख्यातम्—"आनुमानिकमप्येकेषाम्" इत्यत्र । कार्यस्मृतेरप्रामाण्यात्कारणस्मृतेरप्यप्रामाण्यं युक्तमित्यभिप्रायः तस्मादपि न स्मृत्यनवकाशप्रसङ्गो दोषः । तर्कावष्टम्भजं तु "न विलक्षणत्वात्" इत्यारभ्योन्मथिष्यति ॥

## एतेन योगः प्रत्युक्तः ॥ २-१-३ ॥

एतेन सांख्यस्मृतिप्रत्याख्यानेन योगस्मृतिरपि प्रत्याख्याता द्रष्टव्येत्यतिदिशति । तत्रापि श्रुतिविरोधेन प्रधानं स्वतन्त्रमेव कारणम्

प्रकटार्थविवरणम्

इतरेषां चानुपलब्धेः ॥

ननु कथमनुपलम्भः सांख्याभ्युपगतानां भूतेन्द्रियाणामुपलम्भादित्याशङ्क्याह—भूतेन्द्रियाणीति[1] ॥ ननु "महतः परमव्यक्तम्" इत्यस्ति महदादीनामुपलम्भ इत्याशङ्क्याह — यदपीति ॥ फलितमाह — कार्यस्मृतेरिति ॥ एकदेशस्य निर्मूलत्वेनाप्रामाण्ये सतीतरस्याप्यप्रामाण्यम्; भूतादेस्तु[2] नासाधारण्यमित्यर्थः । यच्चोक्तं कपिलादिवचनं युक्त्युपेतमिति तत्राह—तर्कावष्टम्भजमिति[4] ॥

एतेन योगः प्रत्युक्तः ॥

एतेनेत्यतिदेशाधिकरणम्। अतः पूर्ववदेव विषयसंशयपूर्वपक्षसिद्धान्ताः ।

१. T[1], TM and A omit भूतेन्द्रि...शङ्क्याह　३. A. साचार

२. T, T[1] and TM. भूतादेशस्तु　४. TM. तर्कवष्टम्भाविति

भाष्यम्

महदादीनि च कार्याण्यलोकवेदप्रसिद्धानि कल्प्यन्ते । नन्वेवं सति समानन्यायत्वात्पूर्वेणैवैतद्गतम्; किमर्थं पुनरतिदिश्यते? अस्त्यत्राभ्यधिकाशङ्का—सम्यग्दर्शनाभ्युपायो हि योगो वेदे विहितः "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति । "त्रिरुन्नतं स्थाप्य समं शरीरम्" इत्यादिना चासनादिकल्पनापुरःसरं बहुप्रपञ्चं योगविधानं श्वेताश्वतरोपनिषदि दृश्यते; लिङ्गानि च वैदिकानि योगविषयाणि सहस्रश उपलभ्यन्ते "तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्" इति "विद्यामेतां योगविधिं च कृत्स्नम्" इति चैवमादीनि; योगशास्त्रेऽपि—"अथ तद्दर्शनोपायो योगः" इति सम्यग्दर्शनाभ्युपायत्वेनैव योगोऽङ्गीक्रियते; अतः संप्रतिपन्नार्थैकदेशत्वादष्टकादिस्मृतिवद्योगस्मृतिरप्यनपवदनीया भविष्यतीति । इयमभ्यधिका शङ्काऽतिदेशेन निवर्त्यते, अर्थैकदेशसंप्रतिपत्तावप्यर्थैकदेशविप्रतिपत्तेः पूर्वोक्ताया दर्शनात् । सतीष्वप्यध्यात्मविषयासु बह्वीषु स्मृतिषु सांख्ययोगस्मृत्योरेव

प्रकटार्थविवरणम्

अतिदेशस्याधिकाशङ्का वक्तव्येत्याह—नन्वेवमिति ॥ श्रौतलिङ्गानुगृहीतत्वात् योगस्मृतिः प्रमाणमित्यधिकाशङ्कामाह—अस्त्यत्रेति ॥ त्रीण्युरोग्रीवशिरांसि उन्नतानि यस्मिंस्त्रिरुन्नतम् । विद्यामेतां ब्रह्मविषयां योगविधिं ध्यानप्रकारं च कृत्स्नं मृत्युर्नचिकेतसे प्रोवाचेत्यर्थः । संप्रतिपन्नोऽर्थैकदेशो यस्याः सा तथोक्ता तस्याभावः तस्माद्योगस्मृतिर्न निराकरणीया, "अष्टकाः कर्तव्याः" "गुरुरनुगन्तव्यः" इत्यादिवदित्यर्थः । ननु बौद्धादिस्मृतयोऽध्यात्मविषयाः सन्ति ; तत्राप्यतिदेशः किं न कृत इत्याशङ्क्याह—सतीष्वपीति ॥ बौद्धादिस्मृतीनामपुरुषार्थसाधनतायाः स्पष्टत्वात् न तत्रातिदेशः कृत इति भावः । तत्कारणं तेषां कामानां कारणं देवं साङ्ख्ययोगाभ्यां दृष्टं ज्ञात्वा मुच्यतेऽविद्याबन्धैरित्यर्थः । यद्येवं प्रख्याततत्वं शिष्टपरिग्रहश्रौतेन च लिङ्गेनोपबृंहितत्वमस्ति किमिति तर्हि

१. T, T¹ and TM. इत्याशङ्क्यां        ३. A omits कामानां

२. A omits उन्नतानि

भाष्यम्

निराकरणे यत्नः कृतः। सांख्ययोगौ हि परमपुरुषार्थसाधनत्वेन लोके प्रख्यातौ, शिष्टैश्च परिगृहीतौ, लिङ्गेन च श्रौतेनोपबृंहितौ—"तत्कारणं सांख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैः" इति; निराकरणं तु न सांख्यज्ञानेन वेदनिरपेक्षेण योगमार्गेण वा निःश्रेयसमधिगम्यत इति; श्रुतिर्हि वैदिकादात्मैकत्वविज्ञानादन्यन्निःश्रेयससाधनं वारयति "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति; द्वैतिनो हि ते सांख्या योगाश्च नात्मैकत्वदर्शिनः । यत्तु दर्शनमुक्तम् "तत्कारणं सांख्ययोगाभिपन्नम्" इति, वैदिकमेव तत्र ज्ञानं ध्यानं च सांख्ययोगशब्दाभ्यामभिलप्यते प्रत्यासत्तेरित्यवगन्तव्यम् । येन त्वंशेन न विरुध्येते, तेनेष्टमेव सांख्ययोगस्मृत्योः सावकाशत्वम्; तद्यथा—"असङ्गो ह्ययं पुरुषः" इत्येवमादिश्रुतिप्रसिद्धमेव पुरुषस्य विशुद्धत्वं निर्गुणपुरुषनिरूपणेन सांख्यैरभ्युपगम्यते; तथा च योगैरपि "अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः" इत्येवमादि श्रुतिप्रसिद्धमेव निवृत्तिनिष्ठत्वं प्रव्रज्याद्युपदेशेनानुगम्यते। एतेन सर्वाणि तर्कस्मरणानि प्रतिवक्तव्यानि; तान्यपि तर्कोपपत्तिभ्यां तत्त्वज्ञानायोपकुर्वन्तीति चेदुपकुर्वन्तु नाम; तत्त्वज्ञानं तु वेदान्तवाक्येभ्य एव भवति "नावेदविन्मनुते तं बृहन्तम्" "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्येवमादिश्रुतिभ्यः ॥

प्रकटार्थविवरणम्

निराकरणमित्याशङ्क्याह—निराकरणं त्विति ॥ प्रत्यासत्तेरिति ॥ प्रकरणे सन्निहितत्वादित्यर्थः। इदानीमनिराकार्यमंशमाह—येन त्वंशेनेति॥ कणभक्षाक्षचरणसूत्रेष्वप्यतिदिशति— एतेन सर्वाणीति ॥

भाष्यम्

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ २-१-४ ॥

ब्रह्मास्य जगतो निमित्तकारणं प्रकृतिश्चेत्यस्य पक्षस्याक्षेपः स्मृतिनिमित्तः परिहृतः ; तर्कनिमित्त इदानीमाक्षेपः परिह्रियते । कुतः पुनरस्मिन्नवधारित आगमार्थे तर्कनिमित्तस्याक्षेपस्यावकाशः ? ननु धर्म इव ब्रह्मण्यप्यनपेक्ष आगमो भवितुमर्हति—भवेदयमवष्टम्भो यदि प्रमाणान्तरानवगाह्य आगममात्रप्रमेयोऽयमर्थः स्यादनुष्ठेयरूप इव धर्मः ; परिनिष्पन्नरूपं तु ब्रह्मावगम्यते ; परिनिष्पन्ने च वस्तुनि प्रमाणान्तरणामस्त्यवकाशो यथा पृथिव्यादिषु ; यथा च श्रुतीनां परस्परविरोधे सत्येकवशेनेतरा नीयन्ते, एवं प्रमाणान्तरविरोधेऽपि तद्वशेनैव श्रुतिर्नीयेत ; दृष्टसाम्येन चादृष्टमर्थं समर्पयन्ती युक्तिरनुभवस्य संनिकृष्यते, विप्रकृ-

प्रकटार्थविवरणम्

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥

अस्यावान्तरसङ्गतिमाह — ब्रह्मास्येति ॥ पूर्वपक्षमुपक्षिपति — कुतः[2] पुनरिति ॥ कस्मान्नास्त्यवसर इत्याशङ्क्यानुमानात्मकतर्कस्यागोचरत्वाद् ब्रह्मण इत्याह—ननु धर्म इवेति ॥ पूर्वपक्षं समाधत्ते—भवेदयमिति ॥ ननु सिद्धत्वेन वेदातिरिक्तप्रमाणगोचरत्वेऽपि प्रमाणानां स्वगोचरशूराणां नास्ति विरोधः ; सत्यपि वा विरोधे वेदानुरोधेनैव मानान्तरं किं न नीयत इत्याशङ्क्याह—यथा च श्रुतीनामिति ॥ यथा प्रधानाप्रधानश्रुतीनां परस्परविरोधे प्रधानानुसारेणाप्रधानश्रुतयो नीयन्ते, तथा मानान्तरविरोधे श्रुतेरप्रामाण्यं युक्तम्, उपजीव्यत्वेन मानान्तरस्य प्राधान्यादित्यर्थः । किञ्च यथा पूर्वत्र प्रत्यक्षश्रुतिविरोधे [3]स्मृतेर्विप्रकृष्टार्थाया अप्रामाण्य[4]मुक्तम्, एवमनुभवसन्निकृष्टतर्कविरोधे विप्रकृष्टायाः श्रुतेरप्रमाण्यमित्याह—दृष्टसाम्येन चेति॥

१. P and A. माक्षिपति
२. A. कथं
३. TM. श्रुतिः
४. T, T[1], P and TM. माण्यं युक्तम्

भाष्यम्

ष्यते श्रुतिः, ऐतिह्यमात्रेण स्वार्थाभिधानात्; अनुभवावसानं च ब्रह्मविज्ञानमविद्याया निवर्तकं मोक्षसाधनं च दृष्टफलतयेष्यते; श्रुतिरपि— "श्रोतव्यो मन्तव्यः" इति श्रवणव्यतिरेकेण मननं विदधती तर्कमप्यत्रादर्तव्यं दर्शयति; अतस्तर्कनिमित्तः पुनराक्षेपः क्रियते "न विलक्षणत्वादस्य" इति ॥

यदुक्तं चेतनं ब्रह्म जगतः कारणं प्रकृतिरिति, तन्नोपपद्यते; कस्मात्? विलक्षणत्वादस्य विकारस्य प्रकृत्याः—इदं हि ब्रह्मकार्यत्वेनाभिप्रेयमाणं जगत् ब्रह्मविलक्षणमचेतनमशुद्धं च दृश्यते; ब्रह्म च जगद्विलक्षणं चेतनं शुद्धं च श्रूयते; न च विलक्षणत्वे प्रकृतिविकारभावो दृष्टः; न हि रुचकादयो विकारा मृत्प्रकृतिका भवन्ति, शरावादयो वा सुवर्णप्रकृतिकाः; मृदैव तु मृदन्विता विकाराः प्रक्रियन्ते, सुवर्णेन च सुवर्णान्विताः; तथेदमपि जगदचेतनं सुखदुःखमोहान्वितं सदचेतनस्यैव सुखदुःखमोहात्मकस्य कारणस्य कार्यं भवितुमर्हति, न विलक्षणस्य ब्रह्मणः। ब्रह्मविलक्षणत्वं चास्य जगतोऽशुद्ध्यचेतनत्व-

प्रकटार्थविवरणम्

ऐतिह्यमात्रेणेति ॥ प्रवादपारम्पर्यमात्रेणेत्यर्थः। किञ्चावश्यं ब्रह्मवादिनापि तर्कोऽपेक्षितव्यः, तमन्तरेणासंभावनानिरासेन फलवन्निश्चयविज्ञानायोगादित्याह—अनुभवावसानं चेति ॥ किञ्च यदि शब्दैकगम्यं ब्रह्म स्यात्, मननविधानं न भवेदित्याह—श्रुतिरपीति ॥

एवमाक्षेपावसरमुक्त्वा पूर्वपक्षसूत्रावयवं योजयति—यदुक्तमित्यादिना ॥ जगन्न ब्रह्मप्रकृतिकम्, तद्विलक्षणत्वात्, यद्यस्माद्विलक्षणं न तत्तत्प्रकृतिकम्, यथा घटादि न तन्तुप्रकृतिकमित्यर्थः। व्यतिरेकमुखेन व्याप्तिं प्रदर्शयति—न च विलक्षणत्व इति ॥ हेत्वसिद्धिमाशङ्क्य परिहरति—ब्रह्मविलक्षणत्वं चास्येति॥एक एव हि स्त्रीपिण्डो युगपत्पतिसपत्न्युपपतीनां प्रीतिपरितापविषादहेतुर्भवति, तथान्येऽपि[1] भावा इत्यशुद्धत्वम्; शुद्धब्रह्मरूपतायां

1. A omits अपि

### भाष्यम्

दर्शनादवगन्तव्यम्—अशुद्धं हि जगत्सुखदुःखमोहात्मकतया प्रतीयेत, प्रीतिपरितापविषादादिहेतुत्वात् स्वर्गनरकाद्युच्चावचप्रपञ्चत्वाच्च ; अचेतनं चेदं जगच्चेतनं प्रति कार्यकारणभावेनोपकरणभावोपगमात् ; न हि साम्ये सत्युपकार्योपकारकभावो भवति ; न हि प्रदीपौ परस्परस्योपकुरुतः । ननु चेतनमपि कार्यकारणं स्वामिभृत्यन्यायेन भोक्तुरुपकरिष्यति ; न, स्वामिभृत्ययोरप्यचेतनांशस्यैव चेतनं प्रत्युपकारकत्वात् ; यो ह्येकस्य चेतनस्य परिग्रहो बुद्ध्यादिरचेतनभागः स एवान्यस्य चेतनस्योपकरोति, न तु स्वयमेव चेतनश्चेतनान्तरस्योपकरोत्यपकरोति वा ; निरतिशया ह्यकर्तारश्चेतना इति सांख्या मन्यन्ते ; तस्मादचेतनं कार्यकारणम् । न च काष्ठलोष्टादीनां चेतनत्वे किंचित्प्रमाणमस्ति ; प्रसिद्धश्चायं चेतनाचेतनविभागो लोके । तस्माद्ब्रह्मविलक्षणत्वान्नेदं जगत्तत्प्रकृतिकम् । योऽपि कश्चिदाचक्षीत—श्रुत्या जगतश्चेतनप्रकृतिकतां तद्बलेनैव समस्तं जगच्चेतनमवगमिष्यामि, प्रकृतिरूपस्य विकारेऽन्वयदर्शनात् ; अविभावनं तु चैतन्यस्य परिणामविशेषाद्भविष्यति ; यथा स्पष्टचैतन्यानामप्यात्मनां स्वापमूर्च्छाद्यवस्थासु चैतन्यं न विभाव्यते,

### प्रकटार्थविवरणम्

चैकरूपत्वप्रसङ्गादप्यशुद्धत्वं जगत इत्यर्थः । अचेतनत्वं च साम्ये सत्युपकार्योपकारकभावायोगादित्याह — अचेतनं चेदमिति ॥ चेतनोपकारकत्वादचेतनमित्यस्य व्यभिचारं शङ्कते—ननु चेतनमपीति ॥ भृत्यदेहस्यैव स्वामिनं प्रत्युपकारकत्वान्नास्ति व्यभिचार इत्याह — न स्वामिभृत्ययोरिति ॥ इतश्चाचेतनं जगदित्याह—न च काष्ठेति ॥ वेदान्तैकदेशिनो मतमुद्भावयति—योऽपि कश्चिदित्यादिना ॥ चेतनप्रकृतिकत्वात् जगच्चेतनं चेत् किमिति चैतन्यं सर्वत्र न व्यज्यत इत्याशङ्क्याह—अविभावनं त्विति ॥ यदुक्तं चेतनत्वसाम्ये

१. T, T[1], TM and A add आशङ्क्य     ३. A कारत्वात्

२. A omits इदं

भाष्यम्

एवं काष्ठलोष्टादीनामपि चैतन्यं न विभावयिष्यते; एतस्मादेव च विभाविताविभावितत्वकृताद्विशेषाद्रूपादिभावाभावाभ्यां च कार्यकारणानामात्मनां च चेतनत्वाविशेषेऽपि गुणप्रधानभावो न विरोत्स्यते; यथा च पार्थिवत्वाविशेषेऽपि मांससूपौदनादीनां प्रत्यात्मवर्तिनो विशेषात्परस्परोपकारित्वं भवति, एवमिहापि भविष्यति; प्रविभागप्रसिद्धिरप्यत एव न विरोत्स्यत इति—तेनापि कथंचिच्चेतनाचेतनत्वलक्षणं विलक्षणत्वं परिहियते। शुद्ध्यशुद्धित्वलक्षणं तु विलक्षणत्वं नैव परिहियते; न चेतरदपि विलक्षणत्वं परिहर्तुं शक्यत इत्याह "तथात्वं च शब्दात्" इति; अनवगम्यमानमेव हीदं लोके समस्तस्य वस्तुनश्चेतनत्वं चेतनप्रकृतिकत्वश्रवणाच्छब्दशरणतया केवलयोत्प्रेक्षेत; तच्च शब्देनैव विरुध्यते, यतः शब्दादपि तथात्वमवगम्यते; तथात्वमिति प्रकृतिविलक्षणत्वं कथयति; शब्द एव "विज्ञानं चाविज्ञानं च" इति कस्यचिद्विभागस्याचेतनतां श्रावयंश्चेतनाद्ब्रह्मणो विलक्षणमचेतनं जगच्छ्रावयति ॥

प्रकटार्थविवरणम्

सत्युपकार्योपकारकभावो न संभवतीति तदप्यविरुद्धमित्याह—एतस्मादेव चेति॥ किञ्च सत्यपि साम्ये प्रतिव्यक्ति स्वभावभेदादुपकार्योपकारकत्वं दृष्टमित्याह—यथा च पार्थिवत्वेति ॥ सूपो मुद्गादि। चेतनाचेतनभेदप्रसिद्धिरप्यभिव्यक्तस्यानभिव्यक्तिभावादेवं[२] न विरुद्धा भवति; अतो वैलक्षण्यमसिद्धमित्यर्थः। तदेतदेकदेशिमतं सांख्यो दूषयति—तेनापीति ॥ अभ्युपगम्य चेतनत्वाचेतनत्ववैलक्षण्यस्य परिहारं वैलक्षण्यान्तरस्यैवे[रमस्त्येव]त्युक्तम्। इदानीं अभ्युपगमं त्यजति—न चेतरदपीति ॥

१. A भावादविरुद्धा    २. A omits अपि

भाष्यम्

ननु चेतनत्वमपि क्वचिदचेतनत्वाभिमतानां भूतेन्द्रियाणां श्रूयते— यथा "मृदब्रवीत्" "आपोऽब्रुवन्" इति, "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" इति चैवमाद्या भूतविषया चेतनत्वश्रुतिः। इन्द्रियविषयापि "ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः" इति, "ते ह वाचमूचुस्त्वं न उद्गायेति" इत्येवमाद्येन्द्रियविषयेति। अत उत्तरं पठति—

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ २-१-५ ॥

तुशब्द आशङ्कामपनुदति। न खलु "मृदब्रवीत्" इत्येवंजातीयकया श्रुत्या भूतेन्द्रियाणां चेतनत्वमाशङ्कनीयम्; यतोऽभिमानिव्यपदेश एषः; मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवता वदनसंवदनादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते, न भूतेन्द्रियमात्रम्; कस्मात्? विशेषानुगतिभ्याम्—विशेषो हि भोक्तॄणां भूतेन्द्रियाणां च चेतनाचेतनप्रविभागलक्षणः प्रागभिहितः; सर्वचेतनतायां चासौ नोपपद्येत; अपि च कौषीतकिनः प्राणसंवादे करणमात्राशङ्काविनिवृत्तयेऽधिष्ठातृचेतनपरिग्रहाय देवताशब्देन विशिंषन्ति—"एता ह वै देवता अहंश्रेयसे विवदमानाः" इति, "ता वा एताः सर्वा देवताः

प्रकटार्थविवरणम्

उत्तरसूत्रस्य[सूत्रनिरस्या]शङ्कामाह— ननु चेतनत्वमपीति ॥ विज्ञानं चाविज्ञानं च मूलकारणमेवाभवदिति वचनमस्पष्टचैतन्याभिप्रायेणापि सङ्गच्छते; वचनान्तरात्तु वदनसंवदनादिचेतनधर्मावगमाच्चेतनत्वं भविष्यतीत्यर्थः॥

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥

वचनान्तरमन्यविषयं न मृदादेश्चेतनत्वं गमयतीत्याह—अभिमानीति ॥ विशेषशब्दस्यार्थान्तरमाह—अपि च कौषीतकिन इति॥ प्राणे प्राणस्य निःश्रेयसं श्रैष्ठ्यं विदित्वा तस्मै बलिहरणादिकं कृतवत्य इत्यर्थः। विशेषपदं व्याख्या-

१. A वचनं मुस्पष्ट चैतन्य     २. T[1]. संवेदनादिति

भाष्यम्

प्राणे निःश्रेयसं विदित्वा" इति च ; अनुगताश्च सर्वत्राभिमानिन्यश्चेतना देवता मन्त्रार्थवादेतिहासपुराणादिभ्योऽवगम्यन्ते—"अग्निर्वाग्भूत्वा मुखं प्राविशत्" इत्येवमादिका च श्रुतिः करणेष्वनुग्राहिकां देवतामनुगतां दर्शयति ; प्राणसंवादवाक्यशेषे च "ते ह प्राणाः प्रजापतिं पितरमेत्योचुः" इति श्रेष्ठत्वनिर्धारणाय प्रजापतिगमनम्, तद्वचनाच्चैकैकोत्क्रमणेनान्वयव्यतिरेकाभ्यां प्राणश्रैष्ठ्यप्रतिपत्तिः, तस्मै बलिहरणम् इति चैवंजातीयकोऽस्मदादिष्विव व्यवहारोऽनुगम्यमानोऽभिमानिव्यपदेशं द्रढयति । "तत्तेज ऐक्षत" इत्यपि परस्या एव देवताया अधिष्ठात्र्याः स्वविकारेष्वनुगताया इयमीक्षा व्यपदिश्यत इति द्रष्टव्यम् । तस्माद्विलक्षणमेवेदं ब्रह्मणो जगत् ; विलक्षणत्वाच्च न ब्रह्मप्रकृतिकमित्याक्षिप्ते प्रतिविधत्ते—

## दृश्यते तु ॥ २-१-६ ॥

तुशब्दः पक्षं व्यावर्तयति । यदुक्तं विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिकमिति, नायमेकान्तः ; दृश्यते हि लोके चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यो विलक्षणानां केशनखादीनामुत्पत्तिः, अचेतनत्वेन च प्रसिद्धेभ्यो गोमयादिभ्यो वृश्चिकादीनाम् । नन्वचेतनान्येव पुरुषादिशरीरा-

प्रकटार्थविवरणम्

यानुगतिं व्याचष्टे—अनुगताश्चेति ॥ "तत्तेज ऐक्षत" इत्यस्य व्याख्यानमीक्षत्यधिकरणे त्वयैव कृतं द्रष्टव्यमित्यर्थः । यस्मान्नास्ति भूतेन्द्रियाणां चेतनत्वं तस्मादिति पूर्वपक्षोपसंहारः ॥

दृश्यते तु ॥

हेतोरनैकान्तिकत्वात् नेदमनुमानं प्रमाणम् । ततो नास्ति समन्वयस्य सादृश्यानुमानेन विरोध इति सिद्धान्ताशयः । तत्रापि सलक्षणयोरेव कार्यकारणभाव इति नानैकान्तिकत्वमित्याह — नन्वचेतनान्येवेति ॥ यद्यप्यचेतनं शरीरं कारणं तथापि तच्चेतनस्याधिकरणं न

१. T and TM. ननु चेत-

A. ननु चेतनान्यत एवेति

भाष्यम्

ण्यचेतनानां केशनखादीनां कारणानि, अचेतनान्येव च वृश्चिकादिशरीराण्यचेतनानां गोमयादीनां कार्याणीति; उच्यते—एवमपि किंचिदचेतनं चेतनस्यायतनभावमुपगच्छति किंचिन्नेत्यस्त्येव वैलक्षण्यम्। महांश्चायं पारिणामिकः स्वभावविप्रकर्षः पुरुषादीनां केशनखादीनां च स्वरूपादिभेदात्, तथा गोमयादीनां वृश्चिकादीनां च। अत्यन्तसारूप्ये च प्रकृतिविकारभाव एव प्रलीयेत। अथोच्येत—अस्ति कश्चित्पार्थिवत्वादिस्वभावः पुरुषादीनां केशनखादिष्वनुवर्तमानो गोमयादीनां वृश्चिकादिष्विति; ब्रह्मणोऽपि तर्हि सत्तालक्षणः स्वभाव आकाशादिष्वनुवर्तमानो दृश्यते। विलक्षणत्वेन च कारणेन ब्रह्मप्रकृतिकत्वं जगतो दूषयता किमशेषस्य ब्रह्मस्वभावस्याननुवर्तनं विलक्षणत्वमभिप्रेयते, उत यस्य कस्यचित्? अथ चैतन्यस्येति वक्तव्यम्—प्रथमे विकल्पे समस्तप्रकृतिविकारोच्छेदप्रसङ्गः; न ह्यसत्यतिशये प्रकृतिविकार इति भवति। द्वितीये चासिद्धत्वम्; दृश्यते हि सत्तालक्षणो ब्रह्मस्वभाव आकाशादिष्वनुवर्तमान इत्युक्तम्। तृतीये तु दृष्टान्ताभावः; किं हि यच्चैतन्येनानन्वितं तदब्रह्मप्रकृतिकं दृष्टमिति ब्रह्मवादिनं प्रत्युदाह्रियेत, समस्तस्य

प्रकटार्थविवरणम्

केशनखादीत्यस्त्येव वैलक्षण्यमित्याह—उच्यत इति॥ किञ्चाचेतनत्वे समानेऽपि परिणामकृतो महान् विशेषोऽस्तीत्याह—महांश्चायमिति॥ विपक्षे बाधकमाह—अत्यन्तसारूप्ये चेति॥ पुनः दृष्टान्तवैषम्यमाशङ्क्य साम्यमाह—अथोच्येतास्तीत्यादिना॥ पूर्वं साधारणस्यैव हेतोः दूषणमुक्त्वा[1] अर्थविशेषे दोषविशेषं वक्तुं विकल्पयति—विलक्षणत्वेन चेत्यादिना॥ समस्तस्य ब्रह्मस्वभावस्याननुवर्तनात् जगत् ब्रह्मप्रकृतिकं न भवतीत्येवं वदता सर्वथा साम्ये[2] प्रकृतिविकारभाव इत्युक्तं स्यात्; तदसङ्गतमित्याह—प्रथमे विकल्प इति॥ द्वितीयतृतीययोरसिद्धिदृष्टान्ताभावौ। न मृदादिर्दृष्टान्तः परस्यासिद्धेः

१. A. उक्त्वा विशेषे       २. A. सर्वसाम्ये

भाष्यम्

वस्तुजातस्य ब्रह्मप्रकृतिकत्वाभ्युपगमात् । आगमविरोधस्तु प्रसिद्ध एव, चेतनं ब्रह्म जगतः कारणं प्रकृतिश्च—इत्यागमतात्पर्यस्य प्रसाधितत्वात् । यत्तूक्तं परिनिष्पन्नत्वाद्ब्रह्मणि प्रमाणान्तराणि संभवेयुरिति, तदपि मनोरथमात्रम्; रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः; लिङ्गाद्यभावाच्च नानुमानादीनाम्; आगममात्रसमधिगम्य एव त्वयमर्थो धर्मवत्; तथा च श्रुतिः—"नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ" इति। "को अद्धा वेद क इह प्रवोचत्," "इयं विसृष्टिर्यत आबभूव" इति चैते ऋचौ सिद्धानामपीश्वराणां दुर्बोधतां जगत्कारणस्य दर्शयतः, स्मृतिरपि भवति—"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" इति, "अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते" इति.

"न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥"

इति चैवंजातीयका । यदपि श्रवणव्यतिरेकेण मननं विदधच्छब्द एव तर्कमप्यादर्तव्यं दर्शयतीत्युक्तम्, नानेन मिषेण शुष्कतर्कस्यात्रात्मलाभः

प्रकटार्थविवरणम्

सर्वेष्वपि पक्षेष्वागमविरोधः स्पष्ट इत्याह—आगमविरोधस्त्विति ॥ परोक्तमनूद्य पूर्वोक्तमेव स्मारयति—यत्तूक्तमित्यादिना ॥ आपनेया आधेया । अन्येन वेदानुसारिणा आचार्येण प्रोक्ता ब्रह्ममतिः सम्यगापरोक्ष्यफलाय[स्वज्ञानाय] भवति । भो प्रेष्ठ प्रियतम । अद्धा साक्षात् । स्वयमेवागमनिरपेक्षतया को वेदेमम्; को वास्मिन्नर्थे प्रवक्ता स्यात् इयं विचित्रा सृष्टिर्यत आविर्भूतेत्यर्थः । मिषेण मननविधानव्याजेनेत्यर्थः॥ शुष्कतर्कस्येति ॥ प्रमाणाश्रयणेविधुरस्येत्यर्थः । श्रुत्या तस्ये

१. TM and A. स्फुटः
२. A omits प्रेष्ठ
३. A भयविधुर

भाष्यम्

संभवति। श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनुभवाङ्गत्वेनाश्रीयते—स्वप्नान्तबुद्धान्तयोरुभयोरितरेतरव्यभिचारादात्मनोऽनन्वागतत्वम्, संप्रसादे च प्रपञ्चपरित्यागेन सदात्मना संपत्तेर्निष्प्रपञ्चसदात्मत्वम्, प्रपञ्चस्य ब्रह्मप्रभवत्वात्कार्यकारणानन्यत्वन्यायेन ब्रह्माव्यतिरेकः — इत्येवंजातीयकः; "तर्काप्रतिष्ठानात्" इति च केवलस्य तर्कस्य विप्रलम्भकत्वं दर्शयिष्यति। योऽपि चेतनकारणश्रवणबलेनैव समस्तस्य जगतश्चेतनतामुत्प्रेक्षेत, तस्यापि "विज्ञानं चाविज्ञानं च" इति चेतनाचेतनविभागश्रवणं विभावनाविभावनाभ्यां चैतन्यस्य शक्यत एव योजयितुम्। परस्यैव त्विदमपि विभागश्रवणं न युज्यते; कथम्? परमकारणस्य ह्यत्र समस्तजगदात्मना समवस्थानं श्राव्यते 'विज्ञानं चाविज्ञानं चाभवत्' इति; तत्र यथा चेतनस्याचेतनभावो नोपपद्यते विलक्षणत्वात्, एवमचेतन-

प्रकटार्थविवरणम्

प्रतिपादिते अनु पश्चात् पुरुषदोषनिरासाय गृहीतः श्रुत्यनुगृहीतः कोऽसावित्याशङ्क्याह—स्वप्नान्तेत्यादिना ॥ अवस्थावत्त्वेन जीवस्य ब्रह्मत्वासंभवाशङ्कायां स्वप्नजागरितयोः परस्परव्यभिचारित्वादात्मनः स्वाभाविकधर्मत्वे तदयोगादवस्थाद्वयेनात्मनोऽसंपृक्तत्वम्, देहादिप्रपञ्चतादात्म्येन भासमानस्य न कदाचिन्निष्प्रपञ्चात्मता संभवतीत्यसंभवाशङ्कापाकरणाय सुषुप्तोपन्यासः, द्वैतग्राहकप्रमाणविरोधात् अद्वितीयात्मतासंभवाशङ्कायां तज्जत्वादिहेतुना ब्रह्माव्यतिरिक्तवस्तुस्वभाव इत्येवंरूप एव तर्क आश्रीयत इत्यर्थः। इतश्च न मन्तव्यश्रुत्या शुष्कतर्कापेक्षणमित्याह—तर्काप्रतिष्ठानादिति चेति ॥ तस्मादतीन्द्रियेऽर्थे शुष्कतर्कस्याप्रवेशान्न तद्विरोधः समन्वयस्येति सिद्धान्तमुक्त्वा, यदेकदेशिनो दूषणमुक्तं साङ्ख्येन न तत्तस्य, किन्तु सांख्यस्यैवेत्याह—योऽपीत्यादिना ॥ ननु स्वपक्षे "विज्ञानं चाविज्ञानं च" इति यथाश्रुतवैलक्षण्याभ्युपगमे कथम-

१. T. तीति सं

भाष्यम्

स्यापि चेतनभावो नोपपद्यते । प्रत्युक्तत्वात्तु विलक्षणत्वस्य यथाश्रुत्येव चेतनं कारणं ग्रहीतव्यं भवति ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ २-१-७ ॥

यदि चेतनं शुद्धं शब्दादिहीनं च ब्रह्म तद्विपरीतस्याचेतनस्याशुद्धस्य शब्दादिमतश्च कार्यस्य कारणमिष्येत, असत्तर्हि कार्यं प्रागुत्पत्तेरिति प्रसज्येत ; अनिष्टं चैतत्सत्कार्यवादिनस्तवेति चेत्—नैष दोषः, प्रतिषेधमात्रत्वात् ; प्रतिषेधमात्रं हीदम् ; नास्य प्रतिषेधस्य प्रतिषेध्यमस्ति ; न ह्ययं प्रतिषेधः प्रागुत्पत्तेः सत्त्वं कार्यस्य प्रतिषेद्धुं शक्नोति । कथम् ? यथैव हीदानीमपीदं कार्यं कारणात्मना सदेवं प्रागुत्पत्तेरपीति गम्यते ; न हीदानीमपीदं कार्यं कारणात्मानमन्तरेण स्वतन्त्रमेवास्ति—"सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" इत्यादिश्रवणात् ; कारणात्मना तु सत्त्वं कार्यस्य प्रागुत्पत्तेरविशिष्टम् । ननु शब्दादिहीनं ब्रह्म जगतः कारणम्—बाढम्, न तु शब्दादिमत्कार्यं कारणात्मना हीनं

प्रकटार्थविवरणम्

सोद्धारेत्याशङ्क्याह—प्रत्युक्तत्वात्त्विति ॥ प्रसिद्धित्वाभावेऽप्यनैकान्तिकत्वेन परिहृतत्वादित्यर्थः ॥

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥

वैलक्षण्याभ्युपगमेऽपसिद्धान्तमापादयति — यदि चेतनमित्यादिना ॥ स्वरूपेणानिर्वाच्यस्य[1] कार्यस्य कारणतादात्म्येन तत्सत्तया सत्त्वमिति हि सत्कार्यवादोऽस्मदिष्टः ; तस्य न काचित्क्षतिर्वैलक्षण्येऽपीत्याह — नैष दोष इत्यादिना ॥ कारणतादात्म्यमपि न संभाव्यते, विरुद्धधर्माक्रान्तत्वादित्याह—ननु शब्दादिहीनमिति ॥ शुक्तिरूप्ययोर्विरुद्धरूपत्वेऽपि यथा मिथ्या तादात्म्यं तथात्रापि भविष्यति कल्पितस्यातन्त्र्यादर्शनादित्याह[2]—बाढमित्यादिना ॥

१. T, TM. and P. वाच्यकार्यस्य    २. A omits सत्कार्य...बाढमित्यादिना

भाष्यम्

प्रागुत्पत्तेरिदानीं वास्ति ; तेन न शक्यते वक्तुं प्रागुत्पत्तेरसत्कार्यमिति । विस्तरेण चैतत्कार्यकारणानन्यत्ववादे वक्ष्यामः ॥

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ २-१-८ ॥

अत्राह—यदि स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वाशुद्ध्यादिधर्मकं कार्यं ब्रह्मकारणमभ्युपगम्येत, तदपीतौ प्रलये प्रतिसंसृज्यमानं कार्यं कारणाविभागमापद्यमानं कारणमात्मीयेन धर्मेण दूषयेदिति— अपीतौ कारणस्यापि ब्रह्मणः कार्यस्येवाशुद्ध्यादिरूपप्रसङ्गात् सर्वज्ञं ब्रह्म जगत्कारणमित्यसमञ्जसमिदमौपनिषदं दर्शनम् । अपि च समस्तस्य विभागस्याविभागप्राप्तेः पुनरुत्पत्तौ नियमकारणाभावाद्भोक्तृभोग्यादिविभागेनोत्पत्तिर्न प्राप्नोतीत्यसमञ्जसम् । अपि च भोक्तॄणां परेण ब्रह्मणा अविभागं गतानां कर्मादिनिमित्तप्रलयेऽपि पुनरुत्पत्तावभ्युपगम्यमानायां मुक्तानामपि पुनरुत्पत्तिप्रसङ्गादसमञ्जसम् । अथेदं जगदपीतावपि विभक्तमेव परेण ब्रह्मणावतिष्ठेत, एवमप्यपीतिश्च न संभवति, कारणाव्यतिरिक्तं च कार्यं न संभवतीत्यसमञ्जसमेवेति ॥

प्रकटार्थविवरणम्

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥

असत्कार्यवादपरिहाराय कार्यस्य कारणतादात्म्यं चेदिष्यते तर्ह्यनिष्टान्तरमापद्यते, कारणसत्तया कार्यसत्त्ववत्कार्याशुद्धत्वेन कारणस्याशुद्धत्वप्रसङ्गादित्याह—अत्राहेत्यादिना ॥ सूत्रस्य योजनान्तरमाह—अपि च समस्तस्येति ॥ तद्वत्प्रसङ्गादिति कारणवत् सर्वस्यैकरू[१]प्यप्रसङ्गादित्यर्थः । प्रकारान्तरमाह—अपि च भोक्तॄणामिति ॥ उक्तदोषभयादविभागानभ्युपगमे दोषान्तरमाह—अथेदं जगदपीतावपीति ॥

१. A. रूप

भाष्यम्

अत्रोच्यते—

## न तु दृष्टान्तभावात् ॥ २-१-९ ॥

नैवास्मदीये दर्शने किंचिदसामञ्जस्यमस्ति । यत्तावदभिहितम्—कारणमपिगच्छत्कार्यं कारणमात्मीयेन धर्मेण दूषयेदिति, तददूषणम्; कस्मात्? दृष्टान्तभावात्—सन्ति हि दृष्टान्ता यथा कारणमपिगच्छत्कार्यं कारणमात्मीयेन धर्मेण न दूषयति; तद्यथा—शरावादयो मृत्प्रकृतिका विकारा विभागावस्थायामुच्चावचमध्यमप्रभेदाः सन्तः पुनः प्रकृतिमपिगच्छन्तो न तामात्मीयेन धर्मेण संसृजन्ति; रुचकादयश्च सुवर्णविकारा अपीतौ न सुवर्णमात्मीयेन धर्मेण संसृजन्ति; पृथिवीविकारश्चतुर्विधो भूतग्रामो न पृथिवीमपीतावात्मीयेन धर्मेण संसृजति; त्वत्पक्षस्य तु न कश्चिद्दृष्टान्तोऽस्ति; अपीतिरेव हि न संभवेत् यदि कारणे कार्यं स्वधर्मेणैवावतिष्ठेत; अनन्यत्वेऽपि कार्यकारणयोः, कार्यस्य कारणात्मत्वं न तु कारणस्य कार्यात्मत्वम् "आरम्भणशब्दादिभ्यः" इत्यत्र वक्ष्यामः । अत्यल्पं चेदमुच्यते—कार्यमपीतावात्मीयेन धर्मेण कारणं संसृजेदिति;

प्रकटार्थविवरणम्

दृष्टान्तबलेन परिहरति—अत्रोच्यत इति ॥

न तु दृष्टान्तभावात् ॥

कार्यधर्मेण कारणं न संस्पृश्यत इत्यत्र बहवो दृष्टान्ताः सन्ति; स्पृश्यत इत्यत्र तु न कश्चिदपि दृष्टान्तोऽस्तीति भावः । ननु यथा हिङ्गुद्रव्यं मुद्रादौ क्षिप्तं तेनाविभागमापद्यमानं स्वगन्धेन तं दूषयति तथास्त्वित्याशङ्क्याह—अपीतिरेव हीति ॥ हिङ्गुद्रव्यस्य स्वधर्मसहितस्य विद्यमानत्वात् भवेद्दूषकत्वं न कार्यप्रलये तथास्तीत्यर्थः । ननु अभेदस्याविशिष्टत्वात् कारणसत्तया सत्त्ववत्स्यादित्याशङ्क्याह—अनन्यत्वेऽपीति ॥ विशेषणमतितुच्छमित्याह—अत्यल्पं चेदमिति ॥ विवर्तवादानुसारेण दृष्टा-

१. A omits. इत्यत्र...स्पृश्यते

भाष्यम्

स्थितावपि हि समानोऽयं प्रसङ्गः, कार्यकारणयोरनन्यत्वाभ्युपगमात्; "इदं सर्वं यदयमात्मा" "आत्मैवेदं सर्वम्" "ब्रह्मैवेदममृतं पुरस्तात्" "सर्वं खल्विदं ब्रह्म" इत्येवमाद्याभिर्हि श्रुतिभिरविशेषेण त्रिष्वपि कालेषु कार्यस्य कारणादनन्यत्वं श्राव्यते; तत्र यः परिहारः कार्यस्य तद्धर्माणां चाविद्याध्यारोपितत्वान्न तैः कारणं संसृज्यत इति, अपीतावपि स समानः। अस्ति चायमपरो दृष्टान्तः—यथा स्वयं प्रसारितया मायया मायावी त्रिष्वपि कालेषु न संस्पृश्यते, अवस्तुत्वात्, एवं परमात्मापि संसारमायया न संस्पृश्यत इति; यथा च स्वप्नदृगेकः स्वप्नदर्शनमायया न संस्पृश्यते, प्रबोधसंप्रसादयोरनन्वागतत्वात्, एवमवस्थात्रयसाक्ष्येकोऽव्यभिचार्यवस्थात्रयेण व्यभिचारिणा न संस्पृश्यते; मायामात्रं ह्येतत्, यत्परमात्मनोऽवस्थात्रयात्मनावभासनम्, रज्ज्वा इव सर्पादिभावेनेति; अत्रोक्तं वेदान्तार्थसंप्रदायविद्भिराचार्यैः—

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा॥" इति।

तत्र यदुक्तमपीतौ कारणस्यापि कार्यस्येव स्थौल्यादिदोषप्रसङ्ग इति, एतदयुक्तम्। यत्पुनरेतदुक्तम्—समस्तस्य विभागस्याविभागप्राप्तेः पुनर्विभागेनोत्पत्तौ नियमकारणं नोपपद्यत इति, अयमप्यदोषः,

प्रकटार्थविवरणम्

न्तमाह—अस्ति चायमपर इति॥ यत्परमात्मन इति॥ अविद्यया[ याया ] प्रतिबिम्बिततयापन्नजीवभावस्येत्यर्थः। यदा मायावादे जीवस्यापि तत्त्वतोऽवस्थात्रयसंबन्धो नास्ति तदा किं वक्तव्यम्? परमात्मनः प्रपञ्चसंबन्धस्तत्त्वतो नास्तीत्याह—तत्र यदुक्तमिति॥ चोद्यान्तरनिराकरणेऽपि पुनः सूत्रं योजयति—यत्पुनरेतदुक्तमित्यादिना॥

१. A. जीवावस्थस्य २. A. प्रपञ्चस्तत्त्वतो

भाष्यम्

दृष्टान्तभावादेव—यथा हि सुषुप्तिसमाध्यादावपि सत्यां स्वाभाविक्यामविभागप्राप्तौ मिथ्याज्ञानस्यानपोदितत्वात्पूर्ववत्पुनः प्रबोधे विभागो भवति, एवमिहापि भविष्यति; श्रुतिश्चात्र भवति—"इमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति, त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति" इति; यथा ह्यविभागेऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धो विभागव्यवहारः स्वप्नवदव्याहतः स्थितो दृश्यते, एवमपीतावपि मिथ्याज्ञानप्रतिबद्धैव विभागशक्तिरनुमास्यते। एतेन मुक्तानां पुनरुत्पत्तिप्रसङ्गः प्रत्युक्तः, सम्यग्ज्ञानेन मिथ्याज्ञानस्यापोदितत्वात्। यः पुनरयमन्तेऽपरो विकल्प उत्प्रेक्षितः—अथेदं जगदपीतावपि विभक्तमेव परेण ब्रह्मणावतिष्ठेतेति, सोऽप्यनभ्युपगमादेव प्रतिषिद्धः। तस्मात्समञ्जसमिदमौपनिषदं दर्शनम् ॥

# स्वपक्षदोषाच्च ॥ २-१-१० ॥

स्वपक्षे चैते प्रतिवादिनः साधारणा दोषाः प्रादुःष्युः; कथमित्युच्यते—यत्तावदभिहितम्, विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिकमिति, प्रधानप्रकृतिकतायामपि समानमेतत्, शब्दादिहीनात्प्रधानाच्छब्दादिमतो जगत उत्पत्त्यभ्युपगमात्; अत एव च विलक्षणकार्योत्पत्त्यभ्युपगमात्समानः प्रागुत्पत्तेरसत्कार्यवादप्रसङ्गः; तथापीतौ कार्यस्य कारणावि-

प्रकटार्थविवरणम्

स्वपक्षदोषाच्च ॥

अभ्युपगम्य दोषान् पर्यहार्षीदाचार्यः। अधुना दोषवत्त्वमेव नास्ति सर्वसंमतत्वेन गुणत्वादित्याह—स्वपक्षदोषाच्चेति ॥ उक्तं हि—

"यत्रोभयोः समो दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोक्तव्यः तादृगर्थविचारणे ॥" इति ॥

पुरुषस्योपादानं परिहारो भोगसाधनमिन्द्रियार्थमित्यर्थः ॥

भाष्यम्

भागाभ्युपगमात्तद्वत्प्रसङ्गोऽपि समानः ; तथा मृदितसर्वविशेषेषु विकारेष्वपीतावविभागात्मतां गतेषु, इदमस्य पुरुषस्योपादानमिदमस्येति प्राक्प्रलयात्प्रतिपुरुषं ये नियता भेदाः, न ते तथैव पुनरुत्पत्तौ नियन्तुं शक्यन्ते, कारणाभावात् ; विनैव कारणेन नियमेऽभ्युपगम्यमाने कारणाभावसाम्यान्मुक्तानामपि पुनर्बन्धप्रसङ्गः ; अथ केचिद्भेदा अपीतावविभागमापद्यन्ते, केचिन्नेति चेत्—ये नापद्यन्ते, तेषां प्रधानकार्यत्वं न प्राप्नोति—इत्येवमेते दोषाः साधारणत्वान्नान्यतरस्मिन्पक्षे चोदयितव्या भवन्तीति—अदोषतामेवैषां द्रढयति—अवश्याश्रयितव्यत्वात् ॥

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ २-१-११ ॥

इतश्च नागमगम्येऽर्थे केवलेन तर्केण प्रत्यवस्थातव्यम् ; यस्मान्निरागमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति, उत्प्रेक्षाया निरङ्कुशत्वात् ; तथाहि—कैश्चिदभियुक्तैर्यत्नेनोत्प्रेक्षितास्तर्का अभियुक्ततरैरन्यैराभास्यमाना दृश्यन्ते ; तैरप्युत्प्रेक्षिताः सन्तस्ततोऽन्यैराभास्यन्त

प्रकटार्थविवरणम्

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥

किञ्च तर्कस्य संभावितदोषत्वादपि न निरस्तसमस्तदोषस्य तद्विरोधेऽप्यप्रामाण्यमित्याह—तर्काप्रतिष्ठानादिति ॥ कः पुनस्तर्को नाम? न तावत्प्रमाणम्, बाह्यादिप्रदेशस्थत्वात्[बाह्यादिप्रदेशवत्त्वात्] पुरुषेणानेन भवितव्यमिति संभावनामात्रबुद्धिहेतुत्वात्, संभावितनिश्चयस्तु प्रमाणादेव; नापि संशयो भवितव्यमित्यंशेन ततो व्यतिरेकात्; न च विपर्ययः न भवत्येवेति बाधानवगमात्; नापि स्मृतिः असंस्कारमात्रजत्वात्; परि-

१. T omits समस्त

२. T, T¹, P and TM. बाह्यादि

३. T. नास्ति

भाष्यम्

इति न प्रतिष्ठितत्वं तर्काणां शक्यमाश्रयितुम्, पुरुषमतिवैरूप्यात् । अथ कस्यचित्प्रसिद्धमाहात्म्यस्य कपिलस्य चान्यस्य वा संमतस्तर्कः प्रतिष्ठित इत्याश्रीयेत — एवमप्यप्रतिष्ठितत्वमेव प्रसिद्धमाहात्म्यानुमतानामपि तीर्थकराणां कपिलकणभुक्प्रभृतीनां परस्परविप्रतिपत्तिदर्शनात् । अथोच्येत—अन्यथा वयमनुमास्यामहे, यथा नाप्रतिष्ठादोषो भविष्यति ; न हि प्रतिष्ठितस्तर्क एव नास्तीति शक्यते वक्तुम् ; एतदपि हि तर्काणामप्रतिष्ठितत्वं तर्केणैव प्रतिष्ठाप्यते, केषांचित्तर्काणामप्रतिष्ठितत्वदर्शनेनान्येषामपि तज्जातीयकानां तर्काणामप्रतिष्ठितत्वकल्पनात् ; सर्वतर्काप्रतिष्ठायां च लोकव्यवहारोच्छेदप्रसङ्गः ; अतीतवर्तमानाध्वसाम्येन ह्यना-

प्रकटार्थविवरणम्

शेषात् प्रमाणादिविवेचकः प्रत्ययविशेषस्तर्कः; तस्य च केवलस्यान्यवस्थितत्वं दृश्यते, पुरुषमतिवैचित्र्यादित्यर्थः । पुरुषविशेषगौरवात् तर्कविशेषे विश्वासो भविष्यतीत्याह—अथ कस्यचिदिति ॥ भवेदेवं विश्वासो यद्येक एव महात्मा स्यात्, न तदस्तीत्याह— एवमपीति ॥ सूत्रस्य पूर्वपक्षभागं व्याचष्टे—अथोच्येतेत्यादिना ॥ यद्यपि व्यभिचारिणो विलक्षणत्वादिहेतोरप्रतिष्ठितत्वम्, तथापि यस्य निरुपाधिकः संबन्धोऽविनाभावोऽस्ति विपक्षबाधकश्च सहकारी, तथाविधो हेतुः प्रतिष्ठितो भविष्यतीत्यर्थः । ननु विमतस्तर्कोऽप्रतिष्ठितः, तर्कत्वात्, संप्रतिपन्नवत्, इत्यनुमीयतामप्रतिष्ठितत्वं तस्यापीत्याशङ्क्याह—न हि प्रतिष्ठित इति ॥ येन हेतुना त्वमप्रतिष्ठितत्वं सिसाधयिषसि स किं प्रतिष्ठितो न वा ? प्रथमे सिद्धं नस्समीहितम् । चरमे त्वप्रतिष्ठितत्वासिद्धौ प्रतिष्ठितत्वसिद्धिरिति भावः । इतश्च तर्कः प्रतिष्ठित इत्याह— सर्वतर्काप्रतिष्ठायां चेति ॥ अतीतवर्तमानभोजनादेः समीहितसाधनत्वमनुभूया-

१. TM. विवेकः
२. A. स्याप्यनवस्थितत्वं
३. A omits अथ
४. TM and A. चिकसंब
५. T, T[1] and P. पिनाभावो
६. A. प्रतिष्ठितायां
७. A omits साधन

भाष्यम्

गतेऽप्यध्वनि सुखदुःखप्राप्तिपरिहाराय प्रवर्तमानो लोको दृश्यते ; श्रुत्यर्थविप्रतिपत्तौ चार्थाभासनिराकरणेन सम्यगर्थनिर्धारणं तर्केणैव वाक्यवृत्तिनिरूपणरूपेण क्रियते ; मनुरपि चैवं मन्यते—

"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥" इति ।
"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥"

इति च ब्रुवन् ; अयमेव च तर्कस्यालंकारो यदप्रतिष्ठितत्वं नाम ; एवं हि सावद्यतर्कपरित्यागेन निरवद्यस्तर्कः प्रतिपत्तव्यो भवति ; न हि पूर्वजो मूढ आसीदित्यात्मनापि मूढेन भवितव्यमिति किंचिदस्ति प्रमाणम् ; तस्मान्न तर्काप्रतिष्ठानं दोष इति चेत्—एवमप्यविमोक्षप्रसङ्गः ; यद्यपि क्वचिद्विषये तर्कस्य प्रतिष्ठितत्वमुपलक्ष्यते, तथापि प्रकृते तावद्विषये प्रसज्यत एवाप्रतिष्ठितत्वदोषादनिर्मोक्षस्तर्कस्य ; न हीदमतिगम्भीरं भावयाथात्म्यं मुक्तिनिबन्धनमागममन्तरेणोत्प्रेक्षितुमपि शक्यम् ; रूपाद्य-

प्रकटार्थविवरणम्

गामिन्यपि तज्जातीयत्वेनेष्टसाधनत्वमनुमाय प्रवर्तते, अनिष्टसाधनत्वं चानुमाय निवर्तते ; तर्कस्याप्रतिष्ठायां तदभावः प्रसज्यत इति भावः । किञ्च तर्कस्याप्रतिष्ठायां बादरायणस्य शारीरकप्रणयनमपि न स्यादित्याह — श्रुत्यर्थविप्रतिपत्तौ चेति ॥ मनुरपि तर्कविशेषस्यादरणीयतां मन्यत इत्याह — मनुरपीति ॥ किञ्च तर्काप्रतिष्ठितत्वं न दोषाय, अन्यथा पूर्वपक्षाभावप्रसङ्गादित्याह — अयमेव च तर्कस्येति ॥ सिद्धान्तभागमवतार्य व्याचष्टे — यद्यपि क्वचिदित्यादिना ॥ नास्माभिरपि सर्वस्यैव तर्कस्याप्रतिष्ठितत्वमुच्यते, किन्त्वतीन्द्रियार्थेन लिङ्गस्याविनाभावग्रहणासंभवात् तत्र सामान्यतोदृष्टस्य स्वात-

१. A. अप्रतिष्ठिततायां  २. A. किंच

भाष्यम्

भावाद्धि नायमर्थः प्रत्यक्षगोचरः, लिङ्गाद्यभावाच्च नानुमानादीनामिति चावोचाम। अपि च सम्यग्ज्ञानान्मोक्ष इति सर्वेषां मोक्षवादिनामभ्युपगमः; तच्च सम्यग्ज्ञानमेकरूपं वस्तुतन्त्रत्वात्; एकरूपेण ह्यवस्थितो योऽर्थः स परमार्थः, लोके तद्विषयं ज्ञानं सम्यग्ज्ञानमित्युच्यते— यथाग्निरुष्ण इति; तत्रैवं सति सम्यग्ज्ञाने पुरुषाणां विप्रतिपत्तिरनुपपन्ना; तर्कज्ञानानां त्वन्योन्यविरोधात्प्रसिद्धा विप्रतिपत्तिः; यद्धि केनचित्तार्किकेणेदमेव सम्यग्ज्ञानमिति प्रतिष्ठापितम्, तदपरेण व्युत्थाप्यते; तेनापि प्रतिष्ठापितं ततोऽपरेण व्युत्थाप्यत इति प्रसिद्धं लोके; कथमेकरूपानवस्थितविषयं तर्कप्रभवं सम्यग्ज्ञानं भवेत्; न च प्रधानवादी तर्कविदामुत्तम इति सर्वैस्तार्किकैः परिगृहीतः, येन तदीयं मतं सम्यग्ज्ञानमिति प्रतिपद्येमहि; न च शक्यन्तेऽतीतानागतवर्तमानास्तार्किका एकस्मिन्देशे काले च समाहर्तुम्, येन तन्मतिरेकरूपैकार्थविषया सम्यङ्मतिरिति स्यात्; वेदस्य तु नित्यत्वे विज्ञानोत्पत्तिहेतुत्वे च सति व्यवस्थितार्थविषयत्वोपपत्तेः, तज्जनितस्य ज्ञानस्य सम्यक्त्वमतीतानागतवर्तमानैः सर्वैरपि तार्किकैरपह्नोतुमशक्यम्; अतः सिद्धमस्यैवौपनिषदस्य ज्ञानस्य सम्यग्ज्ञानत्वम्; अतोऽन्यत्र सम्यग्ज्ञान-

प्रकटार्थविवरणम्

त्वेन प्रामाण्यासंभवात् अप्रतिष्ठितत्वमननुप्रवेश इत्यर्थः। एवमप्यनिर्मोक्षप्रसङ्ग इत्यस्यार्थान्तरमाह — अपि च सम्यग्ज्ञानादिति॥ यद्यप्यतीन्द्रिये तर्कस्यास्ति प्रवेशः, एवमप्यविमोक्ष एव स्यात्। तर्कोत्थस्य परस्परपराहतत्वेनानिश्चितार्थत्वादित्यर्थः। ननु तर्हि वेदप्रभवविज्ञानं न सम्यग्ज्ञानम्, तत्रापि कदाचित्कस्यचिद्विप्रतिपत्तेरित्याशङ्क्याह — वेदस्य तु नित्यत्व इति॥ वेदस्य स्वरसेन सम्यग्ज्ञानहेतुतैव; अन्यथाज्ञानं तु पुरुषस्य

१. A omits प्रामाण्य .पराहतत्वेन

भाष्यम्

त्वानुपपत्तेः संसाराविमोक्ष एव प्रसज्येत । अत आगमवशेनागमानुसारितर्कवशेन च चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेति स्थितम् ॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ २-१-१२ ॥

वैदिकस्य दर्शनस्य प्रत्यासन्नत्वाद्गुरुतरतर्कबलोपेतत्वाद्वेदानुसारिभिश्च कैश्चिच्छिष्टैः केनचिदंशेन परिगृहीतत्वात्प्रधानकारणवादं तावद्व्यपाश्रित्य यस्तर्कनिमित्त आक्षेपो वेदान्तवाक्येषूद्भावितः, स परिहृतः ; इदानीमण्वादिवादव्यपाश्रयेणापि कैश्चिन्मन्दमतिभिर्वेदान्तवाक्येषु पुनस्तर्कनिमित्त आक्षेप आशङ्क्यत इत्यतः प्रधानमल्लनिबर्हणन्यायेनातिदि-

प्रकटार्थविवरणम्

तात्पर्याज्ञानादिति भावः । यस्मात्तर्कोऽप्रतिष्ठितः, तर्काज्ञानाच्च न मोक्षसंभवः तत इत्युपसंहरति—अत आगमवशेनेति ॥

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥

पूर्वोत्तराधिकरणयोरुपदेशातिदेशभावेन संबन्धे कारणमाह — वैदिकस्येति[1] ॥ ब्रह्मचैतन्यं जगत्समवायिकारणस्य विशेषगुणो न भवति, कार्ये समानजातीयगुणानारम्भकत्वात् ; यः कार्ये समानजातीयगुणानारम्भको न भवति नासौ तत्समवायिकारणस्य विशेषगुणः[2], यथा[3] तन्तुगतं शौक्ल्यं न घटसमवायिकारणस्य विशेषगुण इत्यनुमानविरोधं कश्चिदाशङ्कतेत्याह — पुनस्तर्कनिमित्त इति ॥ चेतनाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विषयः । तस्य वैशेषिकानुमानविरोधोऽस्त्युत नेति सन्देहः । सांख्यानुमानेऽनैकान्तिकत्वदोषवद्वैशेषिकानुमाने दोषानुपलम्भादस्ति विरोध इति पूर्वः पक्षः ।

१. T, T¹, P and TM omit इति
२. A adds इति
३. A omits यथा...कत्वदोषव

भाष्यम्

श्रुति । परिगृह्यन्त इति परिग्रहाः ; न परिग्रहा अपरिग्रहाः ; शिष्टानामपरिग्रहाः शिष्टापरिग्रहाः ; एतेन प्रकृतेन प्रधानकारणवादनिराकरणकारणेन शिष्टैर्मनुव्यासप्रभृतिभिः केनचिदंशेनापरिगृहीता येऽण्वादिकारणवादाः, तेऽपि प्रतिषिद्धतया व्याख्याता निराकृता द्रष्टव्याः ; तुल्यत्वान्निराकरणकारणस्य नात्र पुनराशङ्कितव्यं किंचिदस्ति ; तुल्यमत्रापि परमगम्भीरस्य जगत्कारणस्य तर्कानवगाह्यत्वम्, तर्कस्याप्रतिष्ठितत्वम्, अन्यथानुमानेऽप्यविमोक्षः, आगमविरोधश्च—इत्येवंजातीयकं निराकरणकारणम् ॥

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ २-१-१३ ॥

अन्यथा पुनर्ब्रह्मकारणवादस्तर्कबलेनैवाक्षिप्यते । यद्यपि श्रुतिः प्रमाणं स्वविषये भवति, तथापि प्रमाणान्तरेण विषयापहारेऽ-

प्रकटार्थविवरणम्

सिद्धान्तं सूत्रयोजनया दर्शयति—परिगृह्यन्त इत्यादिना ॥ आगमविरोधश्चेति ॥ चकारात् गोमयश्यामत्वेऽनैकान्तिको हेतुः, तस्य कपिले वृश्चिके समानजातीयगुणानारम्भकत्वाद्द्रष्टव्यः² ॥

भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥

संबन्धमाह—अन्यथा पुनरिति ॥ ननु पूर्वं शब्दैकसमधिगम्ये नास्ति तर्कनिमित्त आक्षेप इत्युक्तम् ; कथं पुनराशङ्केति तत्राह—यद्यपि श्रुतिरिति ॥ "आदित्यो यूपः" इत्यादौ प्रमाणान्तरेण विषयापहारेऽन्यपरता दृष्टा । अतः श्रुत्यर्थे प्रमाणान्तरविरोधो नास्तीति न नियम इति भावः । यच्चोक्तं

१. A. सिद्धान्तसूत्र
२. TM. द्रष्टव्यम्
T, T¹ and P. द्रष्टव्या
३. A. अत्र
४. A omits न

भाष्यम्

न्यपरा भवितुमर्हति, यथा मन्त्रार्थवादौ ; तर्कोऽपि स्वविषयादन्यत्रा- प्रतिष्ठितः स्यात् यथा धर्माधर्मयोः ; किमतः ? यद्येवम्, अत इदमयुक्तम्— यत्प्रमाणान्तरप्रसिद्धार्थबाधनं श्रुतेः ; कथं पुनः प्रमाणान्तरप्रसिद्धोऽर्थः श्रुत्या बाध्यत इति, अत्रोच्यते—प्रसिद्धो ह्ययं भोक्तृभोग्यविभागो लोके—भोक्ता चेतनः शारीरः, भोग्याः शब्दादयो विषया इति ; यथा भोक्ता देवदत्तः, भोज्य ओदन इति ; तस्य च विभागस्याभावः प्रस- ज्येत, यदि भोक्ता भोग्यभावमापद्येत भोग्यं वा भोक्तृभावमापद्येत ; तयोश्चेतरेतरभावापत्तिः परमकारणाद्ब्रह्मणोऽनन्यत्वात्प्रसज्येत; न चास्य प्रसिद्धस्य विभागस्य बाधनं युक्तम् ; यथा चाद्यत्वे भोक्तृभोग्ययोर्वि-

प्रकटार्थविवरणम्

तर्कस्याप्रतिष्ठितत्वं तत्राह — तर्कोऽपीति ।। धूमादग्निज्ञानस्य प्रतिष्ठितत्वदर्श- नात् भवत्वेवं तर्कस्य स्वविषये प्रतिष्ठितत्वम् ; एतावता समन्वये किमायात- मित्याह — किमत इति ।। पूर्ववाद्याह — यदीति ।। यद्येवं तव बुभुत्सा वर्तते तर्हिदं वक्ष्यमाणमयुक्तम्, प्रत्यक्षस्य प्रमाणज्येष्ठत्वात्; विरोधे श्रुतेरुप- चरितार्थत्वमेव युक्तमिति भावः । श्रुतेः स्वार्थबोधनेनोपक्षयान्नान्यबाधकत्वम् ; नापि श्रुतिविपरीतार्थग्राहि प्रमाणान्तरमस्तीत्याह—कथं पुनरिति ।। तत्र भोक्तृभोग्याभिन्नब्रह्मणो जगत्सर्गप्रतिपादकश्रुतिविपरीतार्थग्राहि प्रत्यक्षमस्ती- त्याह—उच्यत इत्यादिना ।। श्रुतेस्तद्बाधकत्वमन्यथाऽस्तीत्याह—तस्य च विभागस्येति ।। एकस्मादभेदात् भोक्तृभोग्ययोरप्येकत्वं प्रसज्येत; अन्यथा ब्रह्मणोऽपि भेदप्रसङ्गात्; अतो भोक्तृभोग्याभिन्नब्रह्मणो जगत्सर्गं ब्रुवाणया श्रुत्यार्थात् भेदो बाधितः स्यादिति भावः । अस्तु तर्हि बाध इत्यत्राह—न चास्येति ।। बाधव्यवहाराभावादेव । नन्विदानीं बाधव्यवहाराभावेऽपि कालान्तरे भविष्यतीत्याशङ्कयाह—यथा चाद्यत्व इति ।। विमतः कालो भोक्त्रा- दिबाधव्यवहारवान्न भवति, कालत्वादिदानींतनकालवदित्यर्थः । पूर्वपक्षमुप-

१. T, T[1], P and TM add अतः　　२. TM. ब्रुवाणाय

## भाष्यम्

भागो दृष्टः, तथातीतानागतयोरपि कल्पयितव्यः ; तस्मात्प्रसिद्धस्यास्य भोक्तृभोग्यविभागस्याभावप्रसङ्गादयुक्तमिदं ब्रह्मकारणतावधारणमिति चेत्कश्चिच्चोदयेत्, तं प्रतिब्रूयात्—स्याल्लोकवदिति । उपपद्यत एवायमस्मत्पक्षेऽपि विभागः, एवं लोके दृष्टत्वात् । तथाहि—समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनवीचीतरङ्गबुद्बुदादीनामितरेतर - विभाग इतरेतरसंश्लेषादिलक्षणश्च व्यवहार उपलभ्यते ; न च समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनतरङ्गादीनामितरेतरभावापत्तिर्भवति ; न च तेषामितरेतरभावानापत्तावपि समुद्रात्मनोऽन्यत्वं भवति ; एवमिहापि—न च भोक्तृभोग्ययोरितरेतरभावापत्तिः, न च परस्माद्ब्रह्मणोऽन्यत्वं भविष्यति । यद्यपि भोक्ता न ब्रह्मणो विकारः "तत्सृष्ट्वा । तदेवानुप्राविशत्" इति स्रष्टुरेवाविकृतस्य कार्यानुप्रवेशेन भोक्तृत्वश्रवणात्, तथापि कार्यमनुप्रविष्टस्यास्त्युपाधिनिमित्तो विभाग आकाशस्येव घटाद्युपाधिनिमित्तः—इत्यतः, परमकारणाद्ब्रह्मणोऽनन्यत्वेऽप्युपपद्यते भोक्तृभोग्यलक्षणो विभागः समुद्रतरङ्गादिन्यायेनेत्युक्तम् ॥

## प्रकटार्थविवरणम्

संहरति—तस्मादिति ॥ भोक्तृभोग्यविभागप्रत्यक्षविरुद्धः समन्वय इति पूर्वः पक्षः । सिद्धान्तमाह—स्याल्लोकवदिति ॥ समुद्रस्य वीच्यादिकारणत्वे यत्प्रमाणं तस्य यथा वीच्यादिभेदग्राहकप्रमाणविरोधो नास्ति तथा ब्रह्मणोऽपि भोक्त्रादिकारणत्वप्रतिपादकवेदस्य भोक्त्रादिभेदग्राहकप्रमाणविरोधो न भविष्यति, प्रातिभासिकभेदाभ्युपगमादिति भावः । ननु समुद्रतरङ्गदृष्टान्तो नानुकूलः, कार्यत्वाभावात् भोक्तुरित्याशङ्क्याह—यद्यपि भोक्तेति ॥ निरुपाधिककार्यत्वाभावेऽपि सोपाधिकं कार्यत्वं भोक्तुरस्तीति भावः ॥

१. A. यद्यपीति ॥ भोक्तरि

भाष्यम्

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ २-१-१४ ॥

अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागम् "स्याल्लोकवत्" इति परिहारोऽभिहितः; न त्वयं विभागः परमार्थतोऽस्ति, यस्मात्तयोः कार्यकारणयोरनन्यत्वमवगम्यते। कार्यमाकाशादिकं बहुप्रपञ्चं जगत्, कारणं परं ब्रह्म; तस्मात्कारणात्परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते; कुतः? आरम्भणशब्दादिभ्यः। आरम्भणशब्दस्तावत् एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते — "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति; एतदुक्तं भवति—एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृन्मयं घटशरावोदञ्चनादिकं मृदात्मकत्वाविशेषाद्विज्ञातं भवेत्; यतो

प्रकटार्थविवरणम्

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥

अधिकरणसङ्गतिमाह — अभ्युपगम्य चेममिति ॥ अद्वितीयब्रह्मपरः समन्वयो विषयः। तस्य भेदग्राहकप्रत्यक्षादिविरोधोऽस्त्युत नेति सन्देहः। पूर्वाधिकरणे अभ्युपगतप्रामाण्यस्य प्रत्यक्षादेः सत्यभेदविषयतया तत्त्वावेदकत्वादस्ति विरोध इति पूर्वः पक्षः। सिद्धान्तमाह—न त्वयं विभाग इति ॥ आगमाद्भेदस्य मिथ्यात्वावगमात् तद्ग्राहकाणां प्रत्यक्षादीनां देहात्मप्रत्ययवद्व्यावहारिकत्वात् देहव्यतिरिक्तात्मग्राहकप्रमाणस्याविरोधवदद्वैतागमस्याप्यविरोध इति भावः। ब्रह्मव्यतिरेकेणाभाव इत्यमात्रशब्दः परमार्थसत्त्व भवतीत्यनेनाभिप्रायेण, तुच्छव्यावृत्तिलक्षणसत्त्वाभ्युपगमात् विकाराभ्युपगमाच्चेति। आरम्भणशब्दार्थं दर्शयितुं कृत्स्नमेव वाक्यं व्याख्याति—एतदुक्तं भवतीति ॥ यत्पुनः भास्करेण व्याख्यातम् "विकारो वाच्यः, नामधेयं वाचकम्; एतदुभयं वाचो

१. TM. भेदव्यतिरिक्त

३. TM. द्वयं

२. T[1] adds भेदस्य मिथ्यात्वाभ्युपगमात्

### भाष्यम्

वाचारम्भणं विकारो नामधेयम्—वाचैव केवलमस्तीत्यारभ्यते विकारः—घटः शराव उदञ्चनं चेति; न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति; नामधेयमात्रं ह्येतदनृतं मृत्तिकेत्येव सत्यम्—इति; एष ब्रह्मणो दृष्टान्त आम्नातः; तत्र श्रुताद्वाचारम्भणशब्दाद्दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण कार्यजातस्याभाव इति गम्यते। पुनश्च तेजोबन्नानां ब्रह्मकार्यतामुक्त्वा तेजोबन्नकार्याणां तेजोबन्नव्यतिरेकेणाभावं ब्रवीति—"अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्" इत्यादिना। आरम्भणशब्दादिभ्य इत्यादिशब्दात् "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" "इदं सर्वं यदयमात्मा" "ब्रह्मैवेदं सर्वम्" "आत्मैवेदं सर्वम्" "नेह नानास्ति किंचन" इत्येवमाद्यप्यात्मैकत्वप्रतिपादनपरं वचनजातमुदाहर्तव्यम्; न चान्य-

### प्रकटार्थविवरणम्

वागिन्द्रियस्यारम्भणं वागिन्द्रियं ह्युभयमालम्ब्य व्यवहारं प्रवर्तयति" इति तदसत्, पूर्वापरासङ्गतेः; पूर्वभागे हि मृद्विज्ञानेन मृत्कार्यविज्ञानं प्रस्तुतम्; तत्र हेत्वाकाङ्क्षायां मृत्सत्तयैव तत्कार्यस्य सत्ता पृथक्सत्त्वं नास्तीत्येतदेव वक्तव्यम्, न त्वाकिञ्चित्करं वाच उभयारम्भकत्वम्; परत्रापि मिथ्यात्वविरोध्यर्थाभिधायिनं सत्यशब्दं मृद्येव प्रयुञ्जान आम्नायो विकारे पूर्वत्रानृतत्वमुक्तं सूचयति। यदपि केशवेनावादि "वाचारम्भणश्रुत्या कारणात्कार्यस्यात्यन्तिकभेदो निषिध्यते; स्वरूपेण तु कार्यस्य सत्त्वमेव" इति, तत्र स्वरूपेण सत्त्वमिति कोऽर्थः? किं कारणसत्तैव कार्यस्वरूपसत्ता, किं वा सत्तान्तरम्? तत्राद्ये न विवादः। द्वितीये नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धिः, कारणसत्ता कार्यसत्तापरिज्ञानाभावात्; अभेदात् ज्ञाने भेदादज्ञानमपि स्यात्। मम त्वनिर्वाच्यानां विकाराणां कारणसत्तयैव सद्व्यवहारगोचरत्वात् कारणसत्तापरिज्ञाने सर्वसत्तापरिज्ञानं सिध्यतीति। एवं तावदागमाद्विकारानृतत्वमुक्त्वा प्रक्रान्तमुप-

१. A. तदतीवासत्.

२. T, T[1] and P. कारणज्ञानेऽपि

३. T, T[1] and P. करणं TM. करण-

भाष्यम्

थैकविज्ञानेन सर्वविज्ञानं संपद्यते। तस्माद्यथा घटकरकाद्याकाशानां महाकाशानन्यत्वम्, यथा च मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्वम्, दृष्टनष्टस्वरूपत्वात्स्वरूपेणानुपाख्यत्वात्; एवमस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम् ॥

नन्वनेकात्मकं ब्रह्म; यथा वृक्षोऽनेकशाखः, एवमनेकशक्तिप्रवृत्तियुक्तं ब्रह्म; अत एकत्वं नानात्वं चोभयमपि सत्यमेव—यथा वृक्ष इत्येकत्वं शाखा इति नानात्वम्; यथा च समुद्रात्मनैकत्वं फेनतरङ्गाद्यात्मना नानात्वम्; यथा च मृदात्मनैकत्वं घटशरावाद्यात्मना नानात्वम्; तत्रैकत्वांशेन ज्ञानान्मोक्षव्यवहारः सेत्स्यति; नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्यत इति; एवं च मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति। नैवं स्यात्—"मृत्तिकेत्येव सत्यम्" इति प्रकृतिमात्रस्य दृष्टान्ते सत्यत्वावधारणात्, वाचारम्भणशब्देन च विकारजातस्यानृतत्वाभिधानात्, दार्ष्टान्तिकेऽपि "ऐतदात्म्यमिदं सर्वं तत्सत्यम्" इति च परमकारणस्यैवैकस्य सत्यत्वाव-

प्रकटार्थविवरणम्

संहारच्छलेनाह—तस्माद्यथा घटकरकाद्याकाशानामिति ॥ जीवेश्वरादिविभागो मिथ्या, विभागत्वादौपाधिकत्वाद्वा, घटाकाशादिविभागवत्। भूधरादिकमसत्यम्, अन्तवत्त्वात् कार्यत्वाद्वा, ऊषरोदकवदित्यर्थः ॥ अनुपाख्यत्वादिति ॥ वास्तवसत्त्वविधुरत्वादित्यर्थः ॥

एवं स्वमतानुसारेण व्याख्यायाचार्यदेश्यव्याख्यामनुभाषते—नन्वनेकात्मकमिति ॥ अनेकाभिः शक्तिभिः प्रवृत्तयः अधिकाराः; तद्युक्तं ब्रह्म। दूषयति—नैवं स्यात् मृत्तिकेत्येव सत्यमिति ॥ यदि भिन्नाभिन्नं ब्रह्माभिप्रेतं स्यात्ततो विकारभेदोऽपि सत्य एवेति कारणमात्रे सत्यतावधारणं न स्यादित्यर्थः। मम तु सांव्यवहारिकसत्यतानुपमर्देन दृष्टान्तो न विरुध्यते, अन्यथा दार्ष्टान्तिकव्याकोपात्। किञ्च यदि जीवगतः संसारः कल्पितः स्यात्, तदैव तस्यासंसारि-

भाष्यम्

धारणात्, "स आत्मा तत्त्वमसि श्वेतकेतो" इति च शारीरस्य ब्रह्मभावोपदेशात्; स्वयंप्रसिद्धं ह्येतच्छारीरस्य ब्रह्मात्मत्वमुपदिश्यते, न यत्नान्तरप्रसाध्यम्; अतश्चेदं शास्त्रीयं ब्रह्मात्मत्वमवगम्यमानं स्वाभाविकस्य शारीरात्मत्वस्य बाधकं संपद्यते, रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनाम्; बाधिते च शारीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भवति, यत्प्रसिद्धये नानात्वांशोऽपरो ब्रह्मणः कल्प्येत; दर्शयति च—"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिना ब्रह्मात्मत्वदर्शिनं प्रति समस्तस्य क्रियाकारकफललक्षणस्य व्यवहारस्याभावम्; न चायं व्यवहाराभावोऽवस्थाविशेषनिबद्धोऽभिधीयत इति युक्तं वक्तुम्, "तत्त्वमसि" इति ब्रह्मात्मभाव-

प्रकटार्थविवरणम्

ब्रह्मात्मता घटते; अन्यथा सत्यतः संसारिणो ब्रह्मात्मतोपदेशासंभवप्रसङ्गादित्याह—स आत्मा तत्त्वमसीति ॥ ननु ब्रह्मांशस्य[1] जीवस्य ज्ञानकर्मसमुच्चयानुष्ठानात् भाविब्रह्मभावापेक्षया तादात्म्योपदेशो भविष्यति, नेत्याह—स्वयंप्रसिद्धं हीति ॥ 'सोऽयं देवदत्तः' इतिवद्विशिष्टपरामर्शेन स्वरूपपर्यवसायि सामानाधिकरण्यम्, अन्यथा 'तत्त्वं भविष्यसि' इति[2] व्यपदेशप्रसङ्गादिति भावः। ननु बाधकादर्शनात् जीवस्य सत्यमेव संसारित्वम् न ब्रह्मात्मत्वं स्वतःसिद्धमित्याशङ्क्याह—अतश्चेदमिति ॥ यतो जीवस्य ब्रह्मभावः प्रयत्नान्तरसाध्यो न भवति अत एव शास्त्रादवगम्यमानं जीवस्य ब्रह्मात्मत्वं नैसर्गिकमविद्यासिद्धस्य संसारित्वस्य बाधकं संपद्यत इत्यर्थः। ब्रह्मैवाहं न संसारीत्यस्तु बाधः; ततः किमित्याशङ्क्याह — बाधिते चेति ॥ स्वभावोऽविद्या; तत्कृतः स्वाभाविकः प्रमातृत्वप्रमुखः कर्तृत्वभोक्तृत्वलक्षणो व्यवहारो बाधितः स्यादित्यर्थः। ननु प्रमातृत्वं पूर्वं सत्यमेव मोक्षावस्थायां निवर्तत इति किं न स्यादित्याशङ्क्याह — न चायं व्यवहाराभाव इति ॥ इतश्च न भेदोऽपि सत्य

१. T, T¹ and P. ब्रह्मांशजीवस्य
२. T omits इति

## भाष्यम्

स्यानवस्थाविशेषनिबन्धनत्वात्; तस्करदृष्टान्तेन चानृताभिसंधस्य बन्धनं सत्याभिसंधस्य च मोक्षं दर्शयन्नेकत्वमेवैकं पारमार्थिकं दर्शयति, मिथ्याज्ञानविजृम्भितं च नानात्वम्; उभयसत्यतायां हि कथं व्यवहारगोचरोऽपि जन्तुरनृताभिसंध इत्युच्येत? "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति च भेददृष्टिमपवदन्नेवैतद्दर्शयति; न चास्मिन्दर्शने ज्ञानान्मोक्ष इत्युपपद्यते, सम्यग्ज्ञानापनोद्यस्य कस्यचिन्मिथ्याज्ञानस्य संसारकारणत्वेनानभ्युपगमात्; उभयसत्यतायां हि कथमेकत्वज्ञानेन नानात्वज्ञानमपनुद्यत इत्युच्यते। नन्वेकत्वैकान्ताभ्युपगमे नानात्वाभावात्प्रत्यक्षादीनि लौकिकानि प्रमाणानि व्याहन्येरन्, निर्विषयत्वात्, स्थाण्वादिष्विव पुरुषादिज्ञानानि; तथा विधिप्रतिषेधशास्त्रमपि भेदापेक्षत्वात्त-

## प्रकटार्थविवरणम्

इत्याह — तस्करदृष्टान्तेनेति ॥ कश्चित्तस्करत्वेनाभिशस्तोऽनृतवादी चेत्तप्तपरशुग्रहणे दह्यते बध्यते च, सत्यवादी चेन्न दह्यते मुच्यते च इत्यनेन दृष्टान्तेनेत्यर्थः। भेददृष्टेः निन्दितत्वादप्येकत्वमेव पारमार्थिकमित्याह—मृत्योः स इति ॥ किञ्च भेदाभेदवादे ज्ञानान्मोक्षोऽपि न सिध्यतीत्याह—न चास्मिन्निति ॥ मोक्षप्रतिबन्धकनिवृत्त्युपाधौ हि मोक्षस्य ज्ञानसाध्यत्वम्; न च ते मोक्षप्रतिबन्धकं किञ्चित् ज्ञाननिवर्त्यमस्ति, भ्रमस्य क्षणिकतया स्वयं निवृत्तेः, सन्तानस्य च तद्व्यतिरिक्तस्याभावात्, संस्कारस्य तत्त्वज्ञानेन सहभावदर्शनात्, स्वयमग्रहणनिवृत्तिरूपत्वाच्चेति भावः। ननु नानात्वांशो ज्ञाननिवर्त्योऽस्त्वित्याशङ्क्याह — उभयसत्यतायां हीति ॥ ज्ञानस्य वस्तुविनाशकत्वादर्शनादिति भावः। तस्मात् ज्ञानान्मोक्षस्य साध्यत्वसिध्यन्यथानुपपत्त्यानाद्यविद्याज्ञानसिद्धो भेदोऽभ्युपगन्तव्य इति। इदानीं प्रत्यक्षादिषु प्रामाण्यप्रसिध्यनुपपत्त्यर्थापत्तिबलात् सत्यो भेदोऽभ्युपगन्तव्य इति शङ्कते— नन्विति ॥ किञ्चाद्वैतज्ञानसिध्यन्यथानुपपत्त्यापि प्रमाणादिभेदः सत्यो

१. A. स मृत्युरिति   २. A omits हि

भाष्यम्

दभावे व्याहन्येत; मोक्षशास्त्रस्यापि शिष्यशासित्रादिभेदापेक्षत्वात्तदभावे व्याघातः स्यात्; कथं चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वमुपपद्येतेति। अत्रोच्यते—नैष दोषः, सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात्सत्यत्वोपपत्तेः। स्वप्नव्यवहारस्येव प्राक्प्रबोधात्; यावद्धि न सत्यात्मैकत्वप्रतिपत्तिः तावत्प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृतत्वबुद्धिर्न कस्यचिदुत्पद्यते; विकारानेव तु 'अहम्' 'मम' इत्यविद्ययात्मात्मीयेन भावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं ब्रह्मात्मतां हित्वा; तस्मात्प्राग्ब्रह्मात्मताप्रतिबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः—यथा सुप्तस्य प्राकृतस्य जनस्य स्वप्न उच्चावचान्भावान्पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक्प्रबोधात्, न च प्रत्यक्षाभासाभिप्रायस्तत्काले भवति, तद्वत्। कथं चासत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपपद्येत? न हि रज्जुसर्पेण दष्टो म्रियते; नापि मृगतृष्णिकाम्भसा पानावगाहनादिप्रयोजनं क्रियत इति। नैष दोषः, शङ्काविषादिनिमित्तमरणादिकार्योपलब्धेः, स्वप्नदर्शनावस्थस्य च सर्पदंशनोदकस्नानादिकार्यदर्शनात्;

प्रकटार्थविवरणम्

वक्तव्य इत्याह—कथं चानृतेनेति ॥ प्रथमार्थापत्तेस्तत्तावदन्यथाप्युपपत्तिमाह—अत्रोच्यत इति ॥ द्वितीयार्थापत्तिमनुवदति—कथं त्व[चा]सत्येनेति ॥ किञ्च विप्रतिपन्नः प्रपञ्चः सत्यः, अर्थक्रियाकारित्वात् आत्मवद[दित्यभि]मिप्रेत्याह—न हि रज्जुसर्पेणेति ॥ तत्रानुमाने तावदनैकान्तिकत्वमाह—शङ्काविषादीति ॥ सर्पेण अदष्टोऽपि दष्टत्वविभ्रमान्म्रियते, मूर्छां गच्छतीति प्रसिद्धम्; न च तत्र विषस्मरणं मरणकारणमतिप्रसङ्गादित्यर्थः। व्यभिचारान्तरमाह—स्वप्नदर्शनेति ॥ ननु सत्यार्थक्रियाकारित्वादिति हेतुर्विवक्ष्यते स्वप्ने

भाष्यम्

तत्कार्यमप्यनृतमेवेति चेद्ब्रूयात्, तत्र ब्रूमः—यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादि कार्यमनृतम्, तथापि तदवगतिः सत्यमेव फलम्, प्रतिबुद्धस्याप्यबाध्यमानत्वात्; न हि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशनोदकस्नानादि कार्यं मिथ्येति मन्यमानस्तदवगतिमपि मिथ्येति मन्यते कश्चित्। एतेन स्वप्नदृशोऽवगत्यबाधनेन देहमात्रात्मवादो दूषितो वेदितव्यः। तथा च श्रुतिः—

"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने॥"

इत्यसत्येन स्वप्नदर्शनेन सत्यायाः समृद्धेः प्रतिपत्तिं दर्शयति, तथा प्रत्यक्षदर्शनेषु केषुचिदरिष्टेषु जातेषु "न चिरमिव जीविष्यतीति विद्यात्" इत्युक्त्वा "अथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति" इत्यादिना तेन तेनासत्येनैव स्वप्नदर्शनेन सत्यं मरणं सूच्यत इति दर्शयति; प्रसिद्धं चेदं लोकेऽन्वयव्यतिरेककुशलानामीदृशेन स्वप्नदर्शनेन साध्वागमः सूच्यते, ईदृशेनासाध्वागम इति;

प्रकटार्थविवरणम्

चार्थक्रिया[1] मिथ्येति नानैकान्तिकत्वमित्याह — तत्कार्य[2]मपीति॥ मिथ्याभूतार्थेन्द्रियसंप्रयोगादौ सत्यावगतिसाधनभूते तर्ह्यनैकान्तिकतेत्याह — तत्र ब्रूम इत्यादिना॥ प्रसङ्गान्मतान्तरनिराकरणेऽप्यतिदिशति — एतेनेति॥ स्वप्ने कदाचिद्व्याघ्रदेहो द्रष्टा भूत्वा जागरणेऽप्यनुसन्दधानो दृश्यते देह एव चेदात्मा व्याघ्रदेहावगमे द्रष्टुरपगमान्नानुसन्धानं स्यादिति भावः। यच्चोक्तं नासत्यात्सत्यप्रतिपत्तिः संभवति मिथ्याधूमगृहीतादिव बाष्पादग्निप्रतिपत्तिः, अतोऽद्वैतब्रह्मप्रतिपत्त्यन्यथानुपपत्त्यैव प्रमाणादिप्रपञ्चस्य सत्यता वक्तव्येति, तत्राप्यन्यथाप्युपपत्तिमाह — तथा च श्रुतिरित्यादिना॥ मिथ्याधूमस्य त्वव्याप्तत्वादगमकत्वं ज्ञानस्वरूपसत्यतायामपि मिथ्यार्थावच्छिन्नस्य

१. A. क्रियाहेतुः
२. T and TM. तत्राप

भाष्यम्

तथाकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः । अपि चान्त्यमिदं प्रमाणमात्मैकत्वस्य प्रतिपादकं नातः परं किंचिदाकाङ्क्ष्यमस्ति ; यथा हि लोके यजेतेत्युक्ते किं केन कथमित्याकाङ्क्ष्यते नैवम् "तत्त्वमसि" इत्युक्ते, किंचिदन्यदाकाङ्क्ष्यमस्ति, सर्वात्मैकत्वविषयत्वादवगतेः ; सति ह्यन्यस्मिन्नवशिष्यमाणेऽर्थ आकाङ्क्षा स्यात् ; न त्वात्मैकत्वव्यतिरेकेणावशिष्यमाणोऽन्योऽर्थोऽस्ति, य आकाङ्क्ष्येत । न चेयमवगतिर्नोत्पद्यत इति शक्यं वक्तुम्, "तद्धास्य विजज्ञौ" इत्यादिश्रुतिभ्यः, अवगतिसाधनानां च श्रवणादीनां वेदानुवचनादीनां च विधीयमानत्वात् । न चेयमवगतिरनर्थिका भ्रान्तिर्वेति शक्यं वक्तुम् ;

प्रकटार्थविवरणम

मिथ्यात्वात् भ्रमादभ्रमप्रतिपत्तिवदसत्यात् सत्यप्रतिपत्त्याविरोधः । उदाहरणान्तरमाह—तथाकारादिति ॥ यद्यपि मषिद्रव्यं स्वरूपेण सत्यम्, सङ्केतवशाच्च वर्णप्रत्यायकं स एव संकेतः 'अयं ककारः, अयं गकारः' इति समारोपितरूपेण; न पुनरीदृशीं रेखां दृष्ट्वा अयं वर्णः स्मर्तव्य इति; तस्मात् द्वैतसत्यत्वं विनानुपपत्त्यभावात् न परमार्थभेदकल्पनं न्याय्यम् । किञ्च यदि युगपद्भेदप्रयुक्तो व्यवहारः स्यात् तदोभयसत्यताकल्पना युज्येत; न चास्ति, ब्रह्मात्मैकत्वज्ञाने सति सकलहानोपादानादिव्यवहारनिवृत्तेरित्याह—अपि चान्त्यमिदमिति ॥ नन्वेतादृशी प्रतिपत्तिरेव कस्यापि नोदपादि; तत्राह—न चेयमवगतिरिति ॥ तद्ब्रह्म किलास्य पितुर्वचनात् श्वेतकेतुर्विजज्ञौ विज्ञातवानित्यर्थः । किञ्च सति पुष्कलकारणे कार्यं नोत्पद्यत इति साहसमात्रमित्याह—अवगतिसाधनानां चेति ॥ ननु ब्रह्मावगतिर्निष्फला भ्रान्तिश्च, मिथ्याकार्यत्वात् बौद्धशास्त्रप्रसूतबुद्धिवदित्याशङ्क्याह—न चेयमवगतिरिति ॥ बाधितविषयत्वानैकान्तिकत्वे स्फुटे इति भावः । ननु—सूत्रकारेण मिथ्याभूतत्वात् स्वप्नाज्जागरितस्य वैलक्षण्यमुक्तम् "वैधर्म्याच्च न स्वप्नादिवत्" इति । "सत्यं चानृतं

१. T. मेषद्रव्यं
T[1]. विषमद्रव्यं

भाष्यम्

अविद्यानिवृत्तिफलदर्शनात्, बाधकज्ञानान्तराभावाच्च । प्राक्त्वात्मैकत्वावगतेरव्याहतः सर्वः सत्यानृतव्यवहारो लौकिको वैदिकश्चेत्यवोचाम । तस्मादन्त्येन प्रमाणेन प्रतिपादिते आत्मैकत्वे समस्तस्य प्राचीनस्य भेदव्यवहारस्य बाधितत्वान्नानेकात्मकब्रह्मकल्पनावकाशोऽस्ति । ननु मृदादिदृष्टान्तप्रणयनात्परिणामवद्ब्रह्म शास्त्रस्याभिमतमिति गम्यते ; परिणामिनो हि मृदादयोऽर्था लोके समधिगता इति । नेत्युच्यते—"स वा एष महाजन आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" "स एष नेति नेत्यात्मा" "अस्थूलमनणु" इत्याद्याभ्यः सर्वविक्रियाप्रतिषेधश्रुतिभ्यो ब्रह्मणः कूटस्थत्वावगमात् ; न ह्येकस्य ब्रह्मणः परिणामधर्मत्वं तद्रहितत्वं च शक्यं प्रतिपत्तुम् ; स्थितिगतिवत्स्यादिति चेत्, न ; कूटस्थस्येति विशेषणात् ; न हि कूटस्थस्य

प्रकटार्थविवरणम्

च सत्यमभवत्" इति च श्रुतिः । अतः कथं सर्वमिथ्यात्वमित्याशङ्क्याह—प्राक्त्वात्मैकत्वावगतेरिति ॥ यथा स्वप्न एव शुक्त्यादि सत्यं रूप्याद्यसत्यमित्यवान्तरव्यवहारः, तथा तत्त्व[1]ज्ञानात् प्राक् सति प्रमातरि बाध्यमसत्यं [2]स इहैव प्रमातृत्वेन बाध्यं सत्य[3]मित्यवान्तरविभागो न विरुध्यत इत्यर्थः । प्रकृतमुपसंहरति—तस्मादिति ॥ बाधित[4]त्वादिति ॥ प्रतिषिद्धसत्यत्वादित्यर्थः । न मया कल्प्यते, श्रुतेरेवेत्याह—ननु मृदादीति ॥ परिणामिदृष्टान्तोपादानात् ब्रह्म तत्त्वतः परिणामि भिन्नाभिन्नमिति लिङ्गं श्रुतिविरोधे बाध्यत इत्याह—नेत्युच्यत इत्यादिना ॥ मृदादिदृष्टान्तोऽप्यनन्यत्वेन परिणामित्वे ; अन्यथा आकाशस्यापि प्रसङ्गात् । ननु यथा विरुद्धे अपि स्थितिगती क्रमेण सङ्गच्छेते तथा सृष्टेः प्रागविक्रियं ब्रह्म, सृष्टौ च विकारीत्युभयोपपत्तौ सत्यां किमित्येकस्य बाधः कल्प्यते ? अगतिका हीयं गतिः, यद्बाधकल्पनमित्याह—स्थितिगतिवदिति ॥ परिहरति—न कूटस्थस्येति ॥

१. T. सत्यज्ञानात्
२. A omits स इव...बाध्यं
३. A. सत्यमितरदिति
४. T, T¹ and TM omit बाधितत्वादिति

### भाष्यम्

ब्रह्मणः स्थितिगतिवदनेकधर्माश्रयत्वं संभवति ; कूटस्थं च नित्यं ब्रह्म सर्वविक्रियाप्रतिषेधादित्यवोचाम ; न च, यथा ब्रह्मण आत्मैकत्वदर्शनं मोक्षसाधनम्, एवं जगदाकारपरिणामित्वदर्शनमपि स्वतन्त्रमेव कस्मैचित्फलायाभिप्रेयते, प्रमाणाभावात्; कूटस्थब्रह्मात्मैकत्वविज्ञानादेव हि फलं दर्शयति शास्त्रम्—“स एष नेति नेत्यात्मा” इत्युपक्रम्य “अभयं वै जनक प्राप्तोऽसि” इत्येवंजातीयकम्। तत्रैतत्सिद्धं भवति— ब्रह्मप्रकरणे सर्वधर्मविशेषरहितब्रह्मदर्शनादेव फलसिद्धौ

### प्रकटार्थविवरणम्

“नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः”

इति स्थाणुत्वं पूर्वमभिधायानन्तरमचलत्वं ब्रुवन् सर्वविक्रियावर्जितं कूटस्थत्वमाह—परिस्पन्दाभावस्य सर्वगतत्वादेव सिद्धेः; अतो न क्रमेणापि विकाराविकाराविति भावः। किञ्च ब्रह्म तत्त्वतोऽपरिणामि निरवयवत्वात्, न यदेवं न तदेवं यथा क्षीरम्। यत्तु गदितम्—न तावदवयवातिरेकेणावयवी मायावादिनां कश्चिदस्ति; तत्र क्षीरावयवाः परिणमन्त इति वक्तव्यम्; ते च निरवयवाः, इतरथानवस्थानात्, अवयवानन्त्येन क्षीरसमुद्रस्य[क्षीरक्षीरसमुद्रसाम्य]-प्रसङ्गाच्च; तस्मान्निरवयवस्यैव परिणामो दृष्ट इति; तदसत्, तथा हि—किमेतल्लौकिकं नैयायिकं वा? नाद्यः, सावयवस्यैव क्षीरादेः लोके परिणामदर्शनात्। मायावादिना प्रसिध्यनपह्नवेन विचारासहत्वमेवावेद्यते। यदि द्वितीयः, तर्हि किं तेऽनादयः सादयो वा? आद्ये—अपसिद्धान्तः, परमाणुवादाश्रयणं च स्यात्; अन्त्ये सावयवत्वं दुर्निवारम्। ततो यत्किञ्चिदेतत्। ननु ब्रह्मणः परिणामित्वप्रतिपादने श्रुतेरेव तात्पर्यं कल्प्यते व्यवहारसिद्धेः प्रयोजनस्य सद्भावादित्याशङ्क्याह—न च यथा ब्रह्मण इति॥ व्यवहारसिद्धिः प्रयोजनं न श्रुतं तावत्; नापि कल्पनीयम्, अन्यथापि लाभादिति भावः। भवतु परिणामज्ञानं निष्फलं शुद्धब्रह्मात्मताज्ञानं च सफलम्; ततः किमित्यत आह—तत्रैतत्सिद्धमिति॥

१. TM and A omit एव  ३. A. प्रयोजनाभावात्

२. A. परिणामित्व

भाष्यम्

सत्याम्, यत्तत्राफलं श्रूयते ब्रह्मणो जगदाकारपरिणामित्वादि, तद्ब्रह्मदर्शनोपायत्वेनैव विनियुज्यते, "फलवत्संनिधावफलं तदङ्गम्" इतिवत्; न तु स्वतन्त्रं फलाय कल्प्यत इति। न हि परिणामवत्त्वविज्ञानात्परिणामवत्त्वमात्मनः फलं स्यादिति वक्तुं युक्तम्, कूटस्थनित्यत्वान्मोक्षस्य। कूटस्थब्रह्मवादिन एकत्वैकान्त्यादीशित्रीशितव्याभावे ईश्वरकारणप्रतिज्ञाविरोध इति चेत्, न; अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात्सर्वज्ञत्वस्य। "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिवाक्येभ्यो नित्यशुद्धबुद्धमुक्तस्वरूपात्सर्वज्ञात्सर्वशक्तेरीश्वराज्जगज्जनिस्थितिप्रलयाः, नाचेतनात् प्रधानादन्यस्माद्वेत्येषोऽर्थः प्रतिज्ञातः "जन्माद्यस्य यतः" इति; सा प्रतिज्ञा तदवस्थैव, न तद्विरुद्धोऽर्थः पुनरिहोच्यते। कथं नोच्यते, अत्यन्तमात्मन एकत्वमद्वितीयत्वं च ब्रुवता? शृणु यथा नोच्यते—सर्वज्ञस्येश्वरस्यात्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते सर्वज्ञस्येश्वरस्य माया शक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते; ताभ्यामन्यः सर्वज्ञ ईश्वरः "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति श्रुतेः, "नामरूपे व्याकरवाणि" "सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाभिवदन्यदास्ते" "एकं बीजं

प्रकटार्थविवरणम्

पूर्वापरविरोधमुद्भावयति—कूटस्थब्रह्मवादिन इति॥ एकत्वस्यैकान्ततो नियतस्याभ्युपगतत्वादीशितव्याभावे सति "जन्माद्यस्य यतः" [इति] ईश्वरकारणप्रतिज्ञा विरुध्यते कूटस्थं ब्रह्मास्मिन्नधिकरणे वदत इति भावः। परिहरति—नाविद्यात्मकेति॥ अविद्यात्मके जडे ये, नामरूपकारणत्वात् नामरूपे, ते जगतो[1] बीजम्, तद्व्यप[तद्व्याप]कारणापेक्षत्वात्[2] तत्परिणामोपाधिकत्वादीश्वरस्य न विरोध इत्यर्थः। एतदेव विवृणोति—तस्माद्वा इत्यादिना॥ अविद्याकल्पितेति॥ अविद्यात्मना आद्यरूपेण कल्पिते स्वीकृत

१. T omits जगतो     २. T. तद्व्यप-

भाष्यम्

बहुधा यः करोति" इत्यादिश्रुतिभ्यश्च ; एवमविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति, व्योमेव घटकरकाद्युपाध्यनुरोधि ; स च स्वात्मभूतानेव घटाकाशस्थानीयानविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातानुरोधिनो जीवाख्यान्विज्ञानात्मनः प्रतीष्टे व्यवहारविषये ; तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं च, न परमार्थतो विद्ययापास्तसर्वोपाधिस्वरूप आत्मनीशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते ; तथा चोक्तम्—"यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति ; "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिना च । एवं परमार्थावस्थायां सर्वव्यवहाराभावं वदन्ति वेदान्ताः सर्वे ; तथेश्वरगीतास्वपि—

"न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥
नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" ॥

इति परमार्थावस्थायामीशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते ; व्यवहारावस्थायां तूक्तः श्रुतावपीश्वरादिव्यवहारः "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति । तथा चेश्वरगीतास्वपि—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥" इति ।

प्रकटार्थविवरणम्

इत्यर्थः ॥ एवमविद्याकृतेति ॥ अविद्याकार्यत्व[र्यत्वा]दनिर्वाच्ये नामरूपे एवोपाधिर्माया तत्प्रतिबिम्बितब्रह्मातुरीश्वरो भवतीत्यर्थः । विद्यया तत्त्वतत्पदार्थविवेकेन ; अपसारितसर्वोपाधिविशेषे बिम्बभूते ब्रह्मणीत्यर्थः । स्वभावः नैसर्गिकी माया, प्रवर्तते । तदेवं श्रुतिस्मृतिपर्यालोचनया सोपाधिकत्वानुपाधिकत्वाभ्यां सविशेषत्वं निर्विशेषत्वं चाविरुद्धम् ॥

### भाष्यम्

सूत्रकारोऽपि परमार्थाभिप्रायेण "तदनन्यत्वम्" इत्याह; व्यवहाराभिप्रायेण तु "स्याल्लोकवत्" इति महासमुद्रस्थानीयतां ब्रह्मणः कथयति, अप्रत्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रियां चाश्रयति—सगुणेषूपासनेषूपयोक्ष्यत इति ॥

### प्रकटार्थविवरणम्

अत्रैव सूत्रकारसंमतिमाह—सूत्रकारोऽपीति ॥ यच्चोक्तम् 'न सूत्रकारः कश्चिदपि मायाशब्दं प्रयुङ्क्ते' इति, तदसत्; "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति सूत्रवचनात्; तत्र स्वप्ने मात्रग्रहणं कुर्वन् जागरणस्यापि मायामेयत्वं सूचयति। यच्च 'मायेति प्रज्ञोच्यते' इति व्याख्यानम्, तदसत्, मिथ्याभूते करिनरतुरगादौ मायाशब्दस्य लौकिकानां प्रयोगदर्शनात् वेदेऽपि "मायां तु प्रकृतिम्" इत्यत्र स एवार्थो ग्राह्यः। यच्चोक्तम् "अजामेकाम्" इति तेजोबन्नलक्षणाया भूतप्रकृतेः प्रकृतत्वात्सैव निर्मिमीते स्वविकारानिति व्युत्पत्त्या मायोच्यत इति, तदसत्, योगाद्रूढेर्बलीयस्त्वात्। "किंकारणं ब्रह्म" इति तेजःप्रभृतिकं प्रति ब्रह्मणो निरंशस्य कारणत्वासंभवाशङ्कायां तन्निर्वाहिकायाः शक्तेः स्वगुणैः निगूढायाः प्रक्रान्तत्वाच्च। तदेवं श्रुतिस्मृतिसूत्रप्रसिद्धो मायावाद इति स्थितम्। यदत्र भास्करो रुरोद "कथं मिथ्यात्वमवगतम्? न तावत्प्रत्यक्षानुमानाभ्यां[भ्याम्; ताभ्यां] हीदं प्रपञ्चजातं परिच्छिन्नम्; न च कारणदोषबाधकप्रत्ययौ स्तः; पृथिव्यादिज्ञानस्य आ संसारं सर्वेषां प्राणिनामनुवृत्तेः; अतः पारमार्थिक एवायं भेदः" इति, तत्र यदि प्रत्यक्षबाधाभावात् सत्यत्वमभिप्रेतम्, तदा चन्द्रप्रादेशत्ववर्णदैर्घ्यादिदेहाद्यात्मभावानामपि सत्यत्वप्रसङ्गः, तेषामप्यासंसारमनुवृत्तेः। अथ तत्रानुमानिकस्यागमिकस्य[स्य वा बाधस्य] विद्यमानत्वात्तत एव दोषस्यापि कल्प्यमानत्वादसत्यता सदा सिद्धैवावगम्यते, तर्हीहाप्यागमानुमानयोरुपन्यस्तत्वादविद्यादोषस्य च संभावितत्वात् प्रागनिर्ज्ञातमपि मिथ्यात्वमवगम्यताम्। यच्चोक्तम्—ब्रह्मज्ञानमपि तर्हि मिथ्या स्यादविद्याप्रसूतत्वात्, ज्ञानत्वाद्वा प्रपञ्चज्ञानवदिति, तदतिफल्गु; स्वरूपमिथ्यात्वसाधने सिद्धसाधनत्वात् विषयमिथ्यात्वसाधने

१. T, TM and A. मायामात्रत्वे   २. T and T[1]. उपलब्ध

## प्रकटार्थविवरणम्

चागमबाधितत्वात् । यच्च मिथ्याशब्दस्य तुच्छार्थत्वं गृहीत्वागमस्याबोधकत्वादिजल्पनं तत्परहस्याविज्ञानविजृम्भितमित्युपहसन्ति सुज्ञाः । तथा हि—मिथ्यात्वं नाम बाध्यत्वम्; तच्चाज्ञानकार्यस्य प्रत्यक्षबाधे ज्ञाननिवर्त्यत्वम्; परोक्षबाधे, मायाकार्ये वा परमार्थसत्त्ववैधुर्यप्रकटीकरणम् । न च तादृशमिथ्यात्वविशिष्टस्यार्थक्रियायां[1] काचित्क्षतिः घटस्येवानित्यताविशिष्टस्य । यच्च केशवेनोक्तम्—“यथा स्वप्ने सुरापानं न प्रायश्चित्तकारणं तथा जागरणेऽपि न स्यात्, मिथ्यात्वाविशेषात्” इति, तदसत्; क्षीरसुरादीनां द्रवद्रव्यताविशेषेऽप्यवान्तरवैलक्षण्यादर्थक्रियासामर्थ्यभेदवत् स्वप्नजागरितयोः मिथ्यात्वाविशेषेऽप्यवान्तरवैलक्षण्यादर्थक्रियासामर्थ्यविशेषोपपत्तेः । किञ्च तद्दुर्दमनं दुर्ज्ञानानां क्षुद्रोपद्रवमात्रम्, न प्रमाणसिद्धमिथ्यात्वमन्यथाकारं कर्तुं शक्नोतीति पुनः प्रयुज्यते—विमतं न सत्यं जडत्वात्, दृश्यत्वात्; परतन्त्रत्वात्, आत्मान्यत्वात्, विशिष्टत्वाद्वा, संप्रतिपन्नवत्; न च सर्वं सत्यमेवेत्यप्रसिद्धविशेषणत्वं पक्षस्येति केनापि वादिनापवदितव्यं पर [परस्पर]-पक्षस्य परस्परमसत्यताभ्युपगमात्, बाधव्यवहार[3]विलोपापाताच्च; शुक्तिरजताद्यनिर्वाच्यतायाः प्रसाधितत्वात्[4] तद्विरुद्धस्याप्रतिपत्तिः; न च बाध्यत्वमुपाधिः, बाध्यत्वादेव; न च दोषगम्यत्वम्[5], तद्गम्यस्य तद्धेतोस्तस्य [तत्त्वस्य] चामिथ्यात्वात्; न च दोषमात्रगम्यत्वं शुक्तिरूप्यस्यापि[6] संस्कारादेः कारणत्वात्, साधनव्यापकत्वाच्च; न च भ्रान्तिविषयत्वम्, अंशे व्यभिचारात्; न चाप्रामाणिकत्वम्, स्मृतिविषयस्यामिथ्यात्वात्; नापि प्रतीत्युच्छेद्यव्यवहारत्वम्, साध्यासमव्याप्तेः दिङ्मोहादौ व्यभिचारात् । न धर्मिग्राहकप्रमाणबाधः[7]; तथा हि—प्रत्यक्षं वर्तमानकालावच्छिन्नां सत्तां गृह्णाति; न च तदभावोऽनुमानेनावेद्यते, येन विरोधो भवेत् । किञ्च प्रत्यक्षस्याबाध्यार्थत्वसाधने सिद्धसाधनम्; अत्यन्ताबाध्यार्थत्वसाधने वर्तमानावभासिताविरोधः, आगमविरोधश्च । अद्वैतागमस्य त्वबाध्यार्थविषयस्या[8]नियतकालवस्तु[9]परिच्छेद-

१. P omits च

२. T and T¹ add च

३. A omits व्यवहार

४. P: न विरुद्धस्य

५. T, and T¹. गम्यत्वात्

६. T, T¹ and TM. शुक्तिभागस्यापि

७. T and T¹. प्रमाणबाध्यार्थः

८. TM. विषयाविषय

९. A omits वस्तु

## प्रकटार्थविवरणम्

कत्वादत्यन्ताबाध्यार्थपरिच्छेदकत्वमविरुद्धम् । तस्मादद्वैतागमवत् प्रत्यक्षस्य तत्त्वावेदकत्वाभावात् न धर्मिग्राहकप्रमाणबाधः; अप्रामाणिकत्वाच्चाश्रयासिद्धिः कुतः? किमप्रामाणिकत्वादेव? किं वान्यत्रादर्शनात्? उतासत्त्वादतिप्रसङ्गाद्वा? नाद्यः; एतमेव हेतुं प्रत्याश्रयत्वानाश्रयत्वयोः तदसिद्धेः; न द्वितीयः, प्रतिबिम्बादौ दर्शनात्; न तृतीयः, प्रतीतिपराहतेः; न चाप्रामाणिकत्वमसत्त्वव्याप्तमज्ञातसत्त्वेष्टेः; न चैवमाश्रयासिद्धिविलोपः, विधिव्यवहारे निरुपाख्यस्य तदयोग्यत्वात्; न च जडत्वादेः स्वात्मनि वृत्त्यभावेन भागासिद्धिः, भेदान्योन्याभावादिवत् स्वपरनिर्वाहकत्वात्; आत्मन्यनैकान्तिक इति चेन्न, स्वप्रकाशताया दर्शितत्वात्; परसिद्धात्मनश्च पक्षनिक्षेपात्; न च सन्दिग्धानैकान्तिकत्वम्, स्वप्रकाशत्वावगमादेवास्वप्रकाशतारूपजडताव्यावृत्तेः निश्चेतुं शक्यत्वात्; न चास्यैवानुमानस्य सत्यत्वासत्यत्वयोः अनैकान्तिकत्वासाधकत्वेऽसत्यस्यापि निर्दि[निर्दु]ष्टतयासाधकत्वात् प्रतिबिम्बवर्णदैर्घ्यादिवत्; तत्संवेदनस्य सत्यस्यैव साधकत्वं चेदिहापि जडत्वादिसंवेदनं साधकमस्तु; न [न च] आत्मभेदाच्च व्यभिचारः; अविच्छिन्नस्य च मिथ्याभूतस्यैव साधकत्वमसाधि । न चानवस्था, स्वाध्यायाविध्यादिवदुपपत्तेः । न चाविद्यानिवृत्तावनैकान्तिकता, तस्या अपि मिथ्यात्वात् "नेह नानास्ति किञ्चन" इत्यविशेषनिषेधात्; उपादानं [दाने] चैकवचनप्रयोगादेव अप्राप्तनानात्वप्रतिषेधप्रसङ्गादात्मातिरिक्तवस्त्वभाव एव तात्पर्यम् । न च मिथ्याकार्योपादानात् विद्या[दानत्वादविद्या]सद्भावप्रसङ्गः, प्रध्वंसस्य निरुपादानत्वात्; न च तस्या मिथ्यात्वेऽविद्यासद्भाव एव वास्तव इति वाच्यम्, तस्या मिथ्याभूताया मिथ्यानाशेनापि नाशसंभवात्, मायानिर्मितहस्त्यादिवत्; एतेनानिर्वचनीयस्य ज्ञानिर्वचनीया निवृत्तिरित्यपास्तम् । स्वप्नमायानाशवत् परेषां सत्यस्य घटस्य सत्यनाशवच्च; विमता निवृत्तिरविद्यातत्कार्ययोरन्यतरा मिथ्यात्वात्, तद्वच्च संबन्धेनैकान्तिकानिवृत्तिमत्त्वमुपाधिः; न च तदपि साध्यमनवस्थानात्; यत्र बाधावस्थितिः, सैवाविद्यानिवृत्तिः; आकाङ्क्षाधीने च विपक्षे बाधविरहादप्रयोजक-

१. TM. असमत्व

२. A. व्याप्तत्वात

३. T, T[1], P and TM. त्वादवगम

४. TM. आत्मा

५. T, T[1], P and TM. अनवस्थाप्यत्र

भाष्यम्

## भावे चोपलब्धेः ॥ २-१-१५ ॥

इतश्च कारणादनन्यत्वं कार्यस्य, यत्कारणं भाव एव कारणस्य कार्यमुपलभ्यते, नाभावे; तद्यथा—सत्यां मृदि घट उपलभ्यते, सत्सु च तन्तुषु पटः; न च नियमेनान्यभावेऽन्यस्योपलब्धिर्दृष्टा; न ह्यश्वो गोरन्यः सन् गोर्भाव एवोपलभ्यते; न च कुलालभाव एव घट उपलभ्यते, सत्यपि निमित्तनैमित्तिकभावेऽन्यत्वात् । नन्वन्यभावेऽप्यन्यस्योपलब्धिर्नियता दृश्यते, यथाग्निभावे धूमस्येति; नेत्युच्यते—उद्वापितेऽप्यग्नौ गोपालघुटिकादिधारितस्य धूमस्य दृश्यमानत्वात् ।

प्रकटार्थविवरणम्

ता बाध्या, सत्यत्वे तर्कसहत्वप्रसङ्गात्; न चायं भेदाभेदादितर्कं सासहीति संवित्संसर्गमार्गणवानपि; मिथ्यात्वधर्मविविक्तस्य मिथ्यात्वावगमात्; न कालात्ययापदिष्टता प्रतिज्ञा[ज्ञाता]र्थस्य सत्यत्वग्राहिणानपहारात्; बाध्यत्वमपि सत्यत्ववैधुर्यमेवेष्टम् । तावता कालात्ययापदिष्टत्वं वाक्छलमात्रम् । सत्यत्ववैधुर्यस्य च सं[तत्सं]सर्गाभावात्तस्मिन् सत्ये च तन्मिथ्यात्वसंभवाच्च सत्यतावत् स्वपरनिर्वाहकत्वात् । तस्मात् प्रपञ्चमिथ्यात्वे दोषाभावात्तद्ग्राहकाणां प्रत्यक्षादीनामतत्त्वावेदकत्वादद्वैतागमस्य न कश्चिद्विरोध इति स्थितम् ॥

भावे चोपलब्धेः ॥

पुनरप्युपादानात् कार्यस्य भेदो निरूपयितुं न शक्यत इत्याह अनिर्वाच्यत्वसमर्थनार्थमेव — इतश्च कारणादित्यादिना ॥ कार्यं नोपादानाद्वस्त्वन्तरं तद्भावानियतभावत्वात्; यद्यस्माद्वस्त्वन्तरं न तत्तद्भावानियतभावम्, यथा अश्वो न गोभावनियतभाव इति । नन्वकार्यकारणत्वात् गवाश्वयोरनियतिरित्याशङ्क्याह—न च कुलालभाव एवेति ॥ इदानीं हेतोर्व्यभिचारं शङ्कते—नन्वन्यभावेऽपीति ॥ धूममात्रस्य तावन्नाग्निभावेन नियतो भाव इति न व्यभिचार इत्याह—नेत्युच्यत इति ॥ यदि बहलोर्ध्वत्वादि-

१. T, T[1], P and TM omit न　　३. A omits भावः

२. A. न कारणात्　　४. TM. भावेऽपीति

भाष्यम्

अथ धूमं कयाचिदवस्थया विशिंष्यात्—ईदृशो धूमो नासत्यग्नौ भवतीति, नैवमपि कश्चिद्दोषः; तद्भावानुरक्तां हि बुद्धिं कार्यकारणयोरनन्यत्वे हेतुं वयं वदामः; न चासावग्निधूमयोर्विद्यते । "भावाच्चोपलब्धेः" इति वा सूत्रम् । न केवलं शब्दादेव कार्यकारणयोरनन्यत्वम्, प्रत्यक्षोपलब्धिभावाच्च तयोरनन्यत्वमित्यर्थः; भवति हि प्रत्यक्षोपलब्धिः कार्यकारणयोरनन्यत्वे; यद्यथा—तन्तुसंस्थाने पटे तन्तुव्यतिरेकेण पटो नाम कार्यं नैवोपलभ्यते, केवलास्तु तन्तव आतानवितानवन्तः प्रत्यक्षमुपलभ्यन्ते, तथा तन्तुष्वंशवः, अंशुषु तदवयवाः । अनया प्रत्यक्षोपलब्ध्या लोहितशुक्लकृष्णानि त्रीणि रूपाणि, ततो वायुमात्रमाकाश-

प्रकटार्थविवरणम्

विशिष्टस्याग्निभावनियतभावत्वमभिधीयते तर्हि मदीयहेत्वर्थस्यापि न व्यभिचार इत्याह — अथ धूममित्यादिना ॥ तद्भावनियतभावत्वादिति हेतोरयमर्थः—उपादानभावानुरक्तबुद्धिविषयत्वादिति । न चासौ बुद्धिरग्निधूमयोः विद्यते अग्नेर्निमित्तकारणत्वादिति भावः । पाठान्तरेणार्थान्तरमाह — भावाच्चेति ॥ प्रथमसूत्रे कारणात्कार्यस्यान्यत्वाभावे शब्दः प्रमाणमुपन्यस्तः; द्वितीये प्रथमपाठे [प्रथमपाठेऽनुमानम्; द्वितीये] प्रत्यक्षमिति विभागः; न तावत् पट इति स्वातन्त्र्योपलम्भः तन्तुव्यतिरिक्तपटसद्भावे प्रमाणं वर्णवदुपपत्तेः; नाप्येकबुद्धिविषयत्वं प्रावरणाद्येकार्थक्रियोपाधिकत्वात्, वर्णेष्विवैकपदबुद्धि [बुद्धेः]; नाप्येकदेशाकर्षणे सर्वाकर्षणं काष्ठभारवदुपपत्तेः; तस्माद्विरूप्यमाणे तन्तव एव संस्थानविशेषात् पटबुद्धिभाज इति भावः । एवं मूलकारणपर्यन्तं सर्वत्र कार्यं कारणव्यतिरिक्तं न भवतीत्यतिदिशति— तथा तन्तुष्वित्यादिना ॥ ननु प्रधानादीनामपि मूलकारणत्वात् कथं

१. A. भाव एवेतीदानीं हन्त तर्हि
२. A. न धूम
३. T. अन्यथा भावे
४. A. च । न चैवमुपपत्तेः
५. A. षित्वात्
६. T, T¹, P and TM omit देश

भाष्यम्

मात्रं चेत्यनुमेयम्, ततः परं ब्रह्मैकमेवाद्वितीयम्, तत्र सर्वप्रमाणानां निष्ठामवोचाम ॥

## सत्त्वाच्चावरस्य ॥ २-१-१६ ॥

इतश्च कारणात्कार्यस्यानन्यत्वम्, यत्कारणं प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वमवरकालीनस्य कार्यस्य श्रूयते—"सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादाविदंशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यात्; यच्च यदात्मना यत्र न वर्तते, न तत्तत उत्पद्यते, यथा सिकताभ्यस्तैलम्; तस्मात्प्रागुत्पत्तेरनन्यत्वादुत्पन्नमप्यनन्यदेव कारणात्कार्यमित्यवगम्यते । यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति, एवं कार्यमपि जगत्

प्रकटार्थविवरणम्

ब्रह्मैकमेव मूलं व्यवतिष्ठत इत्याशङ्क्याह[१]—तत्र सर्वेति ॥ सर्वेषां जगत्कारणवादिवाक्यानां ब्रह्मण्येव तात्पर्यमुक्तवन्तो वयम्; अतो नान्यन्मूलकारणमिति भावः ॥

सत्त्वाच्चावरस्य ॥

प्रमाणान्तरं भेदाभावे कथयति—सत्त्वाच्चेति॥ यदिदानीं स्थूलमुपलभ्यते तस्य सृष्टेः प्राक्[२] कारणसामानाधिकरण्यान्यथानुपपत्त्या तदा तत्तादात्म्योपगमादपि नास्ति वस्तुभेद इत्यर्थः । शुक्तितोऽपि सूक्ष्मरूपेण सृष्टेः प्राक् कारणतादात्म्यमवगम्यत इत्याह — यच्च यदात्मनेति ॥ सूत्रस्यार्थान्तरमाह — यथा च कारणमिति ॥ सत्त्वं भिद्यमानं किं वा सद्रूपेण भिद्यते, किं वासद्रूपेण? आद्ये यद्भिद्यते तदेव सत्; द्वितीये यतो भिद्यते तदेवैकम्; भेदकासाधारणाकारमन्तरेण भेदे नैकं किञ्चन स्यात्; न च सन् घट इत्यादावनुवृत्तव्यावृत्तसत्त्वद्वयग्राहिप्रत्ययंभेदो[३] दृश्यते । सदिदं रूप्यमितिवदापरोक्ष्यानु-

१. T and T¹ omits आशङ्क्य...इति ॥

२. TM omits सृष्टेः प्राक् कारण

३. A. प्रत्ययद्वयभेदो

भाष्यम्

त्रिषु कालेषु सत्त्वं न व्यभिचरति ; एकं च पुनः सत्त्वम् ; अतोऽप्यनन्यत्वं कारणात्कार्यस्य ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ २-१-१७ ॥

ननु क्वचिदसत्त्वमपि प्रागुत्पत्तेः कार्यस्य व्यपदिशति श्रुतिः— "असदेवेदमग्र आसीत्" इति, "असद्वा इदमग्र आसीत्" इति च ; तस्मादसद्व्यपदेशान्न प्रागुत्पत्तेः कार्यस्य सत्त्वमिति चेत्—नेति ब्रूमः ; न ह्ययमत्यन्तासत्त्वाभिप्रायेण प्रागुत्पत्तेः कार्यस्यासद्व्यपदेशः ; किं तर्हि, व्याकृतनामरूपत्वाद्धर्मादव्याकृतनामरूपत्वं धर्मान्तरम्, तेन धर्मान्तरेणायमसद्व्यपदेशः प्रागुत्पत्तेः सत एव कार्यस्य कारणरूपेणानन्यस्य ; कथमेतदवगम्यते ? वाक्यशेषात् । यदुपक्रमे संदिग्धार्थं वाक्यं तच्छेषान्निश्चीयते ; इह च तावत् "असदेवेदमग्र आसीत्" इत्यसच्छब्देनोपक्रमे निर्दिष्टं यत्, तदेव पुनस्तच्छब्देन परामृश्य, सदिति विशि-

प्रकटार्थविवरणम्

गमोपपत्तिः । अतः कारणवत् कार्यस्य सत्त्वात् सत्त्वभेदे च प्रमाणाभावा नास्ति वस्तुभेद इति भावः ॥

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥

कारणात्मना सत्त्वादिति पूर्वहेतोरसिद्धिमाशङ्क्य परिहरति—असद्व्यपदेशादित्यादिना ॥ "यदुपक्रमे सन्दिग्धार्थम्" इत्यस्यायमर्थः—यथा "अक्ताः शर्करा उपदधाति" इत्यत्र केनेति तैलघृतादिषु सन्देहे "तेजो वै घृतम्" इति वाक्यशेषवशात् घृतेनाभ्यक्ता इति निर्णीतम्, तथात्राप्यसच्छब्देन तुच्छमुच्यते व्यक्तसद्वैलक्षण्यं वेति सन्देहे वाक्यशेषे सत्त्वश्रवणात्तुच्छत्वं नोच्यत इति । किञ्च भूतकालसंबन्धिसत्ताभिधायकासीच्छब्दादपि

भाष्यम्

नहि—"तत्सदासीत्" इति—असतश्च पूर्वापरकालासंबन्धादासीच्छब्दानुपपत्तेश्च; "असद्वा इदमग्र आसीत्" इत्यत्रापि "तदात्मानं स्वयमकुरुत" इति वाक्यशेषे विशेषणान्नात्यन्तासत्त्वम्; तस्माद्धर्मान्तरेणैवायमसद्व्यपदेशः प्रागुत्पत्तेः कार्यस्य; नामरूपव्याकृतं हि वस्तु सच्छब्दार्हं लोके प्रसिद्धम्; अतः प्राङ्नामरूपव्याकरणादसदिवासीदित्युपचर्यते ॥

## युक्तेः शब्दान्तराच्च ॥ २-१-१८ ॥

युक्तेश्च प्रागुत्पत्तेः कार्यस्य सत्त्वमनन्यत्वं च कारणादवगम्यते, शब्दान्तराच्च ॥

युक्तिस्तावद्वर्ण्यते—दधिघटरुचकाद्यर्थिभिः प्रतिनियतानि कारणानि क्षीरमृत्तिकासुवर्णादीन्युपादीयमानानि लोके दृश्यन्ते; न हि दध्यर्थिभिर्मृत्तिकोपादीयते, न घटार्थिभिः क्षीरम्; तदसत्कार्यवादे नोपपद्येत; अविशिष्टे हि प्रागुत्पत्तेः सर्वस्य सर्वत्रासत्त्वे कस्मात्क्षीरादेव दध्युत्पद्यते, न मृत्तिकायाः? मृत्तिकाया एव च घट

प्रकटार्थविवरणम्

तुच्छत्वमसच्छब्दार्थो न भवतीत्याह—असतश्च पूर्वापरेति ॥ उक्तन्यायं वाक्यान्तरेऽप्यतिदिश्योपसंहरति—असद्वा इत्यादिना ॥

युक्तेः शब्दान्तराच्च ॥

सत्त्वान्यत्वयोः हेत्वन्तरमाह—युक्तेश्चेत्यादिना ॥ कार्यार्थिभिः कारणस्योपादानान्यथानुपपत्त्या कार्यस्य तत्र सत्त्वमवगम्यत इत्याह — दधिघटेति ॥ ननु दृश्यमाणकार्यजनकत्वात् मृदाद्युपादानं न तु सत्त्वादित्यन्यथाप्युपपत्तिमाशङ्क्याह—अविशिष्टे हीति ॥ भवेदन्यथाप्युपपत्तिः यद्यसज्जनकत्वं संभाव्येत; असत्त्वे तुल्ये नियामकादर्शनादिति भावः । नियामकमति-

१. A. अन्यथानुप

भाष्यम्

उत्पद्यते, न क्षीरात्? अथाविशिष्टेऽपि प्रागसत्त्वे क्षीर एव दध्नः कश्चिदतिशयो न मृत्तिकायाम्, मृत्तिकायामेव च घटस्य कश्चिदतिशयो न क्षीरे—इत्युच्यते—तर्ह्यतिशयवत्त्वात्प्रागवस्थाया असत्कार्यवादहानिः, सत्कार्यवादसिद्धिश्च; शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नान्या असती वा कार्यं नियच्छेत्, असत्त्वाविशेषादन्यत्वाविशेषाच्च; तस्मात्कारणस्यात्मभूता शक्तिः, शक्तेश्चात्मभूतं कार्यम्। अपि च कार्यकारणयोर्द्रव्यगुणादीनां चाश्वमहिषवद्भेदबुद्ध्यभावात्तादात्म्यमभ्युपगन्तव्यम्; समवायकल्पनायामपि समवायस्य समवायिभिः संबन्धेऽभ्युपगम्यमाने, तस्य तस्यान्योऽन्यः संबन्धः कल्पयितव्य इत्यनवस्थाप्रसङ्गः, अनभ्युपगम्यमाने च विच्छेदप्रसङ्गः; अथ समवायः स्वयं संबन्धरूपत्वादनपेक्ष्यैवापरं संबन्धं संबध्यते, संयोगोऽपि तर्हि

प्रकटार्थविवरणम्

शयं शङ्कते—अथाविशिष्टेऽपीति ॥ अतिशयो नातिशयवद्व्यतिरेकेण स्वतन्त्रं तिष्ठतीति कार्यस्यापि सद्भाव आपद्यत इत्याह—तर्ह्यतिशयवत्त्वादिति ॥ नन्वतिशयः कार्यधर्मो न भवति, किं तु कारणगता शक्तिरित्याशङ्क्याह—शक्तिश्चेति ॥ अन्वयव्यतिरेकावधारितस्य कारणस्य कार्योत्पादनियता शक्तिः कार्योत्पादप्रकल्प्यापि न कार्यासंसृष्टा, ताभ्यां भिन्ना कल्प्या; तथा सति नियामकत्वासंभवात्; अतोऽनभिव्यक्तकार्यसंसृष्टा शक्तिः तदभिव्यक्तिं नियमयतीत्यर्थः। किञ्चात्यन्तिकभेदे कदाचिद्भेदेनाप्युपलम्भो भवेत्; तदभावात् तादात्म्यभेदतन्मात्र[दात्म्यं भेदमात्र]विरोधिस्वरूपमभ्युपगन्तव्यमित्याह-अपि चेति ॥ ननु समवायसंबन्धात् पृथगनुपलम्भ इत्याशङ्क्याह — समवायेति ॥ तस्य समवायिभिः संबन्धोऽभ्युपगम्यते, नो वा? प्रथमे अनवस्था; द्वितीये कार्यकरणादीनां परस्परसंसृष्टत्वं न स्यात्, स्वयमसंसृष्टस्य संसृष्टत्वानापादकत्वादित्यर्थः। समवायस्य स्वरूपनिर्वाहकत्वात् नास्त्यनवस्थेत्याह— अथ समवाय इति ॥ अनिष्टापादनेन परिहरति—संयोगोऽपीति ॥ किमिदं स्वनिर्वाहकत्वं नाम? किं स्वव्यवहारे स्वजातीयनिरपेक्षत्वं प्रदीपवत्? किं

१. A omits न्तव्यमित्याह...संबन्धोऽभ्युपग   २. A adds समवायि

### भाष्यम्

स्वयं संबन्धरूपत्वादनपेक्ष्यैवापरं समवायं संबध्येत ;- तादात्म्यप्रतीतेश्च द्रव्यगुणादीनां समवायकल्पनानर्थक्यम् । कथं च कार्यमवयविद्रव्यं कारणेष्ववयवद्रव्येषु वर्तमानं वर्तेत ? किं समस्तेष्ववयवेषु वर्तेत, उत प्रत्यवयवम् ? यदि तावत्समस्तेषु वर्तेत, ततोऽवयव्यनुपलब्धिः प्रसज्येत,

### प्रकटार्थविवरणम्

वा स्वसंबन्धत्वो[संबन्धो]त्पत्तिनिमित्तत्वम् ? किं वा स्वसंसृष्टत्वव्यवहारप्रवर्तकत्वम् ? तत्राद्ये विशिष्टसमवायमात्रव्यवहारावतारोपकारः प्रकट एव। द्वितीये तु संबन्धोत्पत्तेः प्राक् पृथगवस्थानं सर्वेषाम् । तृतीये तु संबन्धान्तरविरहेण संसृष्टताया नभस्तलनलिनायमानत्वात् कुतो व्यवहारप्रवर्तकत्वमिति वस्तुतः स्वरूपनिर्वाहकता न निरूपणपद्धतिमध्यास्ते । किञ्च सिद्धे भेदे संबन्धप्रतीतौ वा समवायः कल्प्येत । इह तदभावात् समवायकल्पना व्यर्थेत्याह— तादात्म्यप्रतीतेश्चेति ॥ किञ्चायुतसिद्धानामाधाराधेयभूतानामिहप्रत्ययहेतुर्यः संबन्धः स समवाय इत्यलौकिकं समवायं लक्षयन्ति । तत्र भेदे सिद्धे सत्याधाराधेयभावसिद्धिः । तत्सिद्धौ च समवायसिद्धिः । ततश्च सामानाधिकरण्यस्यान्यथासिद्धौ भेदसिद्धिरिति चक्रकक्रकचार्दितं लक्षणमपि व्याकुलम् । या च 'इह घटे शौक्ल्यसमवायः' इत्यादिप्रतीतिः सा तेषामेव पारिभाषिकी, 'शुक्लो घटः' इत्यादिप्रतीतेरेव सर्वजनीनत्वात् आश्रयासिद्धिः; 'शुक्लो घटः' इति विशेषणविशेष्यभावः संबन्धनिबन्धनो जातिमद्विशेषणविशेष्यभावत्वाद्दण्डीति विशेषणविशेष्यभाववत् इत्यत्र विशेषणविशेष्यभावस्य द्रव्यादिष्वनन्तर्भावादनिरूपणासहत्वादाश्रयासिद्धिः । अतः समवायकल्पना न प्रमाणप्रयोजनवतीति कारणातिरिक्तं कार्यं तस्य स्वकारणे समवायलक्षणा वृत्तिरित्येतद्यपि समवायि[वाय]निरासेनैव निरस्तम्, तथाप्यधिकदोषाभिधित्सया विकल्पयति—कथं चेत्यादिना॥ प्रथमे दोषमाह—यदि तावदिति॥ यदनेकत्र

१. T, T[1], P and TM. पृथगुपस्थानं

२. T. Space is left out for writing तत्सिद्धौ च

३. T. Space is left out for writing नत्वादाश्रया

४. T. Space is left out for writing मवाय

५. A omits प्रमाण

६. T, T[1] and P. प्रक्रियावत्

भाष्यम्

समस्तावयवसंनिकर्षस्याशक्यत्वात्; न हि बहुत्वं समस्तेष्वाश्रयेषु वर्तमानं व्यस्ताश्रयग्रहणेन गृह्यते; अथावयवशः समस्तेषु वर्तेत, तदाप्यारम्भकावयवव्यतिरेकेणावयविनोऽवयवाः कल्प्येरन्, यैरारम्भकेष्ववयवेष्ववयवशोऽवयवी वर्तेत; कोशावयवव्यतिरिक्तैर्ह्यवयवैरसिः कोशं व्याप्नोति; अनवस्था चैवं प्रसज्येत, तेषु तेष्ववयवेषु वर्तयितुमन्येषामन्येषामवयवानां कल्पनीयत्वात्; अथ प्रत्यवयवं वर्तेत तदैकत्र व्यापारेऽन्यत्राव्यापारः स्यात्; न हि देवदत्तः स्रुघ्ने संनिधीयमानस्तदहरेव पाटलिपुत्रेऽपि संनिधीयेत; युगपदनेकत्र वृत्तावनेकत्वप्रसङ्गः स्यात्, देवदत्तयज्ञदत्तयोरिव स्रुघ्नपाटलिपुत्रनिवासिनोः; गोत्वादिवत्प्रत्येकं परिसमाप्तेर्न दोष इति चेत्, न; तथा प्रतीत्यभावात्; यदि गोत्वादिवत्प्रत्येकं परिसमाप्तोऽवयवी स्यात्, यथा गोत्वं प्रतिव्यक्ति प्रत्यक्षं गृह्यते, एवमवयव्यपि प्रत्यवयवं प्रत्यक्षं गृह्येत; न चैवं नियतं गृह्यते, प्रत्येकपरिसमाप्तौ चावयविनः कार्येणाधिकारात्, तस्य चैकत्वात्, शृङ्गेणापि स्तनकार्यं कुर्यात्, उरसा च पृष्ठकार्यम्; न चैवं

प्रकटार्थविवरणम्

वर्तमानं तदनेकग्रहणं विना[1] न गृह्यते यथा बहुत्वं प्रव्यस्तानम्। पराचीनानां च अवयवानामर्वाचीनावयवव्यवधानात् ग्रहणमशक्यमित्यवयविनो ग्रहणं न स्यादित्यर्थः। बहुत्वस्यैकरूपत्वात् यद्यप्यग्रहणम्, तथाप्यवयविनो बहुप्रदेशत्वादेकावयवसंनिकर्षेऽप्येकं रूपं ग्रहीतुं शक्यत इत्याह—अथावयवश इति॥ अनवस्थाप्रसङ्गेन परिहरति—तदापीत्यादिना॥ द्वितीयविकल्पमुत्थाप्य दूषयति—अथ प्रत्यवयवमित्यादिना॥ यथा गोत्वस्य युगपदनेकत्र वृत्तावपि नानेकत्वं तथा भविष्यतीत्याह-गोत्वादिवदिति[2]॥ अनुभवविरोधेन परिहरति-न तथेति॥ इतश्च नावयविनः प्रत्येकसमाप्तिरित्याह—प्रत्येकसमाप्तौ चेति॥ अधिकारात् संबन्धात्; तस्मादतिरिक्तस्यावयविनो निरूपणासहत्वादसन्नवयवी

१. T, T¹ and P. अर्वाचीनोऽवय TM. अर्वाचीनानाम

२. T, T¹, P and TM. गोत्वादेवेति

### भाष्यम्

दृश्यते । प्रागुत्पत्तेश्च कार्यस्यासत्त्वे, उत्पत्तिरकर्तृका निरात्मिका च स्यात्; उत्पत्तिश्च नाम क्रिया, सा सकर्तृकैव भवितुमर्हति, गत्यादिवत्[1]; क्रिया च नाम स्यात्, अकर्तृका च—इति विप्रतिषिध्येत; घटस्य चोत्पत्तिरुच्यमाना न घटकर्तृका, किं तर्ह्यन्यकर्तृका—इति कल्प्या स्यात्; तथा कपालादीनामप्युत्पत्तिरुच्यमानान्यकर्तृकैव कल्प्येत; तथा च सति 'घट उत्पद्यते' इत्युक्ते, 'कुलालादीनि कारणान्युत्पद्यन्ते' इत्युक्तं स्यात्; न च लोके घटोत्पत्तिरित्युक्ते कुलालादीनामप्युत्पद्यमानता प्रतीयते, उत्पन्नताप्रतीतेः; अथ स्वकारणसत्तासंबन्ध एवोत्पत्तिरात्मलाभश्च कार्यस्येति चेत्—कथमलब्धात्मकं संबध्येतेति वक्तव्यम्; सतोर्हि द्वयोः संबन्धः संभवति, न सदसतोरसतोर्वा; अभावस्य च निरुपाख्यत्वात्प्रागुत्पत्तेरिति मर्यादाकरण-

### प्रकटार्थविवरणम्

जायत इत्यसङ्गतम् । इतश्चासत्कार्यवादोऽनुपपन्न इत्याह—प्रागुत्पत्तेश्चेति ॥ उत्पत्तिः साश्रया क्रियात्वाद्गमिवत्; उत्पद्यमानं च तस्या आश्रयः तदभावे सा न स्यादेवेत्यर्थः । क्रियात्वमसिद्धमित्याशङ्क्याह — उत्पत्तिश्च नामेति ॥ धात्वर्थत्वाद्गमनवदित्यर्थः । अकर्तृत्वे च स्वातन्त्र्यप्रसङ्ग इत्यभिप्रेत्याह— क्रिया च नामेति ॥ ननु कुलालादिकर्तृका भविष्यति घटोत्पत्तिरित्याशङ्क्याह—घटस्य चोत्पत्तिरिति ॥ उत्पादयिता कुलालो न तूत्पत्ता; तस्मात् कुलाल एव घटस्योत्पत्तिकर्तेत्यनुपपन्नं कल्पनीयं स्यात्; तच्चानुभवविरुद्धमिति भावः । उत्पत्तिः क्रियेति स्वाभिप्रायेणोक्त्वा स्वकारणसमवायः सत्तासमवायो वा जनिरिति तार्किकाभिप्रायमुद्भाव्य दूषयति — अथ स्वकारणेत्यादिना ॥ अनित्यत्वाज्जन्मनः प्रध्वंसस्यापि जन्माभ्युपगमाच्च । किञ्च विमतं न कारणेन सत्तया वा संबध्यतेऽसत्त्वात् नरविषाणवदित्यर्थः । ननु—नरविषाणमत्यन्तासत्, कार्यं तु प्रागसदिति विशेष इत्याशङ्क्याह— अभावस्य चेति ॥ असतः पूर्वकालसंबन्धाभावे प्राक्त्वं वाङ्मात्रमिति भावः ।

१. A. गतिवत्

भाष्यम्

मनुपपन्नम्; सतां हि लोके क्षेत्रगृहादीनां मर्यादा दृष्टा नाभावस्य; न हि, वन्ध्यापुत्रो राजा बभूव प्राक्पूर्णवर्मणोऽभिषेकादित्येवंजातीयकेन मर्यादाकरणेन निरुपाख्यो वन्ध्यापुत्रः—राजा बभूव भवति भविष्यतीति वा—विशेष्यते; यदि च वन्ध्यापुत्रोऽपि कारकव्यापारादूर्ध्वमभविष्यत्, तत इदमप्युपापत्स्यत कार्याभावोऽपि कारकव्यापारादूर्ध्वं भविष्यतीति; वयं तु पश्यामः—वन्ध्यापुत्रस्य कार्याभावस्य चाभावत्वाविशेषात्, यथा वन्ध्यापुत्रः कारकव्यापारादूर्ध्वं न भविष्यति, एवं कार्याभावोऽपि कारकव्यापारादूर्ध्वं न भविष्यतीति । नन्वेवं सति कारकव्यापारोऽनर्थकः प्रसज्येत; यथैव हि प्राक्सिद्धत्वात्कारणस्वरूपसिद्धये न कश्चिद्व्याप्रियते, एवं प्राक्सिद्धत्वात्तदनन्यत्वाच्च कार्यस्य स्वरूपसिद्धयेऽपि न कश्चिद्व्याप्रियेत; व्याप्रियते च; अतः कारकव्यापारार्थवत्त्वाय मन्यामहे, प्रागुत्पत्तेरभावः कार्यस्येति चेत्, नैष दोषः; यतः कार्याकारेण कारणं व्यवस्थापयतः कारकव्यापारस्यार्थवत्त्वमुपपद्यते; कार्याकारोऽपि कारणस्यात्मभूत एव, अनात्मभूतस्या-

प्रकटार्थविवरणम्

असत् मर्यादाशून्यम्, असत्त्वात्, वन्ध्यापुत्रवदित्युक्तम् । ननु वन्ध्यापुत्रः कारकव्यापारादूर्ध्वमपि नोपपद्यते; कार्यं तूपत्पत्स्यत इत्याशङ्क्याह—यदि च वन्ध्यापुत्र इति ॥ उत्पत्स्यते [उपापत्स्यत] उपपन्नमभविष्यत् ॥ कार्याभावोऽपीति॥ असत्कार्यमित्यर्थः । कस्तर्हि निर्णय इत्यशङ्क्याह—वयं त्विति ॥ यदसत्तदसदेव, न कदाचित्सत्त्वमापद्यते; सच्च नासत्त्वमापद्यते स्वभाववैपरीत्यायोगादिति भावः । इदानीं कारकव्यापारस्यार्थवत्त्वान्यथानुपपत्त्या कार्यस्यासत्त्वं वक्तव्यमित्याह—नन्वेवं सतीति ॥ अन्यथाप्युपपत्त्या परिहरति—नैष दोष इति ॥ ननु कारणं कार्याकारं कर्तुं यदि कारकव्यापारस्तर्हि कार्याकारोऽसन्नेव जायत इत्यायातमित्याशङ्क्याह—कार्याकारोऽपीति ॥ यदि प्राक्तनोऽपि रूपेण

१. T and T¹. अशाङ्क्यं

२. T. कार्यकारणयोः
TM. कार्याकारस्तन्

भाष्यम्

नारभ्यत्वात्—इत्यभाणि ; न च विशेषदर्शनमात्रेण वस्त्वन्यत्वं भवति ; न हि देवदत्तः संकुचितहस्तपादः प्रसारितहस्तपादश्च विशेषेण दृश्यमानोऽपि वस्त्वन्यत्वं गच्छति, स एवेति प्रत्यभिज्ञानात् ; तथा प्रतिदिनमनेकसंस्थानानामपि पित्रादीनां न वस्त्वन्यत्वं भवति, 'मम पिता' 'मम भ्राता' 'मम पुत्रः' इति प्रत्यभिज्ञानात् ; जन्मोच्छेदानन्तरितत्वात्तत्र युक्तं नान्यत्रेति चेत्, न ; क्षीरादीनामपि दध्याद्याकारसंस्थानस्य प्रत्यक्षत्वात् ; अदृश्यमानानामपि वटधानादीनां समानजातीयावयवान्तरोपचितानामङ्कुरादिभावेन दर्शनगोचरतापत्तौ जन्मसंज्ञा ; तेषा-

प्रकटार्थविवरणम्

कार्यं नासीत्तदा स्यादसत्कार्यवादः ; कारणात्मना तु सूक्ष्मरूपेण यदासीत्तदेव यदा स्थूलं भवति तदा कुतोऽसत्कार्यवाद इत्यर्थः । ननु कार्यमुपादानाद्भिन्नम्, तद्विरुद्धधर्माक्रान्तत्वात् वस्त्वन्तरवदित्याशङ्क्याह—न च विशेषेति ॥ उदाहरणान्तरेण व्यभिचारमाह — तथा प्रतिदिनमिति ॥ पिण्डमुपमृद्य घटो जायते, बीजं चोपमृद्य अङ्कुरो जायत इति जन्मविनाशलक्षणविरुद्धधर्माक्रान्तत्वं मया हेतुत्वेनोपक्रान्तम्, तस्य च व्यभिचारो नास्तीत्याह—जन्मोच्छेदेति ॥ दृष्टान्ते जन्मोच्छेदव्यवधानाभावात् वस्त्वन्यत्वं नास्तीत्येतद्युक्तम् ; दार्ष्टान्तिके तु वस्त्वन्यत्वमेव जन्मोच्छेदलक्षणविरुद्धधर्माक्रान्तत्वादित्येतन्न वक्तव्यम्, हेतोरसिद्धत्वादित्याह—न क्षीरादीनामपीति ॥ क्षीरमृत्सुवर्णादीनां दध्यादिभावस्य प्रत्यक्षत्वात् संस्थानविनाशेऽपि तदन्वयिन एवोपादानत्वात् असिद्धो हेतुरित्यर्थः । ननु यत्रान्वयो दृश्यते तत्रास्त्वसिद्धिः ; यत्र तु वटबीजादीनां अङ्कुरादावन्वयो न दृश्यते, जन्मोच्छेदव्यवधानात् तत्र वस्त्वन्यत्वमेवेत्याशङ्क्याह—अदृश्यमानानामपीति ॥ तत्राप्यन्वयिनाम-

१. A. उपात्त
२. A. विलक्षण
३. T, T¹, P and TM. स्थानमविनाशे
४. P. and TM. वट-
A. वटबीजानां
५. A omits अपि

## भाष्यम्

मेवावयवानामपचयवशाददर्शनापत्तावुच्छेदसंज्ञा ; तत्रेदृग्जन्मोच्छेदान्तरितत्वाच्चेदसतः सत्त्वापत्तिः, सतश्चासत्त्वापत्तिः, तथा सति गर्भवासिन उत्तानशायिनश्च भेदप्रसङ्गः ; तथा च बाल्ययौवनस्थाविरेष्वपि भेदप्रसङ्गः, पित्रादिव्यवहारलोपप्रसङ्गश्च ; एतेन क्षणभङ्गवादः प्रतिवदितव्यः । यस्य पुनः प्रागुत्पत्तेरसत्कार्यम्, तस्य निर्विषयः कारकव्यापारः स्यात्, अभावस्य विषयत्वानुपपत्तेः—आकाशहननप्रयोजनखड्गाद्यनेकायुधप्रयुक्तिवत् ; समवायिकारणविषयः कारकव्यापारः स्यादिति चेत्, न ; अन्यविषयेण कारकव्यापारेणान्यनिष्पत्तेरतिप्रसङ्गात् ; समवायिकारणस्यैवात्मातिशयः कार्यमिति चेत्, न ; सत्कार्यतापत्तेः । तस्मात्क्षीरादीन्येव द्रव्याणि दध्यादिभावेनावतिष्ठमानानि कार्याख्यां लभन्त इति न कारणादन्यत्कार्यं वर्षशतेनापि शक्यं कल्पयितुम् । तथा मूलकारणमेवान्त्यात्कार्यात्तेन तेन कार्याकारेण नटवत्सर्वव्यवहारास्पदत्वं प्रतिपद्यते । एवं युक्तेः, कार्यस्य प्रागुत्पत्तेः सत्त्वम्, अनन्यत्वं च कारणात्, अवगम्यते ॥

शब्दान्तराच्चैतदवगम्यते—पूर्वसूत्रेऽसद्व्यपदेशिनः शब्दस्योदाहृतत्वात्ततोऽन्यः सद्व्यपदेशी शब्दः शब्दान्तरम्—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादि । "तद्धैक आहुरसदेवेदमग्र आसीत्" इति चासत्पक्षमुपक्षिप्य "कथमसतः सज्जायेत" इत्याक्षिप्य "सदेव

## प्रकटार्थविवरणम्

अवयवानां न स्त एव जन्मोच्छेदौ ; किन्त्ववयवोपचयापचयनिबन्धनो जन्मोच्छेदव्यवहारः । तावन्मात्राच्चेद्वस्तुभेदस्तदानैकान्तिकत्वमतिप्रसङ्गश्चेति भावः । अन्वयिकारणस्य प्रत्यभिज्ञायमानत्वेन नित्यत्वसाधनेन क्षणिकवादोऽपि प्रत्युक्तो वेदितव्यः इति प्रसङ्गादतिदिशति—एतेनेति ॥ पूर्वमर्थापत्तेरन्यथाप्युपपत्तिरुक्ता ; अधुनान्यथैवोपपत्तिमाह—यस्य पुनरिति ॥ प्रकृतमुपसंहृत्य परिशिष्टं सूत्रपदं व्याचष्टे—तस्मादित्यादिना ॥

१. T and T¹. अवयविनां
२. T, P, TM and A. त्वे
३. TM adds ननु

भाष्यम्

सोम्येदमग्र आसीत्" इत्यवधारयति; तत्रेदंशब्दवाच्यस्य कार्यस्य प्रागुत्पत्तेः सच्छब्दवाच्येन कारणेन सामानाधिकरण्यस्य श्रूयमाणत्वात्, सत्त्वानन्यत्वे प्रसिध्यतः। यदि तु प्रागुत्पत्तेरसत्कार्यं स्यात्, पश्चाच्चोत्पद्यमानं कारणे समवेयात्, तदन्यत्कारणात्स्यात्, तत्र "येनाश्रुतं श्रुतं भवति" इतीयं प्रतिज्ञा पीड्येत; सत्त्वानन्यत्वावगतेस्त्वियं प्रतिज्ञा समर्थ्यते ॥

## पटवच्च ॥ २-१-१९ ॥

यथा च संवेष्टितः पटो न व्यक्तं गृह्यते—किमयं पटः, किं वान्यद्द्रव्यमिति, स एव प्रसारितः, यत्संवेष्टितं द्रव्यं तत्पट एवेति प्रसारणेनाभिव्यक्तो गृह्यते। तथा च संवेष्टनसमये पट इति गृह्यमाणोऽपि न विशिष्टायामविस्तारो गृह्यते; स एव प्रसारणसमये विशिष्टायामविस्तारो गृह्यते—न संवेष्टितरूपादन्योऽयं भिन्नः पट इति, एवं तन्त्वादिकारणावस्थं पटादिकार्यमस्पष्टं सत्, तुरीवेमकुविन्दादिकारकव्यापाराभिव्यक्तं स्पष्टं गृह्यते। अतः संवेष्टितप्रसारितपटन्यायेनैवानन्यत्कारणात्कार्यमित्यर्थः ॥

प्रकटार्थविवरणम्

किमिति महता प्रबन्धेन कार्यस्य सत्यत्वानन्यत्वे सूत्रकारः साधयतीत्याशङ्क्याह—यदि तु प्रागुत्पत्तेरिति ॥

पटवच्च ॥

ननु कार्यमुपादानाद्भिन्नम्, तस्मिन्नुपलभ्यमानेऽप्यनुपलभ्यमानत्वात्, वस्त्वन्तरवत्, इत्याशङ्क्यानैकान्तिकत्वमाह—यथा चेत्यादिना ॥ कार्यमुपादानाद्भिन्नम्, ततोऽधिकपरिमाणत्वात्, वस्त्वन्तरवदित्याशङ्क्यानैकान्तिकत्वमाह—तथा च संवेष्टनेति ॥

भाष्यम्

## यथा च प्राणादि ॥ २-१-२० ॥

यथा च लोके प्राणापानादिषु प्राणभेदेषु प्राणायामेन निरुद्धेषु कारणमात्रेण रूपेण वर्तमानेषु जीवनमात्रं कार्यं निर्वर्त्यते, नाकुञ्चनप्रसारणादिकं कार्यान्तरम्; तेष्वेव प्राणभेदेषु पुनः प्रवृत्तेषु जीवनादधिकमाकुञ्चनप्रसारणादिकमपि कार्यान्तरं निर्वर्त्यते; न च प्राणभेदानां प्रभेदवतः प्राणादन्यत्वम्, समीरणस्वभावाविशेषात्—एवं कार्यस्य कारणादनन्यत्वम्। अतश्च कृत्स्नस्य जगतो ब्रह्मकार्यत्वात्तदनन्यत्वाच्च सिद्धैषा श्रौती प्रतिज्ञा—"येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इति ॥

प्रकटार्थविवरणम्

### यथा च प्राणादि ॥

कार्यमुपादानाद्भिन्नम्, भिन्नार्थक्रियाकारित्वात्, वस्त्वन्तरवदित्याशङ्कयानैकान्तिकत्वमाह—यथा च लोक इति ॥ एवं तावल्लोके कारणात् कार्यस्य पृथक्सत्ता नास्तीत्युपपाद्य ब्रह्मण्युपसंहरति—अतश्च कृत्स्नस्येति ॥ तदेवमत्यन्तभेदवादः प्रबन्धेन निरस्तः। एकान्ततः कार्यकारणयोरभेदेऽपि कार्येण कारणानुमानादिव्यवहाराभावप्रसङ्गात् सोऽपि विशदाबद्ध इत्युपेक्षितः। क्षपणकाधिकरणे त्वनैकान्तवादं स्वयमेवापाकरिष्यति; विरोधाच्च भेदाभेदयोरेकत्रासंभवः स्फुट एव। यदप्यभाणि भास्करेण "प्रमाणसिद्धत्वात् कोऽयं विरोधः" इति, तत्र ब्रूमः—सत्यम्, यदि भेदाभेदग्राहकं प्रमाणं स्यात्; न तावन्मृद्घट इति प्रत्यक्षम्, तस्य घटस्य मृदात्मतामात्रविषयत्वेन भेदाभेदयोरौदासीन्यात्; नाप्यनुवृत्तव्यावृत्तप्रत्ययाभ्याम्, प्रत्यययोः संभूय प्रमापकत्वे सापेक्षप्रामाण्यप्रसङ्गात्; न चोभयान्यथानुपपत्तिः प्रमाणम्, ह्रस्वोऽकारो दीर्घोऽकार इत्यनुवृत्तव्यावृत्तप्रत्ययद्वये अकारस्य ह्रस्वतादिभिः भेदाभेदानङ्गीकारात्। तस्मात् भेदे न किञ्चन प्रमाणमस्तीति यथासंभवं भेदो

१. A. न्तिकत्वाद  
२. T, T[1], P and TM. करास्य  
३. A. ष्वकारस्य  
४. T, T[1], P and TM. तस्मात् भेदाभेदेनैकं

भाष्यम्

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २-१-२१ ॥

अन्यथा पुनश्चेतनकारणवाद आक्षिप्यते—चेतनाद्धि जगत्प्रक्रियायामाश्रीयमाणायां हिताकरणादयो दोषाः प्रसज्यन्ते; कुतः? इतरव्यपदेशात्। इतरस्य शारीरस्य ब्रह्मात्मत्वं व्यपदिशति श्रुतिः—"स आत्मा तत्त्वमसि श्वेतकेतो" इति प्रतिबोधनात्; यद्वा—इतरस्य च ब्रह्मणः शारीरात्मत्वं व्यपदिशति—"तत्सृष्ट्वा। तदेवानुप्राविशत्।" इति स्रष्टुरेवाविकृतस्य ब्रह्मणः कार्यानुप्रवेशेन शारीरात्मत्वदर्शनात्; "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति च परा देवता जीवमात्मशब्देन व्यपदिशन्ती, न ब्रह्मणो भिन्नः शारीर इति दर्शयति; तस्माद्यद्ब्रह्मणः स्रष्टृत्वं तच्छारीरस्यैवेति। अतश्च स्वतन्त्रः कर्ता सन् हितमेवात्मनः सौमनस्यकरं कुर्यात्, नाहितं जन्ममरणजरा-

प्रकटार्थविवरणम्

ऽनिर्वाच्योऽभ्युपेयः; तत्त्वे तु न भेदगन्धोऽप्यस्तीति नाद्वैतावगमस्य प्रत्यक्षादिविरोध इति सिद्धम् ॥

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥

जीवाभिन्नाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विषयः। तस्य चेतनस्य स्वानर्थकार्यहेतुत्वं न संभवतीति लौकिकन्यायेन विरोधोऽस्त्युत नेति सन्देहः। पूर्वं द्वैतस्य मिथ्यात्वापादनेन तद्विषयप्रत्यक्षादेः अतत्त्वावेदकं[त्वावेदकत्वात्] प्रामाण्यमिति विरोधः परिहृतः; इह तु प्रत्यक्षादेरतत्त्वावेदकत्वेन विरोधाभावेऽपि चेतनस्य स्वतन्त्रस्य स्वानर्थकार्यहेतुत्वादर्शनेन विरोध इति पूर्वपक्षमुपक्रमते—अन्यथा पुनरिति ॥ ब्रह्म स्वानिष्टकार्यस्य कारणं न भवति, बुद्धिपूर्व-

१. T, T[1] and TM omit कार्य

भाष्यम्

रोगाद्यनेकानर्थजालम्; न हि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वानुप्रविशति; न च स्वयमत्यन्तनिर्मलः सन् अत्यन्तमलिनं देहमात्मत्वेनोपेयात्; कृतमपि कथंचिद्यद्दुःखकरं तदिच्छया जह्यात्; सुखकरं चोपाददीत; स्मरेच्च—मयेदं जगद्बिम्बं विचित्रं विरचितमिति; सर्वो हि लोकः स्पष्टं कार्यं कृत्वा स्मरति—मयेदं कृतमिति; यथा च मायावी स्वयं प्रसारितां मायामिच्छयानायासेनैवोपसंहरति, एवं शारीरोऽपीमां सृष्टिमुपसंहरेत्; स्वकीयमपि तावच्छरीरं शारीरो न शक्नोत्यनायासेनोपसंहर्तुम्; एवं हितक्रियाद्यदर्शनादन्याय्या चेतनाज्जगत्प्रक्रियेति गम्यते ॥

# अधिकं तु भेदनिर्देशात् ॥ २-१-२२ ॥

तुशब्दः पक्षं व्यावर्तयति। यत्सर्वज्ञं सर्वशक्ति ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं शारीरादधिकमन्यत्, तद्वयं जगतः स्रष्टृ ब्रूमः; न तस्मिन्हिताकरणादयो दोषाः प्रसज्यन्ते; न हि तस्य हितं किंचित्कर्तव्यमस्ति, अहितं वा परिहर्तव्यम्, नित्यमुक्तस्वभावत्वात्; न च तस्य ज्ञानप्रतिबन्धः शक्तिप्रतिबन्धो वा क्वचिदप्यस्ति, सर्वज्ञत्वात्सर्वशक्ति-

प्रकटार्थविवरणम्

कारित्वात्, देवदत्तवदित्याह—न हि कश्चिदपरतन्त्र इति ॥ हिताकरणादीत्यादिशब्दसूचितं[1] दोषान्तरमाह—न च स्वयमित्यादिना ॥

अधिकं तु भेदनिर्देशात् ॥

सिद्धान्तसूत्रमवतारयति—अधिकं त्विति ॥ ब्रह्म स्वानिष्टस्य कार्यस्य कारणं न भवतीत्येतदसिद्धसाधनम्, तस्यानिष्टाभावादेवेत्यर्थः। ननु शारीराच्छारीरादभेदात् ब्रह्मणोऽप्यज्ञत्वादिप्रसङ्ग इत्याशङ्क्याह—न च तस्य ज्ञानप्रतिबन्ध इति ॥ यथा घटाकाशादल्पत्वादिविशिष्टादभेदेऽपि महाकाशस्य

१. T, T¹, P and TM. सूचितदोषा-

भाष्यम्

त्वाच्च ; शारीरस्त्वनेवंविधः ; तस्मिन्प्रसज्यन्ते हिताकरणादयो दोषाः ; न तु तं वयं जगतः स्रष्टारं ब्रूमः ; कुत एतत् ? भेदनिर्देशात्—“आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः” “सोऽन्वेष्टव्यः स विजिज्ञासितव्यः” “सता सोम्य तदा संपन्नो भवति” “शारीर आत्मा प्राज्ञेनात्मनान्वारूढः” इत्येवंजातीयकः कर्तृकर्मादिभेदनिर्देशो जीवादधिकं ब्रह्म दर्शयति । नन्वभेदनिर्देशोऽपि दर्शितः “तत्त्वमसि” इत्येवंजातीयकः ; कथं भेदाभेदौ विरुद्धौ संभवेयाताम् ? नैष दोषः, महाकाशघटाकाशन्यायेनोभयसंभवस्य तत्र तत्र प्रतिष्ठापितत्वात् । अपि च यदा “तत्त्वमसि” इत्येवंजातीयकेनाभेदनिर्देशेनाभेदः प्रतिबोधितो भवति, अपगतं भवति तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वम्, समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग्ज्ञानेन बाधितत्वात् ; तत्र कुत एव सृष्टिः ? कुतो वा हिताकरणादयो दोषाः ? अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातोपाध्यविवेककृता हि भ्रान्तिर्हिताकरणादिलक्षणः संसारः, न तु परमार्थतोऽस्तीत्यसकृदवोचाम—जन्ममरणच्छेदनभेदनाद्यभिमानवत् ; अबाधिते तु भेदव्यवहारे “सोऽन्वेष्टव्यः स विजिज्ञासितव्यः” इत्येवंजातीयकेन भेदनिर्देशेनावगम्यमानं ब्रह्मणोऽधिकत्वं हिताकरणादिदोषप्रसक्तिं निरुणद्धि ॥

प्रकटार्थविवरणम्

न तद्धर्मप्राप्तिः, तथा जीवाद[१]भिन्नमपि ब्रह्म न तद्धर्मभागित्यर्थः । पूर्ववाद्युक्तं स्मारयति—नन्वभेदेति ॥ भेदस्येतरस्य च सत्यत्वे ज्ञानात्तन्निवृत्त्यसंभवस्य प्रदर्शितत्वादौपाधिकभेदालम्बना भेदश्रुतिः, स्वाभाविकाभेदालम्बना चाभेदश्रुतिरिति न कश्चिद्विरोध इत्याह—नैष दोष इति ॥ इतश्च पारमार्थिकभेदाभिप्रायेण न जीवब्रह्मणोरितरेतरधर्मसांकर्यमित्याह— अपि चेत्यादिना ॥

१. T, T¹ and P. जीवाभिन्न

भाष्यम्

## अश्मादिवच्च तदनुपपत्तिः ॥ २-१-२३ ॥

यथा च लोके पृथिवीत्वसामान्यान्वितानामप्यश्मनां केचिन्महार्हा मणयो वज्रवैडूर्यादयः, अन्ये मध्यमवीर्याः सूर्यकान्तादयः, अन्ये प्रहीणाः श्ववायसप्रक्षेपणार्हाः पाषाणाः—इत्यनेकविधं वैचित्र्यं दृश्यते; यथा चैकपृथिवीव्यपाश्रयाणामपि बीजानां बहुविधं पत्रपुष्पफलगन्धरसादिवैचित्र्यं चन्दनकिंपाकादिषूपलक्ष्यते; यथा चैकस्याप्यन्नरसस्य लोहितादीनि केशलोमादीनि च विचित्राणि कार्याणि भवन्ति—एवमेकस्यापि ब्रह्मणो जीवप्राज्ञपृथक्त्वं कार्यवैचित्र्यं चोपपद्यत इत्यतस्तदनुपपत्तिः; परपरिकल्पितदोषानुपपत्तिरित्यर्थः। श्रुतेश्च प्रामाण्यात्, विकारस्य च वाचारम्भणमात्रत्वात्स्वप्नदृश्यभाववैचित्र्यवच्च—इत्यभ्युच्चयः ॥

प्रकटार्थविवरणम्

अश्मादिवच्च तदनुपपत्तिः ॥

ननु कथमेकस्यैव चिद्धातोः कस्मिंश्चिदुपाधौ स्रष्टृत्वं[1] कस्मिंश्चित्संसारित्वं तद्विकाराणां चेष्टत्वमनिष्टत्वं चेति वैचित्र्यमित्याशङ्क्य दृष्टान्तेन संभावयति—यथा च लोक इत्यादिना ॥ किंपाक इति महाताले[2]फलम्। सूत्रगतचकारस्यार्थमाह—श्रुतेश्चेत्येवमादिना ॥ ब्रह्मानिष्टस्रष्टृ न भवति, जीवाद्यानिष्टसंबन्धिनो नाभेदं क्षमेते[3], स्वतन्त्रचेतनत्वात्, देवदत्तवत्, इत्यनुमानं श्रुतिबाधितमित्यर्थः। ब्रह्म स्वाभिन्नं जीवं न पश्यति चेदसर्वज्ञता; पश्यति चेत् स्वात्मन्येव संसारं पश्येदित्यपि कुचोद्यमित्याह—विकारस्य चेति ॥ यथा कृपाणादौ मलिनमात्मानं पश्यन्नपि देवदत्तः तस्य मिथ्यात्वान्न तेनात्मानं शोचति; तथा जीवान् पश्यदपि ब्रह्म तद्गतसंसारस्य वाचारम्भणमात्रत्वात् न तेनात्मानं शोचतीत्यर्थः। यथा च स्वप्ने दृश्यानां भावानां पृथक्त-

१. T, T¹, P and A add. कथं

२. T, T¹ and P. कतुफलं

३. TM. क्षमत्वे

भाष्यम्

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २-१-२४ ॥

चेतनं ब्रह्मैकमद्वितीयं जगतः कारणमिति यदुक्तम्, तन्नोपपद्यते ; कस्मात्? उपसंहारदर्शनात् । इह हि लोके कुलालादयो घटपटादीनां कर्तारो मृद्दण्डचक्रसूत्रसलिलाद्यनेककारकोपसंहारेण संगृहीतसाधनाः सन्तस्तत्तत्कार्यं कुर्वाणा दृश्यन्ते ; ब्रह्म चासहायं तवाभिप्रेतम् ; तस्य साधनान्तरानुपसंग्रहे सति कथं स्रष्टृत्वमुपपद्येत? तस्मान्न ब्रह्म जगत्कारणमिति चेत्, नैष दोषः; यतः क्षीरवद्द्रव्यस्वभावविशेषादुपपद्यते—यथा हि लोके क्षीरं जलं वा स्वयमेव दधिहिमकरकादिभावेन परिणमतेऽनपेक्ष्य बाह्यं साधनम्, तथेहापि भविष्यति । ननु क्षीराद्यपि दध्यादिभावेन परिणममानमपेक्षत एव बाह्यं साधनमौष्ण्यादिकम् ; कथमुच्यते "क्षीरवद्धि" इति? नैष दोषः ; स्वयमपि हि क्षीरं यां च यावतीं च परि-

प्रकटार्थविवरणम्

मृत्त्वादिवैचित्र्यमेकस्वप्नदृगधिष्ठानत्वेऽपि दृष्टं तथैकचिदधिष्ठानत्वेऽपि जीवेश्वरादिभेदवैचित्र्यमविरुद्धमिति भावः ॥

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥

असहायाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विषयः । तस्य किं ससहायस्य कार्यहेतुत्वमिति लौकिकन्यायेन विरोधोऽस्ति, उत नास्तीति सन्देहे पूर्ववाद्याह—चेतनं ब्रह्मैकमित्यादिना ॥ पूर्वत्रौपाधिकभेदाङ्गीकरणेन विरोधः परिहृतः; इह त्वौपाधिकस्यापि ब्रह्मसहायस्याभावात् विरोधोऽस्ति । तथा हि—ब्रह्म जगदुपादानं न, असहायत्वात्, वस्तुमात्रवत् इत्यनुमानस्य प्रमाणत्वात् विरोधोऽस्तीति भावः । क्षीरेऽनैकान्तिकत्वात् विरोधो नास्तीत्याह—नैष दोष इति ॥ क्षीरस्याप्यसहायत्वाभावात् नानैकान्तिकत्वमित्याह—ननु क्षीराद्यपीति ॥ अनैकान्तिकत्वं समाधत्ते—नैष दोष इति ॥ यद्रूपां यत्परिमाणां

१. T, T[1] and P. मेतत् स्व
२. A omits दृष्टं...त्वेऽपि
३. A. रादिवैचित्र्यमिति
४. T, T[1] and P. भेदानङ्गी
TM. भेदादनङ्गी
५. T, T[1], TM and P न सहाय.
६. TM omits इति

भाष्यम्

णाममात्रामनुभवति, तावत्त्वेव त्वार्यते त्वौष्ण्यादिना दधिभावाय; यदि च स्वयं दधिभावशीलता न स्यात्, नैवौष्ण्यादिनापि बलाद्दधिभावमापद्येत; न हि वायुराकाशो वौष्ण्यादिना बलाद्दधिभावमापद्यते; साधनसामग्र्या च तस्य पूर्णता संपाद्यते; परिपूर्णशक्तिकं तु ब्रह्म; न तस्यान्येन केनचित्पूर्णता संपादयितव्या; श्रुतिश्च भवति—

" न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ "

इति ।

तस्मादेकस्यापि ब्रह्मणो विचित्रशक्तियोगात्क्षीरादिवद्विचित्रपरिणाम उपपद्यते ॥

प्रकटार्थविवरणम्

च परिणाममात्रां क्षीरमनुभवति तां स्वयमेंपि अनुभवत्येव, सत्यपि कालस्य सहकारित्वे । असहायत्वं नामाधिष्ठातृरहितत्वं क्षीरस्यास्तीत्यनैकान्तिकत्वमिति भावः । सर्वथा सहकारिरहितत्वं त्वासिद्धम्, सामान्यादृष्टादेः सहकारित्वाभ्युपगमादिति द्रष्टव्यम् । ननु यदि क्षीरं कालवशेन स्वयमेव दधि भवति किमिति तर्ह्युष्णाद्यपेक्षेत्याशङ्क्याह—त्वार्यते त्विति ॥ ननु त्वरा शैघ्र्यम्; त्वार्यते क्षीरं दधिभावायौष्ण्यादिनेति किमित्येवं कल्प्यते? क्षीरं स्वयमशक्तमेव, औष्ण्यादिना तु शक्तं क्रियत इत्येतत् कस्मान्न कल्प्यत इत्याशङ्क्याह—यदि च स्वयमिति ॥ ननु यद्यपि क्षीरं स्वयं समर्थम्, तथापि तक्रप्रक्षेपादिना च पुष्कलतां लभमानं यथा दधिविशेषं जनयति, तथा ब्रह्मणोऽपि कार्यविशेषजननाय सहकार्यपेक्षा भविष्यतीत्याशङ्क्याह—साधनसामग्र्या चेति ॥

१. TM. मात्र
२. A. स्वयमेव
३. A. स्वयमशक्तं क्रियत इत्येव

भाष्यम्

## देवादिवदपि लोके ॥ २-१-२५ ॥

स्यादेतत्—उपपद्यते क्षीरादीनामचेतनानामनपेक्ष्यापि बाह्यं साधनं दध्यादिभावः, दृष्टत्वात्; चेतनाः पुनः कुलालादयः साधनसामग्रीमपेक्ष्यैव तस्मै तस्मै कार्याय प्रवर्तमाना दृश्यन्ते; कथं ब्रह्म चेतनं सदसहायं प्रवर्तेतेति—देवादिवदिति ब्रूमः—यथा लोके देवाः पितर ऋषय इत्येवमादयो महाप्रभावाश्चेतना अपि सन्तोऽनपेक्ष्यैव किंचिद्बाह्यं साधनमैश्वर्यविशेषयोगादभिध्यानमात्रेण स्वत एव बहूनि नानासंस्थानानि शरीराणि प्रासादादीनि रथादीनि च निर्मिमाणा उपलभ्यन्ते, मन्त्रार्थवादेतिहासपुराणप्रामाण्यात्; तन्तुनाभश्च स्वत एव तन्तून्सृजति; बलाका चान्तरेणैव शुक्रं गर्भं धत्ते; पद्मिनी चानपेक्ष्य किंचित्प्रस्थानसाधनं सरोन्तरात्सरोन्तरं प्रतिष्ठते—एवं चेतनमपि ब्रह्म अनपेक्ष्यैव बाह्यं साधनं स्वत एव जगत्स्रक्ष्यति। स यदि ब्रूयात्—य एते देवादयो [1]ब्रह्मणो दृष्टान्ता उपात्तास्ते दार्ष्टान्तिकेन ब्रह्मणा न समाना भवन्ति; शरीरमेव ह्यचेतनं देवादीनां शरीरान्तरादिविभूत्युत्पादन उपादानम्, न तु चेतन आत्मा; तन्तुनाभस्य च क्षुद्रतरजन्तुभक्षणाल्लाला कठिन-

प्रकटार्थविवरणम्

### देवादिवदपि लोके ॥

सूत्रनिरस्याशङ्कामाह—स्यादेतदिति ॥ ब्रह्म न जगत्कारणम्, स्वातिरिक्ताधिष्ठेयशून्यत्वात्, देवदत्तमात्रवदिति भावः । अनैकान्तिकत्वमाह—देवादिवदिति ॥ लोक्यतेऽनेनेति लोकं शास्त्रम्, वृद्धव्यवहारश्च । अपिशब्दादुदाहरणान्तरमाह — तन्तुनाभ इत्यादिना ॥ अधिष्ठेयशून्यत्वादिति हेतुर्देवादिषु न वर्तते, तत्तद्देहस्याधिष्ठेयत्वात्; अतो नास्त्यनैकान्तिकत्वमित्याह—स यदि ब्रूयादित्यादिना ॥ अनैकान्तिकत्वं समर्थयति—

१. T and T¹. अत्र शब्दा

भाष्यम्

तामापद्यमाना तन्तुर्भवति ; बलाका च स्तनयित्नुरवश्रवणाद्गर्भं धत्ते ; पद्मिनी च चेतनप्रयुक्ता सत्यचेतनेनैव शरीरेण सरोन्तरात्सरोन्तरमुपसर्पति, वल्लीव वृक्षम्, न तु स्वयमेवाचेतना सरोन्तरोपसर्पणे व्याप्रियते ; तस्मान्नैते ब्रह्मणो दृष्टान्ता इति—तं प्रति ब्रूयात्—नायं दोषः ; कुलालादिदृष्टान्तवैलक्षण्यमात्रस्य विवक्षितत्वादिति—यथा हि कुलालादीनां देवादीनां च समाने चेतनत्वे कुलालादयः कार्यारम्भे बाह्यं साधनमपेक्षन्ते, न देवादयः ; तथा ब्रह्म चेतनमपि न बाह्यं साधनमपेक्षिष्यत इत्येतावद्वयं देवाद्युदाहरणेन विवक्षामः । तस्माद्यथैकस्य सामर्थ्यं दृष्टं तथा सर्वेषामेव भवितुमर्हतीति नास्त्येकान्त इत्यभिप्रायः ॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २-१-२६ ॥

चेतनमेकमद्वितीयं ब्रह्म क्षीरादिवद्देवादिवच्चानपेक्ष्य बाह्यं साधनं स्वयं परिणममानं जगतः कारणमिति स्थितम् ; शास्त्रार्थपरिशुद्धये तु

प्रकटार्थविवरणम्

तं प्रति ब्रूयादित्यादिना ॥ देहस्य देहिना तादात्म्यापन्नत्वात् स्वशब्देन संगृहीतत्वात् तद्व्यतिरिक्तं मृद्दार्वाद्यधिष्ठेयं देवादीनां नास्तीत्यनैकान्तिकत्वमिति भावः ॥

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥

सङ्गतिमाह—चेतनमेकमिति ॥ क्षीरदृष्टान्तश्रवणसमुपजातकृत्स्नपरिणामशङ्कापाकरणेन शास्त्रार्थस्य विवर्तवादस्य परिशुद्धये पुनराक्षिपतीत्यर्थः । निरवयवाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विषयः । तस्य निरवयवस्य चेत्परिणामः, कृत्स्नस्यैव स्यादिति लौकिकन्यायेन विरोधोऽस्त्युत नेति सन्देहे

भाष्यम्

पुनराक्षिपति। कृत्स्नप्रसक्तिः कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः प्राप्नोति, निरवयवत्वात्—यदि ब्रह्म पृथिव्यादिवत्सावयवमभविष्यत्, ततोऽस्यैकदेशः पर्यणंस्यत्, एकदेशश्चावास्थास्यत; निरवयवं तु ब्रह्म श्रुतिभ्योऽवगम्यते—"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः" "इदं महद्भूतमनन्तमपारं विज्ञानघन एव" "स एष नेति नेत्यात्मा" "अस्थूलमनणु" इत्याद्याभ्यः सर्वविशेषप्रतिषेधिनीभ्यः; ततश्चैकदेशपरिणामासंभवात्कृत्स्नपरिणामप्रसक्तौ सत्यां मूलोच्छेदः प्रसज्येत; द्रष्टव्यतोपदेशानर्थक्यं चापद्येत, अयत्नदृष्टत्वात्कार्यस्य, तद्व्यतिरिक्तस्य च ब्रह्मणोऽसंभवात्; अजत्वादिशब्दव्याकोपश्च। अथैतद्दोषपरिजिहीर्षया सावयवमेव ब्रह्माभ्युपगम्येत, तथापि ये निरवयवत्वस्य प्रतिपादकाः शब्दा उदाहृतास्ते प्रकुप्येयुः; सावयवत्वे चानित्यत्वप्रसङ्ग इति—सर्वथायं पक्षो न घटयितुं शक्यत इत्याक्षिपति॥

## श्रुतेस्तु शब्दमूलत्वात्॥ २-१-२७॥

तुशब्देनाक्षेपं परिहरति। न खल्वस्मत्पक्षे कश्चिदपि दोषोऽस्ति।

प्रकटार्थविवरणम्

पूर्ववाद्याह—कृत्स्नप्रसक्तिरिति॥ व्यतिरेकमुखेन विवृणोति—यदि ब्रह्मेति॥ पर्यणंस्यत् परिणतमभविष्यत्। यदा चापरिणतं मूलभूतं ब्रह्म न विद्यते तदा "आत्मा वा अरे द्रष्टव्यः" इत्याद्युपदेशोऽनर्थकः स्यादित्याह—द्रष्टव्यतेति॥ "अज आत्मा महान् ध्रुवः" इत्यादिशब्दानामपि प्रामाण्यहानिः स्यात्, ब्रह्मणः कार्यमात्रत्वे सतीत्याह—अजत्वादीति॥ "निरवयवत्वशब्दकोपो वा" इति सूत्रभागमवतारयति—अथैतद्दोषेत्यादिना॥

श्रुतेस्तु शब्दमूलत्वात्॥

सिद्धान्तसूत्रं व्याचष्टे—तुशब्देनेत्यादिना॥ कृत्स्नस्यैव तावत्

१. TM. यदा वा

## भाष्यम्

न तावत्कृत्स्नप्रसक्तिरस्ति; कुतः? श्रुतेः—यथैव हि ब्रह्मणो जगदुत्पत्तिः श्रूयते, एवं विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानं श्रूयते, प्रकृतिविकारयोर्भेदेन व्यपदेशात् "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति,

"तावानस्य महिमा ततो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥"

इति चैवंजातीयकात्; तथा हृदयायतनत्ववचनात्; सत्संपत्तिवचनाच्च—यदि च कृत्स्नं ब्रह्म कार्यभावेनोपयुक्तं स्यात्, "सता सोम्य तदा संपन्नो भवति" इति सुषुप्तिगतं विशेषणमनुपपन्नं स्यात्, विकृतेन ब्रह्मणा नित्यसंपन्नत्वादविकृतस्य च ब्रह्मणोऽभावात्; तथेन्द्रियगोचरत्वप्रतिषेधात् ब्रह्मणः विकारस्य चेन्द्रियगोचरत्वोपपत्तेः; तस्मादस्त्यविकृतं ब्रह्म। न च निरवयवत्वशब्दव्याकोपोऽस्ति, श्रूयमाणत्वादेव निरवयवत्वस्याप्यभ्युपगम्यमानत्वात्; शब्दमूलं च ब्रह्म शब्दप्रमाणकम्, नेन्द्रियादिप्रमाणकम्; तद्यथाशब्दमभ्युपगन्तव्यम्; शब्दश्चोभय-

## प्रकटार्थविवरणम्

ब्रह्मणः कार्यभावापत्तिर्नास्ति विकारात् भेदेन स्वरूपसद्भावश्रवणादित्यर्थः। इतश्च कृत्स्नस्य कार्यभावापत्तिर्नास्तीत्याह—तथेति ॥ लिङ्गान्तरमाह—तथेन्द्रियेति ॥ "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह" इत्यादिना वागिन्द्रियगोचरत्वप्रतिषेधोऽपि न सङ्गच्छेत, कार्यमात्रं चेत् ब्रह्मेत्यर्थः। यस्माच्छ्रुतिलिङ्गेभ्यो न तस्य कार्यभावापत्तिः, तस्मादस्त्यविकृतं ब्रह्म; यथा तस्य कार्यापत्तिर्निर्वहति तथा सावयवत्वमभ्युपगन्तव्यमिति भावः। ननु सावयवत्वे निरवयवत्वशब्दाप्रामाण्यं दर्शितमित्याशङ्क्याह—न चेति ॥ निरवयवत्वाविरोध्येव सावयवत्वमिष्टमिति भावः। ननु निरवयवत्वाविरोधि सावयवत्वं कष्टतरम्; कथं प्रतिपत्तुं शक्यमित्याशङ्क्याह—शब्दमूलं चेति ॥

१. A. यथयथा

भाष्यम्

मपि ब्रह्मणः प्रतिपादयति—अकृत्स्नप्रसक्तिं निरवयवत्वं च; लौकिकानामपि मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्तवैचित्र्यवशाच्छक्तयो विरुद्धानेककार्यविषया दृश्यन्ते; ता अपि तावन्नोपदेशमन्तरेण केवलेन तर्केणावगन्तुं शक्यन्ते—अस्य वस्तुन एतावत्य एतत्सहाया एतद्विषया एतत्प्रयोजनाश्च शक्तय इति; किमुताचिन्त्यस्वभावस्य ब्रह्मणो रूपं विना शब्देन न निरूप्येत; तथा चाहुः पौराणिकाः—

"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।
प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम् ॥" इति ।

तस्माच्छब्दमूल एवातीन्द्रियार्थयाथात्म्याधिगमः । ननु शब्देनापि न शक्यते विरुद्धोऽर्थः प्रत्याययितुम्—निरवयवं च ब्रह्म परिणमते न च कृत्स्नमिति; यदि निरवयवं ब्रह्म स्यात्, नैव परिणमेत; अथ केनचिद्रूपेण परिणमेत केनचिच्चावतिष्ठेतेति, रूपभेदकल्पनात्सावयवमेव प्रसज्येत; क्रियाविषये हि "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाति" इत्येवंजातीयकायां विरोधप्रतीतावपि विकल्पाश्रयणं विरोधपरिहारकारणं भवति, पुरुषतन्त्रत्वाच्चानुष्ठानस्य; इह तु विकल्पाश्रयणेनापि न विरोधपरिहारः संभवति, अपुरुषतन्त्रत्वाद्वस्तुनः; तस्माद्दुर्घटमेतदिति— नैष दोषः, अविद्याकल्पितरूपभेदाभ्युपगमात् ।

प्रकटार्थविवरणम्

किंपुनर्न्यायमाह— लौकिकानामपीति ॥ प्रकृतिभ्यः प्रत्यक्षदृष्टपदार्थस्वभावेभ्यः परं विलक्षणं यदाचार्याद्युपदेशगम्यं तदचिन्त्यमुच्यत इत्यर्थः । इदानीं निरवयवत्वाविरोधि यत्सावयवत्वं शब्दैकसमधिगम्यं तत्स्फुटीकर्तुं चोद्यमुद्भावयति—ननु शब्देनापीति ॥ परिहरति—नैष दोष इति ॥ अविद्यात्मना जाड्यरूपेण कल्पितस्य स्वीकृतस्य रूपविशेषस्य मायाविलक्षणस्य ब्रह्मणोऽभ्युपगमात्तत्कृतं सावयवत्वमित्यर्थः । यच्चोक्तं स्वीकृतं चेत् सावयवत्वं

१. A. न्यायं तदाह　　३. TM. तदपि त्वदुच्यते
२. T and T¹. मायाद्युप

भाष्यम्

न ह्यविद्याकल्पितेन रूपभेदेन सावयवं वस्तु संपद्यते; न हि तिमिरोपहतनयनेनानेक इव चन्द्रमा दृश्यमानोऽनेक एव भवति; अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते; पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते, वाचारम्भणमात्रत्वाच्चाविद्याकल्पितस्य नामरूपभेदस्य—इति न निरवयवत्वं ब्रह्मणः कुप्यति; न चेयं परिणामश्रुतिः परिणामप्रतिपादनार्था, तत्प्रतिपत्तौ फलानवगमात्; सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था त्वेषा, तत्प्रतिपत्तिफलावगमात्; "स एष नेति नेत्यात्मा" इत्युपक्रम्याह—"अभयं वै जनक प्राप्तोऽसि" इति; तस्मादस्मत्पक्षे न कश्चिदपि दोषप्रसङ्गोऽस्ति ॥

प्रकटार्थविवरणम्

तर्हि निरवयवत्वव्याघात इति तत्राह—न ह्यविद्याकल्पितेनेति ॥ मि॰ सावयवत्वेन किं सिद्धमित्याशङ्क्याह—अविद्याकल्पितेन चेति ॥ ननु म संबन्धोऽपि निरवयवस्य न घटते; अतः संबन्धमभ्युपगच्छतां निर॰ वत्वव्याघात इत्याशङ्क्याह— वाचारम्भणमात्रत्वाच्चेति ॥ मायारूपस्यानिर्वाच्यत्वात्तत्संबन्धोऽप्यनिर्वाच्यो न वस्तुनो निरवयवत्वं निरुणद्धीति भावः । ननु परिणामश्रुतिप्रामाण्यान्निरवयवस्यैव शक्तिवशात्कृत्स्नपरिणामित्वं किं न स्यात्? किं मिथ्यासावयवत्वपरिकल्पनेनेत्याशङ्क्याह— न चेयं परिणामश्रुतिरिति ॥ परिणामस्याद्वितीयब्रह्मशेषत्वात् "नासदासीन्नो सदासीत्" "तम आसीत्" इत्यादिसदसद्विलक्षणप्रपञ्चसमर्पकवाक्यैश्च सत्यमिथ्याविभागाङ्गीकरणेनैवाविरोध इति भावः ॥

१. TM. मिथ्यावयव  ३. A. मिथ्यात्व

२. T, T[1], and P omit न

भाष्यम्

## आत्मनि चैवं विचित्राश्च हि ॥ २-१-२८ ॥

अपि च नैवात्र विवदितव्यम्—कथमेकस्मिन्ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः स्यादिति ; यत आत्मन्यप्येकस्मिन्स्वप्नदृशि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः पठ्यते—“न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते” इत्यादिना ; लोकेऽपि देवादिषु मायाव्यादिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते ; तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्यतीति ॥

## स्वपक्षदोषाच्च ॥ २-१-२९ ॥

परेषामप्येष समानः स्वपक्षदोषः—प्रधानवादिनोऽपि हि निरवयवमपरिच्छिन्नं शब्दादिहीनं प्रधानं सावयवस्य परिच्छिन्नस्य शब्दादिमतः कार्यस्य कारणमिति स्वपक्षः ; तत्रापि कृत्स्नप्रसक्तिर्निरवयवत्वात्प्रधानस्य प्राप्नोति, निरवयवत्वाभ्युपगमकोपो वा । ननु नैव तैर्निरवयवं प्रधानमभ्युपगम्यते ; सत्त्वरजस्तमांसि त्रयो गुणाः ; तेषां साम्यावस्था प्रधानम् ; तैरेवावयवैस्तत्सावयवमिति—नैवंजातीयकेन सावयवत्वेन प्रकृतो दोषः परिहर्तुं पार्यते, यतः सत्त्वरजस्तमसामप्येकैकस्य समानं निरवयवत्वम् एकैकमेव चेतरद्वयानुगृहीतं सजातीयस्य

प्रकटार्थविवरणम्

आत्मनि चैवं विचित्राश्च हि ॥

स्वप्नदृष्टिनिदर्शनेनापि विवर्तवाद एवाभ्युपगन्तव्य इत्याह— अपि चेत्यादिना ॥

स्वपक्षदोषाच्च ॥

किञ्च कृत्स्नप्रसक्त्यादिचोद्यं न सांख्यादिभिः कर्तुं शक्यमित्याह—परेषामपीत्यादिना ॥ ननु ‘त्वं चोरः’ इत्युक्ते ‘त्वमपि चोरः’ इतिवन्मता-

भाष्यम्

प्रपञ्चस्योपादानमिति—समानत्वात्स्वपक्षदोषप्रसङ्गस्य । तर्काप्रतिष्ठाना-त्सावयवत्वमेवेति चेत्—एवमप्यनित्यत्वादिदोषप्रसङ्गः । अथ शक्तय एव कार्यवैचित्र्यसूचिता अवयवा इत्यभिप्रायः, तास्तु ब्रह्मवादिनोऽप्य-विशिष्टाः । तथा अणुवादिनोऽप्यणुरण्वन्तरेण संयुज्यमानो निरवय-वत्वाद्यदि कार्त्स्न्येन संयुज्येत, ततः प्रथिमानुपपत्तेरणुमात्रत्वप्रसङ्गः ; अथैकदेशेन संयुज्येत, तथापि निरवयवत्वाभ्युपगमकोप इति—स्वपक्षेऽपि समान एष दोषः । समानत्वाच्च नान्यतरस्मिन्नेव पक्ष उपक्षे-प्तव्यो भवति । परिहृतस्तु ब्रह्मवादिना स्वपक्षे दोषः ॥

## सर्वोपेता च तद्दर्शनात् ॥ २-१-३० ॥

एकस्यापि ब्रह्मणो विचित्रशक्तियोगादुपपद्यते विचित्रो विकार-प्रपञ्च इत्युक्तम् ; तत्पुनः कथमवगम्यते—विचित्रशक्तियुक्तं परं ब्रह्मेति ; तदुच्यते—सर्वोपेता च तद्दर्शनात् । सर्वशक्तियुक्ता च परा देवतेत्य-भ्युपगन्तव्यम् ; कुतः ? तद्दर्शनात् । तथा हि दर्शयति श्रुतिः सर्वशक्ति-

प्रकटार्थविवरणम्

तुल्यलक्षणं निग्रहस्थानमित्याह—परिहृतं तु ब्रह्मवादिनेति ॥ यः स्वपक्षे मनागपि दोषं न परिहरति, केवलं परपक्ष एव प्रसञ्जयति, तस्यैव निग्रहस्थानं प्रशिथिलमूलत्वापनयाय । प्रतिबन्दिर्न[बन्दी ग्रहस्तु सदुत्तरमेवेति भावः ॥

सर्वोपेता च तद्दर्शनात् ॥

सङ्गतिमाह—एकस्यापीति ॥ पूर्वं मायाशक्तिमत्त्वेन परिणामादिव्यव-हारास्पदत्वं संभवतीत्युक्तम् । इदानीं कार्यकरणरहितस्य मायाशक्तिमत्त्व-मपि न संभवतीत्याशङ्कायां तद्व्याख्यानायोपक्रमते—सर्वोपेता चेत्यादिना ॥

१. TM. ज्ञानत्वलक्षणं निग्र
   A. ज्ञानं छलनिग्र
२. T, T¹ and P. प्रतिथिलं
३. T and T¹. प्रतिपत्ति
४. T, T¹ and P. कारण

भाष्यम्

योगं परस्या देवतायाः—"सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" "सत्यकामः सत्यसंकल्पः" "यः सर्वज्ञः सर्ववित्" "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्येवंजातीयका ॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ २-१-३१ ॥

स्यादेतत्—विकरणां परां देवतां शास्ति शास्त्रम्—"अचक्षुष्कमश्रोत्रमवागमनाः" इत्येवंजातीयकम्; कथं सा सर्वशक्तियुक्तापि सती कार्याय प्रभवेत्? देवादयो हि चेतनाः सर्वशक्तियुक्ता अपि सन्त आध्यात्मिककार्यकरणसंपन्ना एव तस्मै तस्मै कार्याय प्रभवन्तो विज्ञायन्ते; कथं च "नेति नेति" इति प्रतिषिद्धसर्वविशेषाया देवतायाः सर्वशक्तियोगः संभवेत्, इति चेत्—यदत्र वक्तव्यं तत्पुरस्तादेवोक्तम्; श्रुत्यवगाह्यमेवेदमतिगम्भीरं ब्रह्म न तर्कावगाह्यम्; न च यथैकस्य सामर्थ्यं दृष्टं तथान्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽस्तीति ।

प्रकटार्थविवरणम्

मायाशक्तिब्रह्म[किमद्ब्रह्म]समन्वयस्य किम् अशरीरस्य मायावित्वं न संभवतीति न्यायेन विरोधोऽस्त्युत नेति[नेति संशये] सशरीरस्यैव देवदत्तादेः मायावित्वप्रसिद्धेरस्ति विरोध इति पूर्वः पक्षः । सिद्धान्तस्तु—ब्रह्म न मायावि, अशरीरत्वात्, मुक्तवदित्यनुमानं न मानम्, विपक्षे बाधकाभावात् अतिप्रसङ्गित्वाच्च; मायावशेनैव सर्वशक्तियोगं दर्शयति श्रुतिः । अतः श्रुतिगम्यत्वादेव न विरोध इति भावः ॥

विकरणत्वान्नेति चेत्तदुक्तम् ॥

पूर्वं सिद्धान्तेनोपक्रम्येदानीं पूर्ववादिनोऽभिप्रायमुद्भाव्योक्तं दोषं स्मारयति—विकरणत्वादित्यादिना ॥

१. TM. रूपं स्त

२. T, P and TM. add मायया विना न
T1 and A add मायां विना कारणं

३. A. कारणं शरीर

भाष्यम्

प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणः सर्वशक्तियोगः संभवतीत्येतदप्यविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव । तथा च शास्त्रम्—“अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः” इत्यकरणस्यापि ब्रह्मणः सर्वसामर्थ्ययोगं दर्शयति ॥

# न प्रयोजनवत्त्वात् ॥ २-१-३२ ॥

अन्यथा पुनश्चेतनकर्तृत्वं जगत आक्षिपति—न खलु चेतनः परमात्मेदं जगद्बिम्बं विरचयितुमर्हति; कुतः? प्रयोजनवत्त्वात्प्रवृत्तीनाम् । चेतनो हि लोके बुद्धिपूर्वकारी पुरुषः प्रवर्तमानो न मन्दोपक्रमामपि तावत्प्रवृत्तिमात्मप्रयोजनानुपयोगिनीमारभमाणो दृष्टः; किमुत गुरुतरसंरम्भाम्; भवति च लोकप्रसिद्ध्यनुवादिनी श्रुतिः—“न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति” इति; गुरुतरसंरम्भा चेयं प्रवृत्तिः—यदुच्चावचप्रपञ्चं जगद्बिम्बं विरचयितव्यम्; यदीयमपि प्रवृत्तिश्चेतनस्य परमात्मन आत्मप्रयोजनोपयोगिनी परिकल्प्येत, परितृप्तत्वं परमात्मनः श्रूयमाणं

प्रकटार्थविवरणम्

न प्रयोजनवत्त्वात् ॥

पूर्वत्र कार्यकरणरहितस्यापि मायाशक्तिमत्त्वप्रदर्शनेन विरोधः परिहृतः । इदानीं शक्तिविषयप्रयोजनाभावात् विरोध इत्याह—अन्यथा पुनरिति ॥ लौकिकस्यापि मायाविनो द्रव्यादिप्राप्तये हस्त्यादिप्रदर्शकत्वम्; ब्रह्मणस्तु प्रयोजनशून्यत्वान्माययापि न स्रष्टृत्वमित्यर्थः । ननु या चेतनप्रवृत्तिः सा प्रयोजनोद्देशेनेति नियमश्चेत् तर्हिस्तु परमात्मनोऽपि किञ्चित्प्रयोजनमित्याशङ्क्याह—यदीयमपीति ॥ न केवलमाप्तकामश्रुतिविरोधः; प्राप्तेऽपि सृष्टि-

भाष्यम्

बाध्येत; प्रयोजनाभावे वा प्रवृत्त्यभावोऽपि स्यात्; अथ चेतनोऽपि सन्नुन्मत्तो बुद्ध्यपराधादन्तरेणैवात्मप्रयोजनं प्रवर्तमानो दृष्टः, तथा परमात्मापि प्रवर्तिष्यत इत्युच्येत—तथा सति सर्वज्ञत्वं परमात्मनः श्रूयमाणं बाध्येत; तस्मादश्लिष्टा चेतनात्सृष्टिरिति ॥

## लोकवत्तु लीलाकैवल्यम् ॥ २-१-३३ ॥

तुशब्देनाक्षेपं परिहरति; यथा लोके कस्यचिदाप्तैषणस्य राज्ञो राजामात्यस्य वा व्यतिरिक्तं किंचित्प्रयोजनमनभिसंधाय केवलं लीलारूपाः प्रवृत्तयः क्रीडाविहारेषु भवन्ति; यथा चोच्छ्वासप्रश्वासादयोऽनभिसंधाय बाह्यं किंचित्प्रयोजनं स्वभावादेव संभवन्ति; एवमीश्वरस्याप्यनपेक्ष्य किंचित्प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति; न हीश्वरस्य प्रयोजनान्तरं निरूप्यमाणं न्यायतः

प्रकटार्थविवरणम्

समये स्वप्रयोजनाभावे कदाचिदप्रवृत्तिः स्यादित्याह—प्रयोजनाभावे वेति ॥ ननु बुद्धिपूर्वकसृष्टेः प्रयोजनान्वेषणं स्यात्; न त्वियं बुद्धिपूर्वेत्याशङ्क्य दूषयति—चेतनोऽपीत्यादिना ॥

### लोकवत्तु लीलाकैवल्यम् ॥

अनैकान्तिकत्वाभिधानेन परिहरति—लोकवत्त्विति ॥ किं या बुद्धिपूर्वकारिणः प्रवृत्तिः सा स्वप्रयोजनोद्देशेनेति व्याप्तिः, किं वा प्रयोजनोद्देशेन? प्रथमे सुखातिशयप्राप्तिनिमित्तहास्यादिप्रवृत्तावनैकान्तः, कारुण्यप्रवृत्तौ च । द्वितीयेऽसिद्धिः, पूर्वकल्पोपार्जितादृष्टानां जीवानां फलदानाय सृष्टिकारणादिति भावः । व्यभिचारस्थलान्तरमाह — यथा चेति ॥ स्वभावादेवेति ॥ समीरणस्य सञ्चरणस्वाभाव्यादित्यर्थः। एवमीश्वरस्यापि स्वप्रयोजनमन्तरेणेश्वरस्वाभाव्यादेव लीलातुल्या सृष्ट्यादिर्भविष्यतीत्यर्थः । नन्वीश्वरस्य वा विपरीतः

१. T and A omit भावे...प्रयोजना
२. A. पेक्षणं
३. TM and A. स्वभावात्

भाष्यम्

श्रुतितो वा संभवति ; न च स्वभावः पर्यनुयोक्तुं शक्यते । यद्यप्यस्माकमियं जगद्बिम्बविरचना गुरुतरसंरम्भेवाभाति, तथापि परमेश्वरस्य लीलैव केवलेयम्, अपरिमितशक्तित्वात् । यदि नाम लोके लीलास्वपि किंचित्सूक्ष्मं प्रयोजनमुत्प्रेक्ष्येत तथापि नैवात्र किंचित्प्रयोजनमुत्प्रेक्षितुं शक्यते, आप्तकामश्रुतेः । नाप्यप्रवृत्तिरुन्मत्तप्रवृत्तिर्वा, सृष्टिश्रुतेः, सर्वज्ञश्रुतेश्च । न चेयं परमार्थविषया सृष्टिश्रुतिः ; अविद्याकल्पितनामरूपव्यवहारगोचरत्वात्, ब्रह्मात्मभावप्रतिपादनपरत्वाच्चेत्येतदपि नैव विस्मर्तव्यम् ॥

# वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ २-१-३४ ॥

पुनश्च जगज्जन्मादिहेतुत्वमीश्वरस्याक्षिप्यते, स्थूणानिखनन्यायेन प्रतिज्ञातस्यार्थस्य दृढीकरणाय । नेश्वरो जगतः कारणमुपपद्यते ; कुतः ?

प्रकटार्थविवरणम्

स्वभावः किं न स्यादित्याशङ्क्याह—न च स्वभाव इति ॥ सृष्ट्यादिकर्तृत्वाभावे नेश्वरशब्दार्थः परिपूर्णः स्यादिति भावः । यथोक्तं गुरुतरसंरम्भेयं जगद्विरचना न स्वप्रयोजनाभावे भवितुमर्हतीति तत्राह—यद्यप्यस्माकमिति ॥ ननु कुमाराणां लीलापि किञ्चित्प्रयोजनमुद्दिश्य भवति; तथा सृष्टिरपि लीला चेत् किञ्चित्प्रयोजनमनुमीयतामित्याशङ्क्याह — यदि नामेति ॥ नन्वाप्तकामश्रुतिविरोधात् प्रयोजनानुमानं न घटते चेत् तर्हि नास्त्येव सृष्टौ प्रवृत्तिः, उन्मत्तप्रवृत्तिर्वेत्याशङ्क्याह-नापीति ॥ तर्हि सृष्टिश्रुतिप्रामाण्यादेव स्वप्रयोजनं किञ्चित्कल्प्यतामित्याशङ्क्याह—न चेयमिति ॥

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥

संबन्धमाह—पुनश्चेति ॥ यदि स्वप्रयोजनाभावेऽपि जीवानां फलदानाय स्रष्टृत्वम्, तर्हि सर्वेषां समं सुखमेव दद्यात् वैषम्यनैर्घृण्यविरुद्धमिति भावः ।

१. T omits न स्वप्रयोजना　　२. A omits प्रवृत्तिरुन्मत्त

### भाष्यम्

वैषम्यनैर्घृण्यप्रसङ्गात्—कांश्चिदत्यन्तसुखभाजः करोति देवादीन्, कांश्चिदत्यन्तदुःखभाजः पश्वादीन्, कांश्चिन्मध्यमभोगभाजो मनुष्यादीन्—इत्येवं विषमां सृष्टिं निर्मिमाणस्येश्वरस्य पृथग्जनस्येव रागद्वेषोपपत्तेः श्रुतिस्मृत्यवधारितस्वच्छत्वादीश्वरस्वभावविलोपः प्रसज्येत; तथा खलजनैरपि जुगुप्सितं निर्घृणत्वमतिक्रूरत्वं दुःखयोगविधानात्सर्वप्रजोपसंहाराच्च प्रसज्येत; तस्माद्वैषम्यनैर्घृण्यप्रसङ्गान्नेश्वरः कारणमित्येवं प्राप्ते ब्रूमः—

वैषम्यनैर्घृण्ये नेश्वरस्य प्रसज्येते; कस्मात्? सापेक्षत्वात्। यदि हि निरपेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीते, स्यातामेतौ दोषौ वैषम्यं नैर्घृण्यं च; न तु निरपेक्षस्य निर्मातृत्वमस्ति; सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते; किमपेक्षत इति चेत्—धर्माधर्मावपेक्षत इति वदामः; अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः; ईश्वरस्तु पर्जन्यवद्द्रष्टव्यः—यथा हि पर्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणं भवति, व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि कारणानि भवन्ति, एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणं भवति; देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवासाधारणानि कर्माणि कारणानि भवन्ति; एवमीश्वरः सापे-

### प्रकटार्थविवरणम्

पृथग्जनस्येव प्राकृतजनस्येवेत्यर्थः[1]। रागादिविधुरब्रह्मसमन्वयो वैषम्यकारी दृष्ट[2] इति न्यायेन विरुध्यते न वेति सन्देहे—ईश्वरो रागादिमान्, वैषम्यादिमत्त्वात्, देवदत्तवत् इत्यनुमानस्य प्रामाण्याद्विरुध्यत इति पूर्वः पक्षः॥

सिद्धान्तत्वेन सूत्रं योजयति — वैषम्यनैर्घृण्ये नेश्वरस्येत्यादिना॥

एष ह्येवेश्वरः प्राक्तनकर्मसंस्कारानुसारेण तं पुरुषं[3] शोभनं कर्म कारयति, यमुत ऊर्ध्वं[4] नेतुमिच्छतीत्यर्थः। पुण्यः शोभनफलभाग्भवतीत्यर्थः॥

१. T. जनस्येवेत्यर्थः

२. TM and A. दुष्टः

३. T, T', P and TM. तत्पुरुषं

४. T', P, TM and A. मूर्ध्वं

भाष्यम्

क्षत्वान्न वैषम्यनैर्घृण्याभ्यां दुष्यति । कथं पुनरवगम्यते सापेक्ष ईश्वरो नीचमध्यमोत्तमं संसारं निर्मिमीत इति? तथा हि दर्शयति श्रुतिः— "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषते" इति, "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इति च; स्मृतिरपि प्राणिकर्मविशेषापेक्षमेवेश्वरस्यानुग्रहीतृत्वं निग्रहीतृत्वं च दर्शयति—"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्येवंजातीयका ॥

## न कर्माविभागादिति चेन्नानादित्वात् ॥ २-१-३५ ॥

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति प्राक्सृष्टेरविभागावधारणान्नास्ति कर्म, यदपेक्ष्य विषमा सृष्टिः स्यात्; सृष्ट्युत्तरकालं हि शरीरादिविभागापेक्षं कर्म, कर्मापेक्षश्च शरीरादिविभागः— इतीतरेतराश्रयत्वं प्रसज्येत; अतो विभागादूर्ध्वं कर्मापेक्ष ईश्वरः प्रवर्ततां नाम; प्राग्विभागाद्वैचित्र्यनिमित्तस्य कर्मणोऽभावात्तुल्यैवाद्या सृष्टिः प्राप्नोतीति चेत्, नैष दोषः; अनादित्वात्संसारस्य; भवेदेष दोषः, यद्यादिमान्संसारः स्यात्; अनादौ तु संसारे बीजाङ्कुरवद्धेतुहेतुमद्भावेन कर्मणः सर्गवैषम्यस्य च प्रवृत्तिर्न विरुध्यते ॥

प्रकटार्थविवरणम्

न कर्माविभागादिति चेन्नानादित्वात् ॥

राजादिवत्कर्मानुसारेण विषमं फलं प्रयच्छतोऽपि नास्ति दोष इत्युक्तम् । तदेव प्रथमसर्गे न संभवतीत्याह—सदेव सोम्येदमित्यादिना ॥ इतरेतराश्रयत्वपरिहारार्थमाद्या सृष्टिः समानैव वक्तव्येत्याह— अतो विभागादूर्ध्वमिति ॥ अनादित्वेनेतरेतराश्रयत्वं परिहरति—नैष दोष इत्यादिना ॥

भाष्यम्

कथं पुनरवगम्यते अनादिरेष संसार इति ? अत उत्तरं पठति—

## उपपद्यते चाप्युपलभ्यते च ॥ २-१-३६ ॥

उपपद्यते च संसारस्यानादित्वम्—आदिमत्त्वे हि संसारस्याकस्मादुद्भूतेर्मुक्तानामपि पुनः संसारोद्भूतिप्रसङ्गः, अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च, सुखदुःखादिवैषम्यस्य निर्निमित्तत्वात्; न चेश्वरो वैषम्यहेतुरित्युक्तम्; न चाविद्या केवला वैषम्यस्य कारणम्, एकरूपत्वात्; रागादिक्लेशवासनाक्षिप्तकर्मापेक्षा त्वविद्या वैषम्यकरी स्यात्; न च कर्म अन्तरेण शरीरं संभवति, न च शरीरमन्तरेण कर्म संभवतीति—इतरेतराश्रयत्वप्रसङ्गः; अनादित्वे तु बीजाङ्कुरन्यायेनोपपत्तेर्न कश्चिद्दोषो भवति । उपलभ्यते च संसारस्यानादित्वं श्रुतिस्मृत्योः । श्रुतौ तावत् "अनेन जीवेनात्मना" इति सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेनाभिल-

प्रकटार्थविवरणम्

अविभागावधारणमपि विभागानभिव्यक्त्यभिप्रायं द्रष्टव्यम् ॥

अनादित्वप्रपञ्चनाय पृच्छति—कथं पुनरिति ॥

उपपद्यते चाप्युपलभ्यते च ॥

ननु निर्निमित्तत्वमसिद्धम्, ईश्वरस्य निमित्तत्वादित्याशङ्क्याह—न चेश्वर इति ॥ तर्ह्यविद्या सुखादिवैषम्ये हेतुरस्तु; किं कल्पान्तरीयकर्मणेत्याशङ्क्याह—न चाविद्येति ॥ जाड्यमात्रैकरूपत्वादित्यर्थः । कथं तर्हि संसारकारणमित्याशङ्क्याह—रागादीति ॥ रागादीनां क्लेशानां वासनाभिः प्रापितानि यानि कर्माणि तत्सहकृतैवाविद्या संसारवैषम्यहेतुरित्यर्थः । सर्वैरेवेतरेतराश्रयत्वपरिहाराय प्रवाहानादित्वमभ्युपगन्तव्यमित्याह— न च कर्मान्तरेणेति ॥ सूत्रावयवस्यार्थमाह—उपलभ्यते चेत्यादिना ॥ ननु भाविवृत्त्याश्रयणे-

१. T, T¹ and P. विभागसाधारणं . २. T, T¹ and TM. कृतदैव

भाष्यम्

पञ्चनादिः संसार इति दर्शयति; आदिमत्त्वे तु प्रागनवधारितप्राणः सन् कथं प्राणधारणनिमित्तेन जीवशब्देन सर्गप्रमुखेऽभिलप्येत? न च धारयिष्यतीत्यतोऽभिलप्येत—अनागताद्धि संबन्धादतीतः संबन्धो बलवान्भवति, अभिनिष्पन्नत्वात्; "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति च मन्त्रवर्णः पूर्वकल्पसद्भावं दर्शयति। स्मृतावप्यनादित्वं संसारस्योपलभ्यते—"न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा" इति; पुराणे चातीतानागतानां च कल्पानां न परिमाणमस्तीति स्थापितम्॥

## सर्वधर्मोपपत्तेश्च॥ २-१-३७॥

चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यस्मिन्नवधारिते वेदार्थे परैरुपक्षिप्तान्विलक्षणत्वादीन्दोषान्पर्यहार्षीदाचार्यः; इदानीं परपक्षप्रतिषेधप्रधानं प्रकरणं प्रारिप्समानः स्वपक्षपरिग्रहप्रधानं प्रकरणमुपसंहरति। यस्मादस्मिन्ब्रह्मणि कारणे परिगृह्यमाणे प्रदर्शितेन प्रकारेण सर्वे कारण-

प्रकटार्थविवरणम्

नापि जीवशब्दो भविष्यतीत्याशङ्क्याह—न च धारयिष्यतीति॥ अस्य संसारवृक्षस्य रूपं तथामायामयं नोपलभ्यते प्राकृतैः[1] नान्तोऽवसानं न चादिर्न च संप्रतिष्ठा मध्यमित्यर्थः॥

सर्वधर्मोपपत्तेश्च॥

वृत्तानुवादपूर्वकं संबन्धमाह—चेतनं ब्रह्मेत्यादिना॥ [2]निर्गुणाद्ब्रह्मणो जगत्सर्गं ब्रुवन्[3] समन्वयो विषयः। तस्य किं सगुणमेवोपादानमिति लौकिकन्यायेन विरोधोऽस्त्युत नास्तीति संशये प्रकरसत्वाय[त्वात्] ब्रह्मणः अस्तीति

१. T, T¹, and P. प्राक्तु तैः

२. TM omits निर्गुण......सगुणमेवो

३. T, T¹, and P. वदन्

भाष्यम्

धर्मा उपपद्यन्ते "सर्वज्ञं सर्वशक्ति महामायं च ब्रह्म" इति, तस्मादनतिशङ्कनीयमिदमौपनिषदं दर्शनमिति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
द्वितीयाध्यायस्य प्रथमः पादः

प्रकटार्थविवरणम्

पूर्वः पक्षः । सिद्धान्तस्तु यद्यपि स्वतोऽखण्डैकरसं ब्रह्म, तथापि मायाप्रतिबिम्बितस्य सर्वकारणधर्मोपपत्तेः न कोऽपि ब्रह्मणि वेदान्तसमन्वयस्य विरोधः शङ्कनीय इति ॥

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे
द्वितीयस्याध्यायस्य प्रथमः पादः

---

# अथ द्वितीयः पादः



यद्यपीदं वेदान्तवाक्यानामैदंपर्यं निरूपयितुं शास्त्रं प्रवृत्तम्, न तर्कशास्त्रवत्केवलाभिर्युक्तिभिः कंचित्सिद्धान्तं साधयितुं दूषयितुं वा प्रवृत्तम्, तथापि वेदान्तवाक्यानि व्याचक्षाणैः सम्यग्दर्शनप्रतिपक्षभूतानि सांख्यादिदर्शनानि निराकरणीयानीति तदर्थः परः पादः प्रवर्तते। वेदान्तार्थनिर्णयस्य च सम्यग्दर्शनार्थत्वात्तन्निर्णयेन स्वपक्षस्थापनं प्रथमं कृतम्; तद्ध्यभ्यर्हितं परपक्षप्रत्याख्यानादिति। ननु मुमुक्षूणां मोक्षसाधनत्वेन सम्यग्दर्शननिरूपणाय स्वपक्षस्थापनमेव केवलं कर्तुं युक्तम्; किं परपक्षनिराकरणेन परविद्वेषकारणेन? बाढमेवम्;

## प्रकटार्थविवरणम्

अतिक्रान्तेन पादेन समन्वये वादिभिरुद्भाविता दोषाः परिहृताः। इदानीं परपक्षाणां भ्रान्तिमूलत्वमुपपादयितुं परः पाद आरभ्यते। ननु ब्रह्मणि वेदान्तानां तात्पर्यमेव निरूपणीयम्; किमिदमकाण्डे पक्षान्तरखण्डनताण्डवमित्याशङ्क्याह—यद्यपीदमिति॥ प्रतिपक्षप्रतिक्षेपमन्तरेण स्वपक्षावधारणानुपपत्तेः, परपक्षखण्डनं मण्डनमेवोद्दण्डपण्डितानामित्यर्थः। तर्हि प्रथमं परपक्षापाकरणमेव किं नाकारीत्याशङ्क्याह — वेदान्तार्थनिर्णयस्य चेति॥ परपक्षापाकरणे तत्र प्रद्वेषस्यावर्जनीयत्वात् न श्रेयोऽर्थिनां विरक्तानां तत्र प्रवृत्तिर्युक्तेत्याशङ्क्याह—ननु मुमुक्षूणामिति॥ परपक्षापाकरणे विद्वेषः प्राप्नोतीत्येतत् सत्यम्; तथापीदमेव सम्यग्ज्ञानमित्यवधारणाय वीतरागेणापि परपक्षापाकरणं करणीयमेव विद्वेषमनालम्ब्येत्याह—बाढमेवेति [मेवमिति]॥

१. T, T¹ and A. भूयोऽर्थिना
२. TM and A omit आशङ्क्य
३. T, T¹, TM and A. विद्वेषमालम्ब्य

भाष्यम्

तथापि महाजनपरिगृहीतानि महान्ति सांख्यादितन्त्राणि सम्यग्दर्शनापदेशेन प्रवृत्तान्युपलभ्य भवेत्केषांचिन्मन्दमतीनाम्—एतान्यपि सम्यग्दर्शनायोपादेयानि—इत्यपेक्षा, तथा युक्तिगाढत्वसंभवेन सर्वज्ञभाषितत्वाच्च श्रद्धा च तेषु—इत्यतस्तदसारतोपपादनाय प्रयत्यते। ननु "ईक्षतेर्नाशब्दम्" "कामाच्च नानुमानापेक्षा" "एतेन सर्वे व्याख्याता व्याख्याताः" इति च पूर्वत्रापि सांख्यादिपक्षप्रतिक्षेपः कृतः; किं पुनः कृतकरणेनेति। तदुच्यते—सांख्यादयः स्वपक्षस्थापनाय वेदान्तवाक्यान्यप्युदाहृत्य स्वपक्षानुगुण्येनैव योजयन्तो व्याचक्षते, तेषां यद्व्याख्यानं तद्व्याख्यानाभासम्, न सम्यग्व्याख्यानम्—इत्येतावत्पूर्वं कृतम्; इह तु वाक्यनिरपेक्षः स्वतन्त्रस्तद्युक्तिप्रतिषेधः क्रियत इत्येष विशेषः॥

## रचनानुपपत्तेश्च नानुमानम्॥ २-२-१॥

तत्र सांख्या मन्यन्ते—यथा घटशरावादयो भेदा मृदात्मतयान्वीयमाना मृदात्मकसामान्यपूर्वका लोके दृष्टाः, तथा सर्व एव बाह्याध्यात्मिका भेदाः सुखदुःखमोहात्मतयान्वीयमानाः सुखदुःखमोहात्मकसामान्यपूर्वका भवितुमर्हन्ति; यत्सुखदुःखमोहात्मकं सामान्यं तत् त्रिगुणं

प्रकटार्थविवरणम्

पौनरुक्त्यमाशङ्क्य समाधत्ते— नन्वीक्षतेरित्यादिना॥

रचनानुपपत्तेश्च नानुमानम्॥

एवं तावत्पादारम्भमुपपाद्य पूर्वपक्षमाह—तत्र सांख्या इत्यादिना॥ विमता [१]भावाः सुखदुःखमोहसामान्यप्रकृतिकाः, तदन्वितत्वात्, ये यदन्विताास्ते तत्प्रकृतिकाः, यथा मृदन्विता घटादयो मृत्प्रकृतिका इत्यर्थः। एतावता कथं प्रधानसिद्धिरित्याशङ्क्याह— यदिति॥ सुखसामान्यं सत्त्वम्; दुःखसामान्यं रजः, मोहसामान्यं तम इति सुखदुःखमोह-

१. T, T¹ and P. भावः

भाष्यम्

प्रधानं मृद्वदचेतनं चेतनस्य पुरुषस्यार्थं साधयितुं स्वभावेनैव विचित्रेण विकारात्मना प्रवर्तत इति। तथा परिमाणादिभिरपि लिङ्गैस्तदेव प्रधानमनुमिमते ॥

तत्र वदामः—यदि दृष्टान्तबलेनैवैतन्निरूप्येत, नाचेतनं लोके चेतनानधिष्ठितं स्वतन्त्रं किंचिद्विशिष्टपुरुषार्थनिर्वर्तनसमर्थान्विकारान्विरचयत् दृष्टम्; गेहप्रासादशयनासनविहारभूम्यादयो हि लोके प्रज्ञावद्भिः शिल्पिभिर्यथाकालं सुखदुःखप्राप्तिपरिहारयोग्या रचिता दृश्यन्ते;

प्रकटार्थविवरणम्

सामान्यप्रकृतिकत्वे साधिते त्रिगुणं प्रधानं सिध्यतीत्यर्थः। अचेतनं कार्यं दृष्ट्वा-कारणमप्यचेतनमनुमीयत इत्याह—मृद्वदचेतनमिति ॥ किमर्थं तत्परिणमते[1] कथं वेत्याशङ्क्याह[2]—पुरुषस्येति ॥ अनुमानान्तरमाह—तथा परिमाणादिभि[3]रपीति ॥ विमतं कार्यमविभक्तैकप्रकृतिकम्, परिमितत्वात्, अङ्कुरादिवत्। यदि शब्दादीनां[आदिशब्दादिदानीं]कारणशक्तितः[4] कार्यस्य प्रवृत्तेर्दर्शनान्महदादि[5]-कार्यप्रवृत्तिरपि कारणशक्तितो भवितुमर्हति; तच्च शक्तिमत्प्रधानम्। तथा कार्याद्विभक्तस्येदानीं कारणस्य दर्शनान्महदादिकार्यादपि विभक्तं कारणं वक्तव्यम्, तत्प्रधानम्। तथा नानारूपाणां सृष्टेः प्रागिदानीं कचिदविभागदर्शना[6]न्महदादीनामपि कचिदविभागो वक्तव्यः, तत्प्रधानमित्येतत्सर्वं गृह्यते; तदुक्तम्—

"भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥" इति ।

तस्मात् प्रधानवादस्य प्रमाणमूलत्वा[7]दर्थात्तेन चेतने समन्वयो विरुध्यत इति पूर्वः पक्षः ॥

सिद्धान्तमाह—तत्र वदाम इत्यादिना ॥ यदि दृष्टान्तबलेन त्वया स्वतन्त्रमचेतनं कारणं निरूप्यते[8], न तर्हि तन्निरूपयितुं शक्यते । स्वतन्त्रस्या-

१. TM. परिणिणमते
२. A omits कथं वा
३. A. परिणामादि-
४. A. शक्तिकं
५. A. दर्शने महत्
६. T, TM and A omit कचित् .. ..मपि
७. T. मूलत्वादत उक्तेन
८. TM omit निरूप्यते न तर्हि तत्

### भाष्यम्

तथेदं जगदखिलं पृथिव्यादि नानाकर्मफलोपभोगयोग्यं बाह्यम्, आध्यात्मिकं च शरीरादि नानाजात्यन्वितं प्रतिनियतावयवविन्यासमनेककर्मफलानुभवाधिष्ठानं दृश्यमानं प्रज्ञावद्भिः संभाविततमैः शिल्पिभिर्मनसाप्यालोचयितुमशक्यं सत् कथमचेतनं प्रधानं रचयेत्? लोष्टपाषाणादिष्वदृष्टत्वात्; मृदादिष्वपि कुम्भकाराद्यधिष्ठितेषु विशिष्टाकारा रचना दृश्यते—तद्वत्प्रधानस्यापि चेतनान्तराधिष्ठितत्वप्रसङ्गः। न च मृदाद्युपादानस्वरूपव्यपाश्रयेणैव धर्मेण मूलकारणमवधारणीयम्, न बाह्यकुम्भकारादिव्यपाश्रयेण—इति किंचिन्नियामकमस्ति। न चैवं सति किंचिद्विरुध्यते, प्रत्युत श्रुतिरनुगृह्यते, चेतनकारणसमर्पणात्।

### प्रकटार्थविवरणम्

चेतनस्य विचित्रकार्यरचनाया अदृष्टत्वादित्यर्थः। प्रयोगश्च—विमतं न स्वतन्त्राचेतननिर्मितम्[१], विचित्रकार्यत्वात्, प्रासादादिवत्; तथा परपरिकल्पितं प्रधानं न स्वतन्त्रं जगत्कारणम्, केवलाचेतनत्वात्, मृन्मात्रवत्; तथा इदं जगत् विशिष्टबुद्धिमत्कर्तृपूर्वकम्, विशिष्टरचनात्वात्, प्रासादादिवत् इति। किञ्च पराभिमतमपि प्रधानं विशिष्टचेतनाधिष्ठितं स्वकार्यायालम्, अचेतनत्वात्, मृदादिवदित्याह—मृदादिष्विति[२]॥ ननु लोके कार्येष्वनुगतस्य मृदादेरुपादानत्वदर्शनात् जगत्यनुगतमचेतनमात्रमुपादानमनुमीयते; ततो[३] धर्मिग्राहकप्रमाणबाध इत्याशङ्क्याह— न च मृदाद्युपादानेति॥ अनुगतत्वेन मृदादेरुपादानत्वं दृष्टम्, तदेव ग्राह्यम्; चेतनाधिष्ठितत्वेन यद्दृष्टं तन्न ग्राह्यम्—इत्यत्र कोशपानमेव शरणम्। अतः स्वतन्त्राचेतनस्योपादानत्वे प्रमाणाभावान्न धर्मिग्राहकप्रमाणबाध इत्यर्थः। ननु दृष्टान्ते यद्दृष्टं तस्य सर्वस्य दार्ष्टान्तिकेऽप्यापादनमुत्कर्षसमा जातिः, यथा कृतकत्वात् घटवदनित्यः शब्द इत्युक्ते घटवत्सावयवोऽपि स्यादिति, तत्राह[६]—न चैवं सतीति॥ प्रमाणान्तराविरोधात् भवेत्तदसदुत्तरम्; नेह कश्चित्

१. A. निमित्तं
२. A. मृणाद्यपीति
३. TM and A. अतो
४. T. यद्दृष्टान्तं न
५. T, T[1], P and TM add यत्
६. A. अत्राह

## भाष्यम्

अतो रचनानुपपत्तेश्च हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति । अन्वयाद्यनुपपत्तेश्चेति चशब्देन हेतोरसिद्धिं समुच्चिनोति । न हि बाह्याध्यात्मिकानां भेदानां सुखदुःखमोहात्मकतयान्वय उपपद्यते, सुखादीनां चान्तरत्वप्रतीतेः, शब्दादीनां चातद्रूपत्वप्रतीतेः, तन्निमित्तत्वप्रतीतेश्च, शब्दाद्यविशेषेऽपि च भावनाविशेषात्सुखादिविशेषोपलब्धेः । तथा परिमितानां भेदानां मूलाङ्कुरादीनां संसर्गपूर्वकत्वं दृष्ट्वा बाह्याध्यात्मिकानां भेदानां परिमितत्वात्संसर्गपूर्वकत्वमनुमिमानस्य सत्त्वरजस्तम-

## प्रकटार्थविवरणम्

बाधकमस्ति, वैपरीत्यं[रीत्येन]च; श्रुत्यनुगुणत्वं लभ्यत इत्यर्थः । यस्मात् श्रुत्यनुगृहीतबहुतरानुमानविरोधात् न स्वतन्त्राचेतनस्य कार्यान्तरं नोपपनीपद्यते अत इत्युपसंहारः । सौत्रचकारस्यार्थमाह---अन्वयादिति ॥ सुखादीनामान्तरत्वात् शब्दादीना च बाह्यत्वप्रतीतेः सुखाद्यन्वयो भावानामसिद्ध इत्यर्थः । किञ्च शब्दादीनां सुखादिनिमित्तत्वप्रतीतेः निमित्तनैमित्तिकयोश्च भेदस्य प्रसिद्धत्वान्न शब्दादीनां सुखाद्यात्मकत्वमित्याह—तन्निमित्तत्वप्रतीतेश्चेति ॥ किञ्च शब्दादीनां सुखाद्यात्मकत्वे सर्वेषां साधारणः सुखादिप्रतिभासः स्यात्; न चास्ति; 'पुत्रस्ते जातः' इत्यादिशब्दश्रवणे पितुः सुखदर्शनात्, तच्छत्रोः दुःखदर्शनादित्याह—शब्दाद्यविशेषेऽपि चेति ॥ एवमाद्यहेतुं निराकृत्य द्वितीयहेतुं निराकरोति—तथा परिमितानामिति ॥ संसर्गशब्देनानुगतं लक्ष्यते; देशेन परिच्छिन्नत्वं हस्तादिपरिमित [मितत्वं] परिमाणयोग्यत्वं वा । यदि परिमितत्वम्, तदा भागासिद्धिः, आकाशादेः तदभावात्; यदि परिगणितत्वं वस्तुतो भिन्नत्वं वा, तदा प्रधानपुरुषेष्वनैकान्तिक[त्वम्] इति भावः । यच्च परिशिष्टं हेत्वन्तरं तेनैकवस्तुप्रकृतिकत्वं चेत् साध्यम्, तदा सिद्धसाध-

१. TM and A. कार्यरचनोपपनी-
२. A omits सुखा...शब्दादीना
३. TM and A. योगित्वं
४. T, T[1], P and TM. तेनैतद्वस्तु-

भाष्यम्

सामपि संसर्गपूर्वकत्वप्रसङ्गः, परिमितत्वाविशेषात् । कार्यकारणभावस्तु प्रेक्षापूर्वकनिर्मितानां शयनासनादीनां दृष्ट इति न कार्यकारणभावाद्बाह्याध्यात्मिकानां भेदानामचेतनपूर्वकत्वं शक्यं कल्पयितुम् ॥

## प्रवृत्तेश्च ॥ २-२-२ ॥

आस्तां तावदियं रचना ; तत्सिद्ध्यर्था या प्रवृत्तिः—साम्यावस्थानात्प्रच्युतिः, सत्त्वरजस्तमसामङ्गाङ्गिभावरूपापत्तिः, विशिष्टकार्याभिमुखप्रवृत्तिता—सापि नाचेतनस्य प्रधानस्य स्वतन्त्रस्योपपद्यते, मृदादिष्वदर्शनाद्रथादिषु च । न हि मृदादयो रथादयो वा स्वयमचेतनाः सन्तश्चेतनैः कुलालादिभिरश्वादिभिर्वानधिष्ठिता विशिष्टकार्याभिमुखप्रवृत्तयो दृश्यन्ते ; दृष्टाच्चादृष्टसिद्धिः ; अतः प्रवृत्त्यनुपपत्तेरपि हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति । ननु चेतनस्यापि प्रवृत्तिः केवलस्य

प्रकटार्थविवरणम्

नम् ; यद्यचेतनैकपूर्वकत्वं तदा शयनादिष्वनैकान्तिकत्वमित्याह—कार्यकारणभावस्त्विति ॥

प्रवृत्तेश्च ॥

प्रवृत्तेश्चानुपपत्तेर्नानुमानिकं प्रधानं कारणमिति योजना । ननु मा नाम दृश्यतां चेतनानधिष्ठितस्य प्रवृत्तिः ; ततः प्रधाने किमायातमित्याशङ्क्याह—दृष्टाच्चादृष्टसिद्धिरिति ॥ दृष्टादृष्टसिद्धिस्त्वयानुमानवादिनैः, इतरथातिप्रसङ्गादित्यर्थः । गूढाभिसन्धिः सांख्यः शङ्कते—ननु चेतनस्यापीति ॥ चेतनस्याप्यचेतनसंयुक्तस्यैव प्रवृत्तिर्न शुद्धस्य ; अतः प्राप्ताप्राप्तविवेकेनाचेतनमेव

१. TM. वृत्तेः
२. T, T[1] and P. अनुमानमदृश्यतां
३. T and P. वस्तुतः
४. A. मानिनः
५. A. नन्विति ॥ ननुचेत-
६. T, T[1], P and TM. नाशुद्धस्य

### भाष्यम्

न दृष्टा—सत्यमेतत्—तथापि चेतनसंयुक्तस्य रथादेरचेतनस्य प्रवृत्तिर्दृष्टा; न त्वचेतनसंयुक्तस्य चेतनस्य प्रवृत्तिर्दृष्टा; किं पुनरत्र युक्तम्—यस्मिन्प्रवृत्तिर्दृष्टा तस्य सा, उत यत्संप्रयुक्तस्य दृष्टा तस्यैव सेति? ननु यस्मिन्दृश्यते प्रवृत्तिस्तस्यैव सेति युक्तम्, उभयोः प्रत्यक्षत्वात्; न तु प्रवृत्त्याश्रयत्वेन केवलश्चेतनो रथादिवत्प्रत्यक्षः; प्रवृत्त्याश्रयदेहादिसंयुक्तस्यैव तु चेतनस्य सद्भावसिद्धिः—केवलाचेतनरथादिवैलक्षण्यं जीवदेहस्य दृष्टमिति अत एव च प्रत्यक्षे देहे सति चैतन्यस्य दर्शनादसति

### प्रकटार्थविवरणम्

प्रवृत्तिहेतुरिति भावः। अर्धाङ्गीकारेण[१] परिहरति—सत्यमेतदिति ॥ केवलस्य चेतनस्य प्रवृत्तिर्न दृष्टेत्येतत् सत्यम्; तथाप्यचेतनमेव प्रवृत्तिहेतुरित्येतत्तु नास्ति; यतः पुरुषाधिष्ठितो रथो यातीति प्रसिद्धिः, न तु रथाधिष्ठितः पुरुषो यातीति; ततश्चेतनस्य प्रवृत्तौ प्रयोजकतेति भावः। विमर्शपूर्वकं गूढाभिसन्धिं विवृणोति सांख्यः—किं पुनरत्रेति ॥ यदाश्रया दृश्यते तस्यैव प्रयोजकत्वं युक्तमिति स्वयमेवाह—यस्मिन्निति ॥ ननु 'अहमत्र प्रवृत्त[प्रवर्ते]' इति चेतनाश्रयापि प्रवृत्तिः प्रत्यक्षसिद्धा; अतस्तस्यापि[२] प्रयोजकत्वं किं न स्यादित्याशङ्क्याह-न तु प्रवृत्त्याश्रयत्वेनेति ॥ कार्यकारणसंघातस्यैवाहंप्रत्ययवेद्यत्वादिति भावः। कथं तर्हि व्यतिरिक्तात्मासिद्धिरित्याशङ्क्याह—प्रवृत्त्याश्रयेति ॥ जीवदेहः सात्मकः, प्राणादिमत्त्वात्[३], न य एवं न स एवम्, यथा रथः इत्यनुमानात्[४] तत्सद्भावमात्रं सिध्यतीत्यर्थः। केवल आत्मा प्रवृत्त्याश्रयतया[५] प्रत्यक्षो न भवतीत्यर्थः। अत्र लिङ्गमाह—अत एव चेति ॥ यतः प्रत्यक्षेण केवल आत्मा न सिद्धः, अत एव लोकायतिकानां विवादः; अन्यथा व्यतिरिक्तात्मनि

१. A. करणेन

२. TM. तथापि
A. ततस्तस्यापि

३. T and T¹. प्रमाणादिःवात्

४. T, T¹ and P. मानम्। असद्भाव

५. T, T¹ and P. वृत्त्याश्रय-

भाष्यम्

चादर्शनाद्देहस्यैव चैतन्यमपीति लोकायतिकाः प्रतिपन्नाः ; तस्मादचेतनस्यैव प्रवृत्तिरिति । तत्राभिधीयते—न ब्रूमो यस्मिन्नचेतने प्रवृत्तिर्दृश्यते न तस्य सेति ; भवतु तस्यैव सा ; सा तु चेतनाद्भवतीति ब्रूमः, तद्भावे भावात्तदभावे चाभावात्—यथा काष्ठादिव्यपाश्रयापि दाहप्रकाशादिलक्षणा विक्रिया, अनुपलभ्यमानापि च केवले ज्वलने, ज्वलनादेव भवति, तत्संयोगे दर्शनात्तद्वियोगे चादर्शनात्—तद्वत् ; लोकायतिकानामपि चेतन एव देहोऽचेतनानां रथादीनां प्रवर्तको दृष्ट इत्यविप्रतिषिद्धं चेतनस्य प्रवर्तकत्वम् । ननु तव देहादिसंयुक्तस्याप्यात्मनो विज्ञानस्वरूपमात्रव्यतिरेकेण प्रवृत्त्यनुपपत्तेरनुपपन्नं प्रवर्तकत्वमिति चेत्, न ; अयस्कान्तवद्रूपादिवच्च प्रवृत्तिरहितस्यापि प्रवर्तकत्वोपपत्तेः । यथायस्कान्तो मणिः स्वयं प्रवृत्तिरहितोऽप्ययसः प्रवर्तको भवति, यथा च रूपादयो विषयाः स्वयं प्रवृत्तिरहिता अपि चक्षुरादीनां प्रवर्तका भवन्ति, एवं प्रवृत्तिरहितोऽपीश्वरः सर्वगतः सर्वात्मा सर्वज्ञः सर्वशक्तिश्च सन् सर्वं प्रवर्तयेदित्युपपन्नम् । एकत्वात्प्रवर्त्याभावे प्रवर्तकत्वानुपपत्तिरिति चेत्, न ; अविद्याप्रत्युपस्थापितनामरूपमायावेशवशेनासकृत्प्रत्युक्तत्वात् । तस्मात्संभवति प्रवृत्तिः सर्वज्ञकारणत्वे, न त्वचेतनकारणत्वे ॥

प्रकटार्थविवरणम्

विवादो न स्यादित्यर्थः । यस्मादात्माश्रया प्रवृत्तिः प्रत्यक्षसिद्धा न भवति, तस्मादित्युपसंहारः । सिद्धान्ती त्वचेतनस्य प्रवृत्तिमभ्युपगम्य चेतनस्य प्रयोजकत्वं निवारयितुं न शक्यत इत्याह—तत्राभिधीयत इत्यादिना ॥ ननु लोकायतिकेन चेतन एव नेष्यते ; कथमन्वयव्यतिरेकाभ्यां तस्य प्रवृत्तौ प्रयोजकत्वमुच्यत इत्याशङ्क्याह—लोकायतिकानामपीति ॥ इदानीं सिद्धान्त्यभिमतात्मस्वभावपर्यालोचनया प्रवर्तकत्वमाक्षिप्य समाधत्ते—ननु तवेत्यादिना ॥ उक्तमपि विस्मृत्य शङ्कमानस्य तदेव स्मारयति—नाविद्येति ॥ अविद्यया

भाष्यम्

# पयोम्बुवच्चेत्तत्रापि ॥ २-२-३ ॥

स्यादेतत्—यथा क्षीरमचेतनं स्वभावेनैव वत्सविवृद्ध्यर्थं प्रवर्तते, यथा च जलमचेतनं स्वभावेनैव लोकोपकाराय स्यन्दते, एवं प्रधानमचेतनं स्वभावेनैव पुरुषार्थसिद्धये प्रवर्तिष्यत इति । नैतत्साधूच्यते, यतस्तत्रापि पयोम्बुनोश्चेतनाधिष्ठितयोरेव प्रवृत्तिरित्यनुमिमीमहे, उभयवादिप्रसिद्धे रथादावचेतने केवले प्रवृत्त्यदर्शनात्; शास्त्रं च "योऽप्सु तिष्ठन्" "योऽपोऽन्तरो यमयति" "एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते" इत्येवंजातीयकं समस्तस्य लोकपरिस्पन्दितस्येश्वराधिष्ठततां श्रावयति; तस्मात्साध्यपक्षनिक्षिप्तत्वात् पयोम्बुवदित्यनुपन्यासः—चेतनायाश्च धेन्वाः स्नेहेच्छया पयसः प्रवर्तकत्वोपपत्तेः, वत्सचोषणेन च पयस आकृष्यमाणत्वात्; न चाम्बुनोऽप्यत्यन्तमनपेक्षा, निम्नभूम्याद्यपेक्षत्वात्स्यन्दनस्य; चेतनापेक्षत्वं तु

प्रकटार्थविवरणम्

आज्ञारूपेण प्रत्युपस्थापिता शास्त्रेण समर्पिता या नामरूपहेतुर्माया तस्यां प्रतिबिम्बितत्वेनेश्वरादिभाव इति प्रसक्तुकामित्यर्थः ॥

पयोम्बुवच्चेत्तत्रापि ॥

प्रत्यक्षदृष्टबलेन स्वतन्त्रस्यैवाचेतनस्य प्रवृत्तिमाशङ्क्य परिहरति—पयोम्बुवदिति ॥ न केवलमनुमानागमाभ्यामस्वतन्त्रम्, प्रत्यक्षतोऽपीत्याह—चेतनायाश्च धेन्वा इति ॥ ननु नास्ति चेत् क्वाप्यचेतनस्य स्वातन्त्र्यं कथं तर्हि

१. T, T[1] and P. ईश्वराभिभाव

२. A. इति भावः

३. T, T[1] and P. नास्ति चेतनस्य

४. TM omits अपि

भाष्यम्

सर्वत्रोपदर्शितम् । "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" इत्यत्र तु बाह्यनिमित्तनिरपेक्षमपि स्वाश्रयं कार्यं भवतीत्येतल्लोकदृष्ट्या निदर्शितम्; शास्त्रदृष्ट्या तु पुनः सर्वत्रैवेश्वरापेक्षत्वमापद्यमानं न पराणुद्यते ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ २.२-४ ॥

सांख्यानां त्रयो गुणाः साम्येनावतिष्ठमानाः प्रधानम्; न तु तद्व्यतिरेकेण प्रधानस्य प्रवर्तकं निवर्तकं वा किंचिद्बाह्यमपेक्ष्यमवस्थितमस्ति; पुरुषस्तूदासीनो न प्रवर्तको न निवर्तकः—इत्यतोऽनपेक्षं प्रधानम्; अनपेक्षत्वाच्च कदाचित्प्रधानं महदाद्याकारेण परिणमते, कदाचिन्न परिणमते, इत्येतदयुक्तम् । ईश्वरस्य तु सर्वज्ञत्वात्सर्वशक्तित्वान्महामायत्वाच्च प्रवृत्त्यप्रवृत्ती न विरुध्येते ॥

प्रकटार्थविवरणम्

"क्षीरवद्धि" इति पूर्वं निदर्शितमित्याशङ्क्याह—उपसंहारेति ॥ लोकसिद्धेनैव निदर्शनेन मायावादे व्यवहारो न स्वरससिद्धेनैवेति भावः ॥

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥

ननूक्तनीत्या स्वातन्त्र्येणाचेतनप्रवृत्तिर्न घटते चेन्मा घटिष्ट; तर्ह्यस्तु धर्माद्यपेक्षा प्रवृत्तिरित्याशङ्क्याह—सांख्यानां त्रयो गुणा इत्यादिना ॥ धर्मादेरपि प्रधानविकारतया तत्रैवान्तर्भूतस्याचेतनत्वसाम्यात् न स्वातन्त्र्येण प्रधानप्रवर्तकत्वमित्यर्थः । तर्हि पुरुषः प्रवर्तकोऽस्त्वित्याशङ्क्याह—पुरुषस्तूदासीन इति ॥ फलितमाह—इत्यतोऽनपेक्षमिति ॥ तर्हीश्वरस्यापि व्यतिरिक्तः प्रवर्तको निवर्तको वा नास्तीति सदा प्रवृत्तिर्वा निवृत्तिर्वा समानेत्याशङ्क्याह—ईश्वरस्य त्विति ॥ जानात्येवेश्वरः अयं प्राणिनां भोगकालः, अयं च नेति । ततः सृष्टौ संहारे च तस्य प्रवृत्त्यप्रवृत्ती न विरुध्येते इत्यर्थः ॥

१. T. T¹ and P. क्षीरादीति	३. TM. स्वतन्त्रेण

२. A. प्रदर्शित	४. TM. साम्ये

भाष्यम्

# अन्यत्राभावाच्च न तृणादिवत् ॥ २-२-५ ॥

स्यादेतत्—यथा तृणपल्लवोदकादि निमित्तान्तरनिरपेक्षं स्वभावादेव क्षीराद्याकारेण परिणमते, एवं प्रधानमपि महदाद्याकारेण परिणंस्यत इति ; कथं च निमित्तान्तरनिरपेक्षं तृणादीति गम्यते ? निमित्तान्तरानुपलम्भात् । यदि हि किंचिन्निमित्तान्तरमुपलभेमहि, ततो यथाकामं तेन तेन निमित्तेन तृणाद्युपादाय क्षीरं संपादयेमहि ; न तु संपादयामहे ; तस्मात्स्वाभाविकस्तृणादेः परिणामः; तथा प्रधानस्यापि स्यादिति । अत्रोच्यते—भवेत्तृणादिवत्स्वाभाविकः प्रधानस्यापि परिणामः, यदि तृणादेरपि स्वाभाविकः परिणामोऽभ्युपगम्येत ; न त्वभ्युपगम्यते, निमित्तान्तरोपलब्धेः । कथं निमित्तान्तरोपलब्धिः ? अन्यत्राभावात् । धेन्वैव ह्युपभुक्तं तृणादि क्षीरीभवति, न प्रहीणमनडुहाद्युपभुक्तं वा ; यदि हि निर्निमित्तमेतत्स्यात्, धेनुशरीरसंबन्धादन्यत्रापि तृणादि क्षीरीभवेत् ; न च यथाकामं मानुषैर्न शक्यं संपादयितुमित्येतावता निर्निमित्तं भवति ; भवति हि किंचित्कार्यं मानुषसंपाद्यम्, किंचिद्दैवसंपाद्यम् ; मनुष्या अपि शक्नुवन्त्येव स्वोचितेनोपायेन तृणाद्युपादाय क्षीरं संपादयितुम् ; प्रभूतं हि क्षीरं कामयमानाः प्रभूतं घासं धेनुं चारयन्ति ; ततश्च प्रभूतं क्षीरं लभन्ते ; तस्मान्न तृणादिवत्स्वाभाविकः प्रधानस्य परिणामः ॥

प्रकटार्थविवरणम्

अन्यत्राभावाच्च न तृणादिवत् ॥

दृष्टान्तावष्टम्भेन स्वाभाविकं प्रधानस्य परिणाममाशङ्क्य परिहरति—स्यादेतदित्यादिना ॥ यदुक्तं स्वेच्छया संपादयितुमशक्यत्वात् स्वाभाविक इति, तत्राह—न च यथाकाममिति ॥

भाष्यम्

## अभ्युपगमेऽप्यर्थाभावात् ॥ २-२-६ ॥

स्वाभाविकी प्रधानप्रवृत्तिर्न भवतीति स्थापितम्; अथापि नाम भवतः श्रद्धामनुरुध्यमानाः स्वाभाविकीमेव प्रधानस्य प्रवृत्तिमभ्युपगच्छेम तथापि दोषोऽनुषज्येतैव; कुतः? अर्थाभावात्। यदि तावत्स्वाभाविकी प्रधानस्य प्रवृत्तिर्न किंचिदन्यदिहापेक्षत इत्युच्येत, ततो यथैव सहकारि किंचिन्नापेक्षते एवं प्रयोजनमपि किंचिन्नापेक्षिष्यते— इत्यतः प्रधानं पुरुषस्यार्थं साधयितुं प्रवर्तत इतीयं प्रतिज्ञा हीयेत। स यदि ब्रूयात्—सहकार्येव केवलं नापेक्षते, न प्रयोजनमपीति; तथापि प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्यम्—भोगो वा स्यात्, अपवर्गो वा, उभयं वेति। भोगश्चेत्—कीदृशोऽनाधेयातिशयस्य पुरुषस्य भोगो भवेत्? अनिर्मोक्षप्रसङ्गश्च; अपवर्गश्चेत्—प्रागपि प्रवृत्तेरपवर्गस्य

प्रकटार्थविवरणम्

### अभ्युपगमेऽप्यर्थाभावात् ॥

इदानीं स्वाभाविकप्रवृत्तिमभ्युपगम्य दोषमाह—अभ्युपगमेऽपीति ॥ अर्थाभावादिति ॥ प्रयोजनापेक्षाभावप्रसङ्गादित्येकोऽर्थो व्याख्यातः। इदानीमर्थान्तरं दर्शयितुं शङ्कामाह—यदि ब्रूयादित्यादिना ॥ पुरुषस्याविक्रियोपलब्धिमात्रस्वभावत्वात् सुखदुःखाद्युपलब्धिलक्षणो भोगो न प्रधानव्यवहारसाध्य इत्याह—कीदृश इति ॥ किञ्च यदि प्रधानं भोगार्थमेव प्रवर्तेते तदा ततो निवृत्त्यसंभवात् कदाचिदपि मोक्षो न स्यादित्याह—अनिर्मोक्षप्रसङ्गश्चेति ॥ द्वितीयपक्षे दोषमाह—अपवर्गश्चेदिति ॥ यदा प्रधानं पुरुषस्य मोक्षाय

१. A निर्मोक्षश्चेति  २. A यदि

### भाष्यम्

सिद्धत्वात्प्रवृत्तिरनर्थिका स्यात्, शब्दाद्यनुपलब्धिप्रसङ्गश्च ; उभयार्थताभ्युपगमेऽपि भोक्तव्यानां प्रधानमात्राणामानन्त्यादनिर्मोक्षप्रसङ्ग एव ; न चौत्सुक्यनिवृत्त्यर्था प्रवृत्तिः ; न हि प्रधानस्याचेतनस्यौत्सुक्यं संभवति ; न च पुरुषस्य निर्मलस्य ; दृक्शक्तिसर्गशक्तिवैयर्थ्यभयाच्चेत्प्रवृत्तिः, तर्हि दृक्शक्त्यनुच्छेदवत्सर्गशक्त्यनुच्छेदात्संसारानुच्छेदादनिर्मोक्षप्रसङ्ग एव । तस्मात्प्रधानस्य पुरुषार्था प्रवृत्तिरित्येतदयुक्तम् ॥

### प्रकटार्थविवरणम्

प्रवर्तते तदा बन्धाय न प्रवर्तत एवेति प्रधानप्रवृत्तेः प्रागेव बन्धप्रागभावस्य स्वरूपावस्थानस्य मोक्षस्य सिद्धत्वात् प्रधानप्रवृत्तिः व्यर्था स्यादित्यर्थः । मोक्षार्थमेव प्रवृत्तमिति शब्दाद्युपलम्भो न स्यादित्यर्थः । तृतीयं दूषयति— उभयार्थताभ्युपगमेऽपीति ॥ न तावद्युगपदुभयं संभवति विरोधात्, क्रमपक्षेऽपि सर्वविकारोपभोगे चेन्मोक्षाय प्रवर्तते, तर्हि अनिर्मोक्ष एव प्रधानविकारा-...[कारणानामानन्त्यात्] इतरथा सकृच्छब्दाद्युपलम्भे पुनः [न पुनः] प्रवृत्तिः स्यादित्यर्थः । तस्मात्स्वाभाविकप्रवृत्त्यभ्युपगमेऽपि भोगापवर्गलक्षणार्थाभावात् असङ्गतमेतत् सांख्यमतम् । ननु प्रधानं स्वविभूतिख्यापनायोत्सुकम् ; पुरुषस्य च नृत्तादिदर्शनेनेवास्त्येवोत्कण्ठा प्रधानविभूतिदर्शने ; अतस्तन्निवृत्तिरेव प्रयोजनं प्रधानप्रवृत्तेरित्याशङ्क्याह— न चेति ॥ प्रधानस्याचेतनत्वात् पुरुषस्य स्वभावनिर्मलत्वादौत्सुक्यमेव निरूपयितुं न शक्यत इत्यर्थः । ननु पुरुषस्य दृक्छक्तिरस्ति ; सा दृश्यमान्तरेण चरितार्था न भवति ; प्रधानस्य च सर्गशक्तिर्दृष्टिं विना व्यर्था स्यात् ; अत उभयशक्तिवैयर्थ्यपरिहारः प्रयोजनमित्याशङ्क्याह— दृक्शक्तीति ॥ शक्त्योः नित्यत्वेन चरितार्थत्वाय सदा प्रधानं प्रवर्तेत इत्यनिर्मोक्ष इत्यर्थः । तस्मात्प्रधानप्रवृत्तेः प्रयोजनाभावात् निरपेक्षस्यैव प्रधानस्य प्रवृत्तिरित्येतदयुक्तमेवेति स्थितम् ॥

१. T, T², TM and A omit मेता...प्रवृत्तिः in line 14.  २. A omits पुरुषस्य स्वभावनिर्मलत्वात्

भाष्यम्

## पुरुषाश्मवदिति चेत्तथापि ॥ २-२-७ ॥

स्यादेतत्—यथा कश्चित्पुरुषो दृक्शक्तिसंपन्नः प्रवृत्तिशक्तिविहीनः पङ्गुरपरं पुरुषं प्रवृत्तिशक्तिसंपन्नं दृक्शक्तिविहीनमन्धमधिष्ठाय प्रवर्तयति, यथा वा अयस्कान्तोऽश्मा स्वयमप्रवर्तमानोऽप्ययः प्रवर्तयति, एवं पुरुषः प्रधानं प्रवर्तयिष्यति—इति दृष्टान्तप्रत्ययेन पुनः प्रत्यवस्थानम् । अत्रोच्यते—तथापि नैव दोषान्निर्मोक्षोऽस्ति, अभ्युपेतहानं तावद्दोष आपतति, प्रधानस्य स्वतन्त्रस्य प्रवृत्त्यभ्युपगमात्, पुरुषस्य च प्रवर्तकत्वानभ्युपगमात्; कथं चोदासीनः पुरुषः प्रधानं प्रवर्तयेत्? पङ्गुरपि ह्यन्धं पुरुषं वागादिभिः प्रवर्तयति; नैवं पुरुषस्य कश्चिदपि प्रवर्तनव्यापारोऽस्ति, निष्क्रियत्वान्निर्गुणत्वाच्च; नाप्ययस्कान्तवत्संनिधिमात्रेण प्रवर्तयेत्, संनिधिनित्यत्वेन प्रवृत्तिनित्यत्वप्रसङ्गात्; अयस्कान्तस्य त्वनित्यसंनिधेरस्ति स्वव्यापारः संनिधिः, परिमार्जनाद्यपेक्षा चास्यास्ति—

प्रकटार्थविवरणम्

पुरुषाश्मवदिति चेत्तथापि ॥

इदानीं पुरुषस्य प्रवर्तकत्वं निरस्तमपि दृष्टान्तावष्टम्भेन पुनराशङ्‌क्यापाकरोति—पुरुपाश्मवदिति ॥ पुरुषस्य प्रवर्तकत्वमभ्युपगम्य निरीश्वरसांख्यस्यापसिद्धान्तो दर्शितः । इदानीं प्रवर्तकत्वमपि न संभवतीत्याह—कथं चोदासीन इति ॥ ननु अयस्कान्तस्य सन्निधिमात्रेण प्रवर्तकत्वेऽपि[2] न सदा लोहस्य प्रवृत्तिर्दृश्यते; तथा प्रधानप्रवृत्तिरपि सदा न भविष्यतीत्याशङ्‌क्याह—अयस्कान्तस्य त्विति ॥ प्रधानपुरुषयोरुभयोरपि नित्यसर्वगतत्वेन सदा सन्निधिरस्ति; मणेस्त्वागन्तुकः सन्निधिरेव व्यापारः परिमार्जनमृज्ववस्थानं चापेक्षते; अतः सन्निधिमात्रेणाप्रवर्तकत्वाद्विषमो दृष्टान्त इत्यर्थः । तर्हि

१. TM पुरुषस्य

२. A omits अपि

३. T, TM and A omit तर्हि... प्रधानस्येति.

भाष्यम्

इत्यनुपन्यासः पुरुषाश्मवदिति । तथा प्रधानस्याचैतन्यात्पुरुषस्य चौदासीन्यात् तृतीयस्य च तयोः संबन्धयितुरभावात्संबन्धानुपपत्तिः; योग्यतानिमित्ते च संबन्धे योग्यतानुच्छेदादनिर्मोक्षप्रसङ्गः; पूर्ववच्चेहाप्यर्थभावो विकल्पयितव्यः परमात्मनस्तु स्वरूपव्यपाश्रयमौदासीन्यम्, मायाव्यपाश्रयं च प्रवर्तकत्वम्—इत्यस्त्यतिशयः ॥

## अङ्गित्वानुपपत्तेश्च ॥ २-२-८ ॥

इतश्च न प्रधानस्य प्रवृत्तिरवकल्पते—यद्धि सत्त्वरजस्तमसामन्योन्यगुणप्रधानभावमुत्सृज्य साम्येन स्वरूपमात्रेणावस्थानम्, सा प्रधाना-

प्रकटार्थविवरणम्

प्रधानपुरुषयोरपि आगन्तुक एव संबन्धः प्रवृत्तिहेतुरस्त्वित्याशङ्क्याह—तथा प्रधानस्येति ॥ ननु प्रधानस्याचेतनत्वात् दृश्यत्वे योग्यतास्ति; पुरुषस्य च चेतनत्वाद्द्रष्टृत्वे योग्यतास्तीति योग्यतानिमित्तो द्रष्टृदृश्यभाव एव संबन्ध इत्याशङ्क्याह—योग्यतेति ॥ किञ्च यथा स्वाभाविकप्रवृत्तिपक्षे विकल्प्य प्रयोजनाभाव उक्तः, तथा पुरुषसंबन्धात् प्रधानप्रवृत्तिपक्षेऽपि भोग एव प्रयोजनम्, अपवर्गो वा इत्येवं विकल्प्य द्रष्टव्यम् । ननु उक्तनीत्या त्वत्पक्षेऽपि न सिध्यति; त्वयाप्ययस्कान्तदृष्टान्तेनाविक्रियः परमात्मा प्रवर्तक इष्यत इत्याशङ्क्याह—परमात्मनस्त्विति ॥ बिम्बभूतस्य ब्रह्मणोऽविक्रियत्वं मायाप्रतिबिम्बितस्य त्वस्त्येवानिर्वाच्यो विकार इति ममास्ति विशेष इति भावः ॥

अङ्गित्वानुपपत्तेश्च ॥

एवं तावन्न स्वाभाविकी, नापि पुरुषसंनिधिनिबन्धना प्रधानप्रवृत्तिरित्युपपाद्येदानीं कस्यचिद्गुणस्य प्राधान्यम्, कस्यचिदुपसर्जनत्वमित्यपि वैषम्यं स्वतः परतो वा न संभवतीत्याह—अङ्गित्वानुपपत्तेरिति ॥

१. T and T¹. तथाप्यय

२. T, T¹, and P omit गुणस्य

३. A omits अङ्गित्वानुपपत्तेरिति

भाष्यम्

वस्था, तस्यामवस्थायामनपेक्षस्वरूपाणां स्वरूपप्रणाशभयात्परस्परं प्रत्यङ्गाङ्गिभावानुपपत्तेः, बाह्यस्य च कस्यचित्क्षोभयितुरभावात्, गुणवैषम्यनिमित्तो महदाद्युत्पादो न स्यात् ॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ २-२-९ ॥

अथापि स्यात्—अन्यथा वयमनुमिमीमहे—यथा नायमनन्तरो दोषः प्रसज्येत ; न ह्यनपेक्षस्वभावाः कूटस्थाश्चास्माभिर्गुणा अभ्युपगम्यन्ते, प्रमाणाभावात् ; कार्यवशेन तु गुणानां स्वभावोऽभ्युपगम्यते—यथा यथा कार्योत्पाद उपपद्यते, तथा तथैतेषां स्वभावोऽभ्युपगन्तव्यः ; 'चलं गुणवृत्तम्'इति चास्त्यभ्युपगमः ; तस्मात्साम्यावस्थायामपि वैषम्योपगमयोग्या एव गुणा अवतिष्ठन्त इति । एवमपि प्रधानस्य ज्ञशक्तिवियोगाद्रचनानुपपत्त्यादयः पूर्वोक्ता दोषास्तदवस्था एव ; ज्ञशक्तिमपि त्वनुमिमानः प्रतिवादित्वान्निवर्तेत, चेतनमेकमनेकप्रपञ्चस्य जगत उपादानमिति ब्रह्मवादप्रसङ्गात् ; वैषम्योपगमयोग्या अपि गुणाः साम्याव-

प्रकटार्थविवरणम्

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥

गुणानामनपेक्षस्वभावत्वात् स्वत एव वैषम्यं न संभवतीत्युक्तम्, तदसिद्धमित्याह—अथापि स्यादित्यादिना ॥ अनपेक्षस्वभावत्वादन्यथा सापेक्षत्वं तस्य कार्यवशादनुमितावपि प्रधानस्य ज्ञातृत्वशक्तिविहीनत्वाद्रचनानुपपत्त्यादयो दोषा दुर्निवारा एवेत्यर्थः । अथ कार्यदर्शनादेव ज्ञातृत्वमप्यनुमीयते तत्राह ज्ञशक्तिमपीति ॥ अनन्तरोक्तदोषपरिहारमभ्युपगम्य सूत्रोक्तो दोषः परिहर्तुं न शक्यत इत्युक्तम् ; इदानीं सोऽपि न शक्यत इत्याह—वैषम्योपगमेति ॥

१. T and T[1]. नापीत्यादिना    ३. TM and A. स्वभावादन्य

२. A omits अनपेक्ष    ४. TM omits इत्या...मेति

भाष्यम्

स्थायां निमित्ताभावान्नैव वैषम्यं भजेरन्, भजमाना वा निमित्ताभावाविशेषात्सर्वदैव वैषम्यं भजेरन्—इति प्रसज्यत एवायमनन्तरोऽपि दोषः ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ २-२-१० ॥

परस्परविरुद्धश्चायं सांख्यानामभ्युपगमः—क्वचित्सप्तेन्द्रियाण्यनुक्रामन्ति, क्वचिदेकादश; तथा क्वचिन्महतस्तन्मात्रसर्गमुपदिशन्ति, क्वचिदहंकारात्; तथा क्वचित्त्रीण्यन्तःकरणानि वर्णयन्ति, क्वचिदेकम्—इति; प्रसिद्ध एव तु श्रुत्येश्वरकारणवादिन्या विरोधस्तदनुवर्तिन्या च स्मृत्या; तस्मादप्यसमञ्जसं सांख्यानां दर्शनमिति ॥

अत्राह—नन्वौपनिषदानामप्यसमञ्जसमेव दर्शनम्, तप्यतापकयोर्जात्यन्तरभावानभ्युपगमात्; एकं हि ब्रह्म सर्वात्मकं सर्वस्य प्रपञ्चस्य कारणमभ्युपगच्छताम्—एकस्यैवात्मनो विशेषौ तप्यतापकौ, न जात्यन्तरभूतौ—इत्यभ्युपगन्तव्यं स्यात्; यदि चैतौ तप्यतापकावेकस्यात्मनो

प्रकटार्थविवरणम्

विप्रतिषेधाच्चासमञ्जसम् ॥

इतश्चासङ्गतं सांख्यमतमित्याह—परस्परविरुद्धश्चेति ॥ पञ्च कर्मेन्द्रियाणि, त्वगिन्द्रियमेकम्, रूपादिज्ञानसाधनं सप्तमं मन इति सप्तेन्द्रियाणि पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि, श्रोत्रं त्वक्चक्षुर्जिह्वा घ्राणमिति पञ्च ज्ञानेन्द्रियाणि, एकादशं मन इति; त्रीण्यन्तःकरणानि मनो बुद्धिरहंकार इति; एकमिति बुद्धिः । प्रकारान्तरेण विप्रतिषेधं व्याचष्टे—प्रसिद्ध एव त्विति ॥ प्रतिबन्दीग्रहेण सांख्यः प्रत्यवतिष्ठते—अत्राहेत्यादिना ॥ तप्यतापकयोः जीवसंसारयोः वास्तवभेदानभ्युपगमादेकस्यैव तप्यतापकत्वं च विप्रतिषिद्धमित्यर्थः । अनिर्मोक्षप्रसङ्गोऽपि समान इत्याह—यदि चैताविति ॥ स्वाभाविकस्य उच्छेदासंभवादित्यर्थः । ननु वीच्यादीनां जलात्म-

१. A omits वीच्या...प्रसिद्धश्चायमिति । अर्थी

भाष्यम्

विशेषौ स्याताम्, स ताभ्यां तप्यतापकाभ्यां न निर्मुच्येत—इति तापोपशान्तये सम्यग्दर्शनमुपदिशच्छास्त्रमनर्थकं स्यात्; न ह्यौष्ण्यप्रकाशधर्मकस्य प्रदीपस्य तदवस्थस्यैव ताभ्यां निर्मोक्ष उपपद्यते; योऽपि जलवीचीफेनाद्युपन्यासः, तत्रापि जलात्मन एकस्य वीच्यादयो विशेषा आविर्भावतिरोभावरूपेण नित्या एव—इति समानो जलात्मनो वीच्यादिभिरनिर्मोक्षः। प्रसिद्धश्चायं तप्यतापकयोर्जात्यन्तरभावो लोके; तथा हि—अर्थी चार्थश्चान्योन्यभिन्नौ लक्ष्येते; यद्यर्थिनः स्वतोऽन्योऽर्थो न स्यात्, यस्यार्थिनो यद्विषयमर्थित्वं स तस्यार्थो नित्यसिद्ध एवेति, न तस्य तद्विषयमर्थित्वं स्यात्—यथा प्रकाशात्मनः प्रदीपस्य प्रकाशाख्योऽर्थो नित्यसिद्ध एवेति, न तस्य तद्विषयमर्थित्वं भवति—अप्राप्ते ह्यर्थेऽर्थिनोऽर्थित्वं स्यादिति; तथार्थस्याप्यर्थत्वं न स्यात्; यदि स्यात् स्वार्थत्वमेव स्यात्; न चैतदस्ति; संबन्धिशब्दौ ह्येतावर्थी चार्थश्चेति; द्वयोश्च संबन्धिनोः संबन्धः स्यात्, नैकस्यैव; तस्माद्भिन्नावेतावर्थार्थिनौ। तथानर्थानर्थिनावपि;

प्रकटार्थविवरणम्

कत्वेऽपि कदाचिदुच्छेदो दृश्यते जले स्थित एव। तथा ब्रह्मात्मकस्य समासो[संसारो]च्छेदो भविष्यतीत्याशङ्क्याह—योऽपि जलवीचीति॥ ननु नास्त्येवाद्वैते तप्यतापकभावः, कथमयं प्रसङ्गः इत्याशङ्क्याह—प्रसिद्धश्चायमिति॥ अर्थी स्वर्गादिकामी; काम्यश्च स्वर्गादिरर्थः; तौ परस्परभिन्नौ दृश्येते इत्यर्थः। युक्तितोऽपि तयोर्भेदः सिद्ध इत्याह—यद्यर्थिन इति॥ अर्थिनोऽन्योऽर्थो नास्तीत्यत्र दूषणमुक्त्वार्थादन्योऽर्थी नास्तीत्यत्र दूषणमाह—तथार्थस्यापीति॥ तथैवास्त्विति न वाच्यमित्याह—न चैतदस्तीति॥ एकस्य विषयविषयिभावविरोधादित्यर्थः। किञ्च शब्दसामर्थ्यानुसारेणापि भेदो युक्त इत्याह—संबन्धिशब्दौ हीति॥ अर्थयते कामयत इत्यर्थी; तेनार्थ्यत इत्यर्थः। एव-

१. T, T[1], P and TM. स्वर्गकामी    २. TM. दूषणतोऽर्थी-

भाष्यम्

अर्थिनोऽनुकूलोऽर्थः; प्रतिकूलोऽनर्थः; ताभ्यामेकः पर्यायेणोभाभ्यां संबध्यते। तत्रार्थस्याल्पीयस्त्वात्, भूयस्त्वाच्चानर्थस्योभावप्यर्थानर्थावनर्थ एवेति—तापकः स उच्यते; तप्यस्तु पुरुषः—य एकः पर्यायेणोभाभ्यां संबध्यते—इति तयोस्तप्यतापकयोरेकात्मतायां मोक्षानुपपत्तिः; जात्यन्तरभावे तु तत्संयोगहेतुपरिहारात् स्यादपि कदाचिन्मोक्षोपपत्तिरिति॥

अत्रोच्यते—न, एकत्वादेव तप्यतापकभावानुपपत्तेः—भवेदेष दोषः, यद्येकात्मतायां तप्यतापकावन्योन्यस्य विषयविषयिभावं प्रतिपद्येयाताम्;

प्रकटार्थविवरणम्

मेतौ परस्परसंबन्धार्थद्वयविषयौ शब्दावित्यर्थः। तथाप्यर्थानर्थिनौ प्रतीतितो युक्तितश्च भिन्नावेवेत्यर्थः। अर्थादिशब्दार्थं विविनक्ति—अर्थिनोऽनुकूल इति॥ ननु तप्यतापकौ प्रक्रम्यार्थादिभेदनिरूपणमयुक्तमित्याशङ्क्याह—तत्रार्थस्येति॥ एवमद्वैतवादे विप्रतिषेधं मोक्षानुपपत्तिं चोक्त्वा स्वपक्षे मोक्षं संभावयति—जात्यन्तरभावे त्विति॥ तप्यतापकयोः वास्तवभेदे सति प्रकृतिगत एव बन्धः पुरुषेषु समारोप्यते; तयोरविवेकात्, विवेकाच्च बन्धसंबन्धहेत्वविवेकपरिहारान्मोक्षोपपत्तिरित्यर्थः। उक्तं हि—

"रूपैः सप्तभिरेवं बध्नात्यात्मनमात्मना प्रकृतिः।
सैव च पुरुषस्यार्थं विमोचयत्येकरूपेण॥" इति।

किमयं प्रसङ्गस्तत्त्वाभिप्रायेण, किं वा व्यवहाराभिप्रायेण? आद्यं प्रत्याह—नैकत्वादेवेत्यादिना॥ बिम्बस्थानीयस्य ब्रह्मण एकरसत्वात् तत्र तप्यतापक-

१. A. शब्दावेवेत्यर्थः
२. T, T¹, P and TM. भिन्नावित्यर्थः
३. शब्दं विविनक्ति
४. T. तस्य तावन्तौ
TM and A. तस्य तापकौ
५. T. तयोरपि चैका-
६. T. ब्रह्मविकारसत्त्वात्

